अखिलभारतीय—प्राच्यविद्यासम्मेलनम्
शतवर्षमहोत्सवग्रन्थमाला—७१

# क्षमादेव्याः कथामुक्तावली

प्रा. नन्दा पुरी

प्रधानसंपादकः
आचार्यः श्रीनिवासः वरखेडी
कुलगुरु

संपादकः
आचार्यः मधुसूदनः पेन्ना
संचालकः संशोधन—प्रकाशनविभागः



राष्ट्रहिताय संस्कृतम्

कविकुलगुरु—कालिदास—संस्कृत—विश्वविद्यालयः
रामटेकम्, जि. नागपुरम् (महाराष्ट्रम्)
तथा
न्यू भारतीय बुक कॉर्पोरेशन, नव देहली
2020

अखिलभारतीय–प्राच्यविद्यासम्मेलनम्
शतवर्षमहोत्सवग्रन्थमाला – 71

# क्षमादेव्याः कथामुक्तावली

प्रा. नन्दा पुरी

प्रधानसंपादकः
आचार्यः श्रीनिवासः वरखेडी
कुलगुरु

संपादकः
आचार्यः मधुसूदनः पेन्ना
संचालकः संशोधन–प्रकाशनविभागः



कविकुलगुरु–कालिदास–संस्कृत–विश्वविद्यालयः
रामटेकम्, जि. नागपुरम् (महाराष्ट्रम्)
एवं
न्यू भारतीय बुक कॉरपोरेशन, दिल्ली

| | | |
|---|---|---|
| शीर्षकम् | — | क्षमादेव्याः कथामुक्तावली |
| संकलनम् | — | प्रा. नन्दा पुरी |
| प्रधानसंपादकः | — | आचार्यः श्रीनिवासः वरखेडी<br>कुलगुरु, क.का.सं.वि., रामटेकम् |
| संपादकः | — | आचार्यः मधुसूदनः पेन्ना<br>संचालकः संशोधन–प्रकाशनविभागः<br>क.का.सं.वि., रामटेकम् |
| संपादकमण्डलम् | — | डॉ. दिनकर मराठे, क.का.सं.वि., रामटेक<br>डॉ. वीना गाणु, नागपुर. |
| प्रकाशनवर्षम् | — | २०२० |
| आवृत्तिः | — | प्रथमा |
| मूल्यम् | — | 480 |
| आय.एस.बी.एन. | — | 9788183154420 |
| मुखपृष्ठम् | — | श्री. उमेश पाटील, क.का.सं.वि., रामटेकम् |
| प्रकाशकः | — | कुलसचिवः,<br>कविकुलगुरु–कालिदास–संस्कृत–विश्वविद्यालयः,<br>प्रशासकीयभवनम्, मौदामार्गस्य, रामटेकम्. |

एवं

न्यू भारतीय बुक कॉरपोरेशन
२०८, द्वितीय तल, प्रकाशदीप बिल्डिंग,
४७३५/२२, अंसारी रोड, दरिया गंज,
नई दिल्ली – ११०००२
फोन नं. : २३२८०२१४, २३२८०२०९

The KK Sanskrit University does not hold any responsibility regarding the content, language, originality, Plagiarism or views expressed by the author of these centenary publication books. The respective author is solely responsible.

एस. के. आफॉसेट, दिल्ली

## PREFACE

It is indeed a matter of great pleasure and pride for Kavikulaguru Kalidas Sanskrit University, Ramtek to have this rarest opportunity of hosting the 50th session of All India Oriental Conference at Nagpur. This AIOC-50th session at Nagpur will be forever remembered by all as the year 2019 also happens to be the year of Centenary Celebration of AIOC. The premier objective with which the great scholars of yester years had contemplated and established this national academic event called All India Oriental Conference has been achieved through these years with scores of young scholars contributing significantly to the treasure house of knowledge through their valuable research work.

The research of yore and of the present should be properly recorded so as to make it easily available to all lovers of knowledge and wisdom in the years to come. With this objective, we have contemplated to commemorate the 100th year of this grand event of 50th session of AIOC by way of publishing 100 monographs on different subjects in four languages viz., Sanskrit, Hindi, Marathi and English. It is no doubt a herculean task but still worth of it, for the reason that these 100 monographs will inspire many young scholars to take upon a fresh study and research of the oriental subjects with more vigour and zeal.

The AIOC Centenary Publication Series includes wide variety of subjects like Literature, Language, Veda, Indian Philosophy, Sanskrit Grammar, Law, Children Literature, Yoga, Astronomy and Astrology, Ayurveda, Pali, Prakrit, Jain, Buddhism, Education, Library Science, Poetics, Aesthetics, and Indology. It also includes reprint of some rare texts of academic importance which have gone out of print are not easily available. We wish to mark this centenary celebrations with this series that connects the glory of the past and aspirations of future. I place on record my sincere gratitude to all the authors of these monographs who have kindly contributed to the richness of this

series.

I am confident that the books published in these series will definitely inspire the lovers of Oriental Learning in general and of Sanskrit Language and Literature in particular.

On this occasion, we have published a memorable book of all the speeches of Section-Presidents of all previous sessions of AIOC. It is indeed a very capacious addition to any collection. I with all respect thank two eminent scholars of our times - Prof. Gautam Patel, President and Prof. Saroja Bhate, General Secretary, the torch bearers of AIOC who have not only encouraged us in this venture but also made all efforts to provide these valuable historical speeches for us. I thank all executive members of AIOC and my colleagues of the varsity for making this event a grand success.

My words fall short in describing the painstaking efforts and scholarly commitment of my esteemed colleague Prof. Madhusudan Penna, local secretary of this session in bringing out this series.

I also take this opportunity to profusely thank Shri. Subhash Jain and Shri Dipak Jain, the proprietors of New Bharatiya Book Corporation, New Delhi for their enthusiastic approach and timely work with all precision and grace.

Let us all sanctify ourselves in the eternal flow of wisdom by reading these books and recommending these to others also!

सरस्वती श्रुतिमहती महीयताम्

Ramtek
10th January 2020

Prof. Shrinivasa Varakhedi
Vice Chancellor, KKSU

**Kavikulaguru Kalidas Sanskrit University**
**All India Oriental Conference**

**100th Year 50th Session**
**10th-12th January, 2020**

## Chief Patron
Hon'ble Nitin Gadkari
Minister of Road, Transport & Highways of India

## Patron
Prof. Shrinivasa Varakhedi
Vice Chancellor, KKSU, Ramtek

## AIOC President
Prof. Gautam Patel
Chairman, Sanskrit Seva Samiti, Ahmedabad.

## AIOC General Secretary
Prof. Saroja Bhate
Professor of Sanskrit (Retd.), Pune University, Pune

## AIOC Local Secretary
Prof. Penna Madhusudan
Dean, KKSU, Ramtek

## Additional Local Secretary
Dr. Harekrishna Agasti
Dr. Kalapini Agasti
Dr. Dinakar Marathe
Dr. Parag Joshi

## Organising Committee
Prof. C.G. Vijayakumar, Registrar (I/c) & Dean, KKSU, Ramtek
Prof. Nanda Puri, Dean, KKSU, Ramtek
Prof. Krishnakumar Pandey, Dean, KKSU, Ramtek
Prof. Laita Chandratre, Dean, KKSU, Ramtek
Dr. Ramachandra Joshi, Finance Officer, KKSU, Ramtek
Dr. Umesh Shivahare, Controller of Examination, KKSU, Ramtek
Dr. Dipak Kapade, Librarian, KKSU, Ramtek
Dr. Renuka Bokare, PRO, KKSU, Ramtek
Shri. Rajivranjan Mishra, Technical Head, KKSU, Ramtek
Shri. Pravin Kalambe, Security Officer, KKSU, Ramtek

## Reception Committee

Prof. Shrinivasa Varakhedi, Chairperson Reception Committee & VC, KKSU
Parampujya Govindagiri Swamiji, Rishikesh
Prof. P.T. Chande, Former VC, KKSU
Prof. Uma Vaidya, Former VC, KKSU
Prof. Vijendra Kumar, VC, National Law University, Nagpur
Prof. Rajnish Shukla, VC, National Hindi University, Wardha
Prof. Vinayak Kane, VC, RTM Nagpur University, Nagpur
Shri. Krupal Tumane, Member of Parliament
Shri. Girishji Vyas, Member of Legislative Council
Shri. Chandrashekhar Bawankule, Guardian Minister, Nagpur
Prof. Vishram Jamdar, Director, VNIT, Nagpur
Dr. Bhushankumar Upadhyay, Commissioner of Police, Nagpur
Shri. Vijay Phanshikar, Editor, The Hitavada, Nagpur
Shri. Rajkumar Tirpude, Tirpude Group of Insitutions, Nagpur
Shri. Mohabbat Singh, Tuli International, Nagpur.
Shri. Chandragupta Varnekar, Principal Retd., Nagpur
Shri. Suresh Sharma, Baidyanath, Nagpur
Shri. Prabhakar Rao Mundle, Dharampeth Educational Institutions, Nagpur

## Executive Committee

Prof. G. U. Thite,
Vice President

Dr. Brijeshkumar Shukla,
Treasurer

## Members

Dr. Rajni Satish Chandra Jha
Prof. Shukla Ramakant
Dr. Behera Ranjit
Dr. Meena Shukla
Dr. Nirmala Kulkarni
Dr. Roy Gauri Nath
Dr. Tripathi Uma Rani
Dr. Pushpa Jha
Dr. Basu Ratna
Dr. Mithilesh Kumar
Prof. Singh Prasoon Dutta
Shri. Mishra Arun Ranjan
Dr. Mishra Baidyanath
Dr. Tripathi Rajendra Rasraj
Shri. Harshdev Madhav
Dr. Kamdev Jha
Dr. Parinita Deshpande
Dr. Jha Udayanath (Ashok)

# अनुक्रमणिका

# प्रस्तावना

वेदकालादारभ्य विदुषिभि: संस्कृतसाहित्यं समृद्धं कृतम्। वैदिकालेऽपालाघोषासदृशा: ब्रह्मवादिन्य आसन्। विद्वत्सभायां याज्ञवल्क्यं प्रश्नान् पृच्छन्ती गार्गी अलौकिकप्रतिभाशालिनी विद्वद्वरेण्या चासीत्। विज्जिकां मामजनता दण्डिना सर्वशुक्ला सरस्वतीति कथमुक्तमिती सगर्व पृच्छन्तीं विज्जिकां को न जानाति। सरस्वत्या विरचितस्य लक्ष्मीस्वयंवरनाट्यप्रकारस्य प्रयोग: इन्द्रसभायां जात इति कालिदासेनोल्लिखितम्। आधुनिककालेऽपि संस्कृतसाहित्ये स्त्रिप्राधान्यं दृश्यते इत्यत्र नास्ति शङ्कालेश:। एतासु प्रतिभासम्पन्नासु स्त्रिजनेषु पं. क्षमा राव महोदया महत्त्वपूर्णं स्थानमादधति। षण्महाकाव्यानि त्रय: कथासङ्ग्रहा:, लघुकाव्यद्वयमिति तस्या: ग्रन्थविस्तार:। एतावद्ग्रन्थराशिं विरचय्य संस्कृतसाहित्यमलङ्कृतमेताभि:।

अस्मिन्प्रकल्पे क्षमादेव्या: कथासाहित्यस्याध्ययनं समीक्षणञ्च कृतमस्ति। तस्या: साहित्यमिदानीं दुष्प्राप्यं जातम्। अद्यावधी: न केनापि क्षमादेव्या: काव्यग्रन्थानां पुन:प्रकाशनं कृतम्। अत: शनै: शनैरेतानि काव्यरत्नान्यनुपलब्धानि जातानि। आधुनिककथातन्त्रेण रचितमिद कथासाहित्यं छात्राणां संशोधकांना संस्कृतानुरागिणांञ्च कृते उपालब्धव्यमिति मनसि निधायायं प्रयास: कृत:। प्रा. राधावल्लभ त्रिपाठी महोदयै: क्षमादेव्या: समग्रसाहित्यस्य समीक्षणं हिन्दी भाषया कृतं वर्तते। परं तत्र मूलग्रन्थानां समावेशो नास्ति। अत: मूलकथाग्रन्थै: सह संस्कृतेन समीक्षणमित्यस्य प्रकल्पस्य वैशिष्ट्यम्। मूलकथा: कथासारं समीक्षणञ्चैतेन क्रमेण कथाग्रन्थानां समीक्षणमत्र विधास्यते।

क्षमादेव्या: कथामुक्तावल्या: सम्पादनं मयैव २०१२ मध्ये कृतम्। परं ग्रन्थेऽस्मिन् कथानां समीक्षणं केवलं परिचयात्मकमेवासीत्। मराठीभाषया कृतमासीदिदं समीक्षणम्। विंशतिशतकोत्तराष्टादशतमे वर्षे (२०१८) षट् कथा: मराठीभाषयानूदिता आसन्।

**क्षमादेव्याः जीवनपरिचयः**

अष्टादशशतकोत्तरनवतितमे वर्षे चतुर्थ–दिनाङ्के पुण्यपत्तने क्षमादेवी जनिमलभत। बाल्ये एव तस्याः पितृछत्रं कठोरविधिनापहृतम्। अतः शिक्षणार्थं गुजरातप्रान्ते पितृव्यस्य गुहे तया गन्तव्यमापतितम्। मूलतः महाराष्ट्रीया सा गुजरातनिवासिनी जाता। विवाहानन्तरं सा पुनर्महाराष्ट्रं प्रत्यागता। मुम्बापुर्याः डॉ. राघवेन्द्र राव इत्यनेत सह तस्याः विवाहः जातः। बुद्धिमत्याः तस्या अध्ययने विवाहेन न प्रत्यूहः जातः। संस्कृतपाण्डित्यं तु तया परम्परया प्राप्तमासीत्। शङ्कराख्यः तस्य पिता संस्कृतपाण्डित आसीत्। आङ्ग्लभाषप्राभुत्वमपि तया लिलयाधिगतम्। आङ्ग्लभाषया तया नाटकान्यपि लिखितानि। तेषां नाटकानां प्रयोगा अपि जाताः। आङ्ग्लभाषायाः प्रभावादेव लघुकथालेखनं तया प्रारब्धम्। आधुनिकतन्त्रेण समकालीनसमस्या आधारीकृत्य संस्कृतेन लघुकथालेखनं कुर्वतीयं प्रथमा लेखिका।

गुजरातप्रदेशे वासं कुर्वत्या तया सत्याग्रहस्यान्दोलनं समीपतः प्रत्यक्षीकृतम्। परं तत्र सक्रियं भागं ग्रहीतुं महात्मागान्धीमहोदयस्यानुमतिर्न लब्धा। आङ्ग्लानामत्याचारेण पीडितान् भारतीयान् दृष्ट्वा द्रुतचित्तया क्षमादेव्या लेखनमारब्धम्। तस्याः कृते प्रेरणास्रोतरूपमिदमान्दोलनं संस्कृतलेखनाय। अयोध्यास्थितसंस्कृतकल्याणसंस्थया एकोनविंशति–शतकोत्तराष्टत्रिंशत्तमे वर्षे क्षमादेवी पण्डितेत्युपाधिना सम्मानिता।

**क्षमादेव्याः संस्कृतसाहित्यम् –**

(१) **सत्याग्रहगीता** – सत्याग्रहस्य आन्दोलने आङ्ग्लैः कृतं भारतीयानां क्रौर्यपूर्णं पीडनं दृष्ट्वा व्यथितहृदयया क्षमादेव्या 'सत्याग्रहगीता' नामाष्टादशाध्याययुतं महाकाव्यं रचितम्। अस्मिन् ग्रन्थे सत्याग्रहस्यारम्भतः एकोनविंशतिशतकोत्तरैकत्रिंशत्तमवर्षपर्यन्तं घटितानां प्रमुखघटनानां वर्णनं कृतमस्ति।

(२) **उत्तरसत्याग्रहीता** – महाकाव्यमिदं तिरुवेलपुरस्य भिक्षोः निर्मलानन्दस्य विज्ञप्त्यनुसारं रचितम्। निर्मलानन्देन गान्धीमहोदस्य

सत्याग्रहमाश्रित्याप्रकाशितसंस्कृतमहाकाव्यानि प्रेषयितुं प्रार्थिता पण्डिता क्षमादेवी। तेषु महाकाव्येषु क्षमादेव्या अपि महाकाव्यं भवत्विति तस्य इच्छासीत्।[१] तदनुसारं पञ्चमासेषु क्षमादेव्या सप्तचत्वारिंशदध्यायस्य महाकाव्यं रचितम्। अस्मिन्महाकाव्ये १९८९ श्लोकाः सान्ति। संपूर्णदेशे गान्धीमहोदयस्य दाण्डीयात्रायाः प्रभावः, वृन्दावनयात्रा, शान्तिनिकेतनयात्रा, गान्धी–जिन्नाचर्चा इत्यादीनां घटनानां वर्णनतम् कृतम्। ऐतिहासिकदृष्ट्या महत्त्वपूर्णामिदं महाकाव्यम्।

(३) **स्वराज्यविजयः** – महाकाव्यमिदं उत्तरजयसत्याग्रहगीता नाम्नापि प्रसिद्धम्। अस्य महाकाव्यस्य ५४ अध्यायाः सन्ति। देशस्य विभाजनविषये गान्धीजिन्नाचर्चातः गान्धीमहोदयस्य निर्वाणपर्यन्तं महत्त्वपूर्णाः घटना आस्मिन्महाकाव्ये वर्णिताः।

(४) **विचित्रपरिषद्यात्रा** – ख्रिस्ताब्दस्य १९३९ मध्ये त्रिवेन्द्रमित्यत्र राष्ट्रियप्राच्यविद्यापरिषद् आयोजितासीत् तस्याः व्यङ्ग्यपूर्णं वर्णनमस्मिन् काव्ये कृतमस्ति।

(५) **शङ्करजीवनाख्यायीनम्** – शङ्कर पाण्डुरङ्ग पण्डित इति क्षमादेव्याः पितुर्नाम। संस्कृतस्य गभीराध्ययनेन प्राप्तपाण्डित्येन कुलनाम यथार्थतां नीतं तेन। संस्कृतपण्डितानां विषये तस्य मनस्यत्यन्तादर आसीत्। अतः तान् गृहमामन्त्र्य सः सत्करोति स्म। प्रकृत्या बुद्धिमती क्षमादेवी संस्कृतविदुषां पाण्डित्येन सुसंस्कारिता। संस्कृताध्ययनस्य पैतृकं धनमग्रे नयन्ती सा स्वप्रतिभया साहित्यनिर्मितिं कर्तुमपि समर्था जाता। अस्मिन् ग्रन्थे क्षमादेव्या स्वपितुश्चरितमनुष्टुभछन्दसि वर्णितमस्ति। अस्मिन् ग्रन्थे १७ उल्लासाः तथा ८४० श्लोकाः सन्ति।

सन्तजनेषु प्रीतिः भाक्तिश्च क्षमादेव्या अन्यदेकं महत्त्वपूर्णं वैशिष्ट्यम्। अत एव तया महाराष्ट्रेषु सम्भूतान् सन्तजनानधिकृत्य परमभक्त्या महाकाव्यानां रचनाः कृताः। श्रीरामदासचरितं, ज्ञानेश्वरचरितं तुकारामचरितंश्चैतानि महाकाव्यानि रचितान्याङ्ग्लानुवादेन सह प्रकाशितानि च।

(६) **ज्ञानेश्वरचरितम्** – महाकाव्येऽस्मिन्नष्टसर्गाः ४०६ श्लोकाश्च सान्ति। ज्ञानेश्वरस्य पूर्वपुरुषाणां वर्णनेन महाकाव्यस्य प्रारम्भः भवति। ज्ञानेश्वरस्य समाधिग्रहणपर्यन्तं अनेकानां महत्त्वपूर्णघटनानां वर्णनं रसपूर्णवाण्यात्र कृतमस्ति। अस्मिन्महाकाव्ये शार्दूलाविक्रीडित – उपजाति – मालिनी – शिखरिण्यादिनां वृत्तानां योजना क्षमादेव्या कृता।

(७) **रामदासचरितम्** – त्रयोदशसर्गेषु स्वामी–समर्थरामदासस्य जीवनचरितं वर्णितमस्ति। आस्मिन्महाकाव्ये ६१८ श्लोकां सान्ति। अत्रापि प्रथमं रामदासस्य वंशपरम्परा वर्णिता। रामदास्य बालक्रीडा, शिक्षा, विवाहवर्णनं वैराग्यम्, पञ्चवटीनिवासः तीर्थाटनं रामदास–तुकाराममेलनं शिवाजीमहाराजेन सह रामदासस्य मेलनमित्यादिनां प्रसङ्गानां वर्णनमास्मिन्महाकाव्ये कृतमस्ति।

(८) **तुकारामचरितम्** – महाराष्ट्रप्रदेशिषु समुत्पन्नेषु सन्तजनेषु दृढप्रीत्या क्षमादेव्या तेषां जीवनचरितमुपलक्ष्य रचितेष्वेकं तुकारामचरितम्। चतुःशताधिक – पञ्चत्रिंशत् श्लोकेषु रचितं नवसर्गात्मकमिदं महाकाव्यम्। जन्मविवाहवर्णनादन्तरं ईश्वरदर्शनं, वाणिज्यविनाशः, आध्यात्मिकोत्कर्षः तुकारामेण सह पाण्डुरङ्गस्य भोजनवर्णनं, तुकारामशिवाजीमहाराजमलेनं, वैकुण्ठगमनवर्णनमित्यादयः महत्त्वपूर्णप्रसङ्गाः वर्णिताः।

(९) **मीरालहरी** – खण्डकाव्यमिदं। शार्दूलविक्रीडितवृत्ते रचितानि १३५ पद्यानि सन्त्यत्र। मीरायाः बाल्यं, दिव्यमलौकिकं सौन्दर्यं, बालविवाहः, श्रीकृष्णेन सह मीरायाः तन्मयीभावः, स्त्रीस्वभावस्य मार्मिकं वर्णनं, मिरायाः पत्युरन्तर्द्वन्द्वं क्षमादेव्या सुष्ठु चित्रिम्। साहित्यरत्नवच्चकासते इदं काव्यम्। लीलया नानालङ्काराणां योजनं पदलालित्यं भावसौन्दर्यमित्यादिभिः काव्यविशेषैर्विराजते काव्यमिदम्।

(१०) **ग्रामज्योतिः** – अनुष्टुभछन्दसा रचिताः तिस्रः कथाः सन्त्यत्र। रेवायाः कथा, कटुविपाकः तथा वीरभा। अस्य कथासङ्ग्रहस्य वैशिष्टयमेतद्यत् सत्यघटनाश्रितोऽयं कथासङ्ग्रहः। स्वातन्त्रसंग्रामसमये

कस्तुरबा गान्धी महोदयया सह गुजरातप्रदेशस्य ग्रामेष्वटन्त्या क्षमादेव्या या स्त्रीशक्तिः साक्षात्कृता तस्याः प्रभावेन रचिता इमाः कथाः। स्वातन्त्र्यप्राप्त्यनन्तरमेतासां नामान्यापि न स्युर्कुत्रचित् परं क्षमादेव्याः लेखनेन एताः कथानायिका अमराः जाता। सत्यघटनाश्रिता एताः कथाः।

(११) **कथापञ्चकम्** – ग्रन्थनामानुसारं पञ्चकथानां सङ्ग्रहोऽयम् १९३२ मध्ये रचितः। अनुष्टुभछन्दसि रचितेऽस्मिन् कथासङ्ग्रहे सामाजिकसमस्याश्रिताः कथाः सन्ति। कथानां विस्तृतं विवरणमग्रे भविष्यत्येव।

(१२) **कथामुक्तावली** – पञ्चदश गद्यकथानां सङ्ग्रहोऽयम्। भारतस्य विभिन्नप्रदेशेषु निवसन्तः सामान्यजनाः नायकनायिकारूपेणात्र चित्रिताः। आधुनिकविषयाः पुरातनसमासप्रचुरगद्यशैली चेति कथासङ्ग्रस्यास्य वैशिष्ट्यम्। विधवानां परित्यक्तांना जीवनस्य यथार्थं वर्णनमत्र वर्तते स्त्रिपात्राण्यत्र बहुविधानि चित्रितानि। कथासङ्ग्रहस्यास्य विस्तृतं विवरणमग्रे भविष्यत्येव। अतः विस्तारभयादत्र न कृतम्।

## कथासाहित्येतिहास –

भारतः कथाप्रियदेशः। वैदिकवाङ्मये ऋग्वेदादिग्रन्थेषु कथायाः पूर्वरूपं दृश्यते। यथा वृत्रवधकथा[२], पुरूरवा–उर्वशी संवादकथा[३], शुनःशेपकथा[४], श्वेतकेतुकथा[५] रामयणमहाभारग्रन्थौ कथाभाण्डागारौ। पुराणानि तु कथारूपाण्येव। हितोपदेशपञ्चतन्त्रसदृशाः कथाग्रन्थाः विश्वविख्याताः। अनेकासु विदेशभाषास्वनूदिताश्चैते कथाग्रन्थाः। परं कथा शब्दः महाभारतादनन्तरं रूढः। कथावैदिकवाङ्मये सूक्तं गाथाख्यानमन्वाख्याननाम्ना प्रसिद्धा। महाभारतादनन्तरं बौद्धसाहित्ये कथा शब्दस्य प्रयोगः अर्थकथा (अट्टकथा) इत्यास्मिन्नर्थे कृतः। अत्राप्यर्थविवेचनं व्याख्येत्यर्थः। उपदेशात्मकगुणकथेत्यर्थोऽप्यनन्तरं रूढः। जैन नीतिकथाः ज्ञातधर्मकथा नाम्ना प्रसिद्धा। 'प्रबन्धकल्पनां स्तोकसत्यां प्राज्ञाः कथां विदुः। जैनानामुपदेशात्मकथाः धर्मकथानाम्ना प्रसिद्धाः।

भामहादिभ्य: विश्वनाथपर्यन्तं बहुभि: काव्यशास्त्रज्ञै: कथाया: स्वरूपं लक्षणञ्च स्पष्टीकृतम्। रसालङ्कारध्वन्यादिनां प्रदीर्घा चर्चा कृता। परं कथालक्षणेऽनुदारा: दृश्यन्ते एते काव्यज्ञा:। श्रव्यकाव्येषु गद्यकाव्यान्तर्गतकथाप्रकार: एतैर्चचित:। तत्रापि बाणभट्टस्य हर्षचरितं कादम्बरी चेतिग्रन्थद्वयं पुरतोऽवस्थाप्य गद्यवाङ्मयस्याख्यायिका कथेति प्रकारद्वयमुक्त्वा लक्षणान्यपि दत्तानि। ऐतिहासिकवस्त्वाश्रिताख्यायिका काल्पनिकवस्त्वाधारिता च कथा।

संस्कृतानुकूलश्रव्यशब्दार्थपदवृत्तिना।
गद्येन युक्तोदात्तार्था सोच्छ्वासाख्यायिका स्मृता।।
न वक्त्रापरवक्त्राभ्यां युक्ता नोच्छ्वासवत्यपि।
संस्कृतासंस्कृता चेष्टा कथापभ्रंशभाक्तथा।।[६]

आनन्दवर्धनेन परिकथासकलकथाख्यायिकाकथाचैते गद्यप्रकारा: वर्णिता:। कथाख्यायिकयोर्विवेचनं तेन 'रसबन्धोक्तमौचित्यमनुसर्तव्यमित्युक्त्वा रसौचित्यस्य विचार: कृत:।[७] विश्वनाथेन कथाया: गद्यस्वरूपं तूक्तं परं क्वचित्वक्त्रापरवक्त्रकं क्वचिदार्या च कथानिबन्धने स्वीकृता[८] हेमचन्द्रेण गद्यस्य सर्वाधिकप्रकारा: सोदाहरणं स्पष्टीकृता:। लघुकथया सह साधर्म्यं भजते खण्डकथा 'मध्यादुपान्तो वा ग्रन्थान्तरप्रसिद्धमितिवृत्तं यस्या वर्ण्यते सेन्दुमत्यादिवत् खण्डकथा।[९] अत्र कथाया: लघुत्वं स्वीकृतं परं ग्रन्थान्तरविनिविष्टा कथेत्युक्त्वा कथाया: स्वतन्त्ररूपं न लक्षितम्। एवं काव्यशास्त्रविद्भि: कृतलक्षणैराख्यायिकाकथैतयोर्मध्ये भेदकतत्त्वमस्पष्टमिति भाति। आख्यायिकोच्छ्वासादिना वक्त्रापरवक्त्रादिना च युक्ता। कथा तद्विरहिता। केवलमाख्यायिकाया: कथावस्तुन: ऐतिहासिकत्वं कथायाश्च काल्पनिकत्वं स्पष्टम्।

एकोनविंशतिशतके आङ्ग्लसाहित्ये Short story इत्ययं कथाप्रकार: प्रसिद्धिं गत:। एडगर ॲलन पो इत्ययं लघुकथाया: जनकरूपेण सर्वै: स्वीकृत:। अष्टादशशतकोत्तर-द्वात्रिंशत्तमे वर्षे तेन प्रथममेतेन कथातन्त्रेण

कथा रचिता। तदनन्तरं तेनैतस्य कथाप्रकारस्य लक्षणमपि दत्तम्। Unity of action and unity of impression अल्पपात्रप्रसङ्गैस्संस्काराणामेकत्वमिति एतस्य सारमिति वक्तुं शक्यते। एतेन कथानकस्य लघुत्वमपि स्पष्टं जातम्। तत्पश्चाद्बहुभिः पाश्चात्यसाहित्यिकैः लघुकथायाः लक्षणं दत्तम् विंशतिशतके बहुभिः मराठीभाषाविद्भिः हिंदीकथाकोविदैः संस्कृतकथातज्ज्ञैश्च लघुकथायाः लक्षणे प्रयासः कृतः। एतद्विषये 'संस्कृत साहित्यातील लघुकथा' नाम मम पुस्तके प्रदीर्घचर्चा कृता। अतः विस्तारभयादत्र संक्षेपेण संस्कृतकाव्यशास्त्रज्ञानामाधुनिकसाहित्यविदां लघुकथायाः लक्षणस्य विचारः कृतः।

संस्कृतकथानामाधुनिकलघुकथानाञ्च स्वरूपं मनासि निधाय लघुकथायाः लक्षणं मयात्र दत्तम्।

भवेल्लघुकथा याऽसौ नैव दीर्घा प्रमाणतः।
वैविध्यपरिपूर्णस्य जीवनस्यैकदेशिका।।
भाववैविध्यसंश्लिष्टा चिरं मननकारिका।
अल्पपात्रप्रसङ्गैर्या प्राप्तलक्ष्या च रञ्जिका।।
क्वचिद्गद्ये क्वचित्पद्ये क्वचित्संवादमिश्रिता।।[१०]

क्षमादेव्याः कथाविश्वमवगन्तुमावश्यकमस्ति लघुकथाया आधुनिकं स्वरूपज्ञानम्। तया कथापञ्चकम् नाम कथासङ्ग्रहे स्पष्टं कृतमासीद्यद् एताः कथाः मया प्रथममाङ्ग्लभाषया रचिताः। अनन्तरमेताः आधुनिककथातन्त्रेण संस्कृतेऽनूदिताः। 'ग्रामज्योतिकथासङ्ग्रस्य प्रस्तावनायामुक्तमस्ति – 'In 1933 she wrote five short stories in verse and called the collection 'Kathapanchakam'. They are a unique contribution to Sanskrit literature because they are written in modern western technique and based on Indian life and problems of the day.' (Introduction of Gramjyoti, page iii, iv)[११]

कथापञ्चकस्य पुरोभागे क्षमादेवी वदति – 'All the stories contained in this book were originally written in English, three of which

have already been published in an English Journal. The object of my translation them into Sanskrit was two fold. Firstly to Popularise the ancient language which has undoubtedly a greater vocabulary and other where withals of expression than any language. Secondly, I was impelled by the desire of presenting short stories with modern technique in this language. Oceans of fables and tales have been written in Sanskrit, but none of them fulfill the requirements of a modern short story, namely, one main incident, one or two predominating characters, minor incidents culminating in a climax, suspense and finally the denouement. The last of these essentials being arrived at the story must end.[१२]

अल्पपात्रैरुत्कण्ठावर्धकप्रसङ्गैश्च कथानकस्य परमोत्कर्षः अन्ततोगत्वा विस्मयचकितघटनया कथायाः समाप्तिरिति क्षमादेव्याः कथावैशिष्ट्यम्। यथा कथापञ्चकस्य दन्तकेयूरकथायामारम्भे पत्न्यैराधिकायै दत्तस्य वंशपरम्परयागतस्य दन्तकेयूरस्योल्लेखः, होलिकोत्सवनिमित्तेन गणोस्तस्य पुत्रस्य च रङ्गसेकार्थं गमनम्, गमनसमये पुरातनोष्णीषेणोपहास्यतां गच्छामीति चिन्तयित्वा तस्यौदासिन्यं, द्यूतक्रीडासमये कुसीदस्य रङ्गोर्हस्ते पत्न्याः दन्तकेयूरं दृष्ट्वा तस्यावाच्यवचनानि च श्रुत्वा शङ्काकुलितस्य मद्यपानेनोत्तस्य च गणोर्गृहमागत्य, क्रोधेन पत्नीताडनं, गणोर्नूतनोष्णीषार्थं मातुः दन्तकेयूरविक्रयणमिति गणोर्बालकेन कृतरहस्योद्घाटनं पश्चात्तापदग्धस्य गणोर्विलाप अत्र कथानकस्य परमोत्कर्षः। कथान्ते गणोर्पिशाचताडनेन राधिकायाः मृत्युरिति विस्मयकारिणी घटना। एवं सर्वाः कथा रेतेनाधुनिकलघुकथातन्त्रेण रचिताः।

## कथामुक्तावली

कथामुक्तावलीति कथासङ्ग्रहोऽयं प्रौढगद्यशैल्या विरचितः पञ्चदशकथानां सङ्ग्रहः। अस्य ग्रन्थस्य रचना क्षमादेव्या प्रायः जीवनस्य अन्तिमपर्वणि कृतेति दृश्यते। भाषाप्रागल्भ्यं प्रौढत्वञ्चास्मिन्ग्रन्थे दृश्यते।

लघुकथाया आधुनिकतन्त्रेण विरचिताः कृताः कथाः। सामाजिकविषयेषु क्षमाया अधिका रुचिः। प्रायः स्त्रीकेन्द्रीकथा एताः। स्त्रिणां सामाजिकसमस्या आश्रित्य रचिताः एताः कथाः। यथा विधवोद्वाहसङ्कटमिति कथा बालविधवानां सामाजिकस्थितिदर्शिका। परित्यक्तेति कथा स्त्रीणां निरपत्यतादुःखं वर्णयति। तथैव पाखण्डीसाधूनां समाजे प्रभावः अन्धश्रद्धा प्रभावेण च नायिकायाः दुरवस्था वर्णितास्त्यत्र।

नायिकानां मानसिकमान्तर्द्वन्द्वं वर्णयितुं समर्थाऽस्ति क्षमादेवी। तापसस्य पारितोषिकमित्यस्यां कथायां मरणासन्न पत्युः सेवां कुर्वती उर्मिला न जानाति तस्या पतिः रात्रिमपि नयति वा न वा। तस्याः मनोव्यथा सुष्ठु चित्रिता क्षमा देव्या। एवं बह्वः कथाः स्त्रिकेन्द्रिता एव दृश्यते। नजमदिलेलः मत्स्यजीवी केवलमिति द्वित्राः कथा एव नायकाधिष्ठिताः। कथानां विश्लेषणमग्रे भवत्येवेति कृत्वात्र विस्तारः न कृतः। केवलंमस्य कथासङ्ग्रहस्य स्वरूपं दर्शमितुमेवात्र प्रयासः कृतः।

क्षमायाः गद्येन लिखित एष एक एव कथासङ्ग्रहः। अन्ये ग्रन्थाः पद्येन रचिताः तत्रापि बाहुल्येनानुष्टुभछन्दसः प्रयोगो दृश्यते। मीरालहर्यां शार्दूलविक्रीडितवृत्तं चितं क्षमादेव्या। तुकारामचरितं बाहुल्येनोपजातिवृत्ते निबद्धम्। अत्र तु दण्डिबाणभट्टादिनां गद्यसाहित्यिकानां प्रौढगद्यशैल्यामाधुनिकलघुकथातन्त्रेण स्त्रिणां विषये सामाजिकविषयानाश्रित्य लिखिताः लघुकथा इति कथामुक्तावल्याः वैशिष्ट्यम्।

## सन्दर्भसूचिः


(१) क्षमादेवी राव – पृ. ४१

(२) ऋ– १–३२

(३) ऋ – १०– ९५

(४) ऐ.ब्रा.पं.– ३.१३–१५

(५) छान्दो.उप.खं. – ६.१–१६

(६) काव्या. १–२५, २८

(७) ध्व.लो. ३–८, ९ वृत्तिः
(८) सा.द. ६.३३२, ३३३
(९) का.शा.अ. ८
(१०) सं.सा.लघु., पृ. ७२
(११) **ग्रामज्योतिः –** P. iii, iv
(१२) **कथापञ्चकम् –** Foreword by kshama Rao



# १. प्रेमरसोद्रेकः

'मा स्म भैषीः पितामह, मा स्म भैषीः। नाहं शिशुरस्मि। त्रयोदशवर्षीयाद्यास्मि खलु। समर्थास्मि रक्षितुमात्मानम् ' इति जगादास्मानाम्नी बालिका काचित्।

'किन्तु वत्से! दिवसोऽवसितप्रायः। सूर्यास्तमनं चेदानीमचिराद्भविष्यति।'

'पितामह! क्षेत्रबटवे चिरव्यवसायिने किचिद्विश्रान्तिं दातुमिच्छामि। आभानूदयान्मेषव्रजं पालयन् कृत्स्नं दिनं तिष्ठत्येष क्षेत्रे। तत्र गत्वा मेषेभ्य ईषद्दीर्घतरं चरितुमवकाशमपि दास्यामि। ततश्च मेषयूथं गोष्ठकं नीत्वा द्वारं पिधाय च शीघ्रमेव पुनरागमिष्यामि।'

'यातु यथेच्छम्। आत्मानं रक्षितुमलमस्ति सा। नास्त्येषा स्तनन्धयी।' इत्यभाषीत् कृषीवलस्य वृद्धा भार्या।

'अये मा विस्मर यत्तपस्विन्या हामिदयायममूल्यनिधिरित्यावयोः सर्वथा विश्वस्याजन्मतो रक्षणार्थमावाभ्यां समर्पितासीद्दारिकेयं किल। पितुर्गेहे न कदापि सा गच्छेदिति हामिदया निर्दिष्टं मृतेः पूर्वम्। अपि नाम वत्सायाः पितेहायात्। हामिदा गर्भिण्यासीदित्यपि स न व्यजानात्।' इति स्थविरेण प्रत्युक्तम्।

उपरि निर्दिष्टः संलापः कयोश्चिद्वृद्धदम्पत्योः कश्मीरेषु कस्मिंश्चिद् ग्रामे पान्पुरनामनि कृतावासयोर्मध्ये समवर्तिष्ट। तदाश्रयार्थमागता हामिदाभिधा काचिदङ्गना परित्यक्ता पत्येति षण्मासान् स्वगेहे ताभ्यां निवासितासीत्। वर्षार्धोत्तरं सा प्रासूत कन्यामेकाम्। द्वादशदिनान्तरे च तां स्वपालकाभ्यां समर्प्य प्राणाञ्जहौ। सा च बालिका मातृप्रेमामृतरसानभिज्ञा दम्पतिभ्यां प्राणनिर्विशेषं लालिता, सप्रेम संवर्धिता च पौत्रीनिर्विशेषम्। सेयं सरोजलोचना कुन्दकुड्मलदन्तपङ्क्तिः प्रवालाधरा चञ्चलालका शिरीषकुसुमकोमला शारदकौमुदीव रुचिरा धैर्यशीलापि मृदुवचना, धीरापि स्थिरमतिः स्नेहनिर्झरसंप्लुता दमयन्तीव परदमनशीला क्षमातलागता सुरसुन्दरीव कमनीया कृषीवलस्य क्षेत्रादिकार्येषु मुदा

प्रयस्यन्ती सुखमास्त। कश्मीरीयाणामितरासां बालिकानामिव पान्पुरपल्लिका सुपरिचितासीत्तस्या अपि। विलक्षणोऽभूत्तस्या अनतिक्रान्तशैशवाया अपि स्वान्तर्बोधः किल। भाविविषयं पूर्वमेव सहजकल्पबुद्ध्या सा व्यजानात्, न च कदापि लुप्तधैर्यासीत्। दारिकामिमां सकृदेवावलोक्य तदीयहृदयङ्गमगुणरत्नसम्पत्तिं जनः क्षणादेवोपलक्षितवान्। जायापती स्थविरौ. बालिकेयमतिशयितप्रेम्णानवरतं सेवते स्म। प्रतिदिनं परिणतवयस्केन कृषीवलेन सार्धमस्मा मेषव्रजं रक्षितुं क्षेत्रं याति स्म। परमद्य सन्धिवातकारणाद् गेहान्निर्गन्तुं नाशकद्वृद्धः। यदा यदा हि स स्तोकमात्रमप्यस्वस्थोऽभूत्तदा तदा वत्सेयं मृदुवचसा तस्य बहिर्गमनमरुणत्। क्षेत्रबटुं विश्रमयितुं तावदहमेव क्षेत्रं यास्यामीत्यभ्यधात् पुनः सा सनिश्चयम्, जोषं स्थितस्य पितामहस्यानुमतिर्लब्धा मयेति च सीवनकर्ममञ्जूषामादाय निर्जगाम मन्दिरात् । शैशवे मातामह्या मुखादाकर्णितां निद्रागीतिकां मन्दं मन्दमध्वनि गायन्ती क्षेत्रं प्रति सा प्राचलत् ।

अपराह्णसमये तस्मिन् मृदुलहैमन्तार्करश्मिभिर्विस्तीर्णशालिक्षेत्रं तप्तसुवर्णसवर्ण परितो विरेजे । निरभ्रं निःशेषतो गगनतलं बृहत्कासार इव समलक्ष्यत । गन्धवाहोऽपि मान्द्यशैत्यसौरभ्ययुतो विशेषतो बभूवाह्लादकः । नचिरादस्मा मार्गवर्ति पुरातनमार्तण्डसुरमन्दिरमतिचक्राम । विध्वस्तं देवायतनमिदं क्रूरजाल्मानामवस्कन्दाद्रक्षितुमिव भगवान्मरीचिमाली स्वरश्मिजालं परितः प्रसारयामास । प्राक्तनस्यास्य देवालयस्यान्तर्गताङ्गणे चित्रविचित्रच्छायाचित्राणि विच्छिन्नस्तम्भानां दर्शं दर्शं दारिका किञ्चित्कम्पमाना प्रावारकेण कमनीयावंसौ समाच्छायामास । ''अलं भिया । प्रतिच्छाया एवैताः'' इत्यात्मानं सस्मितमाश्वास्य सा क्षेत्रं प्रति तत्वरे। तस्याश्च स्निग्धकोमलमाननकमलं शीतमरुता प्रफुल्लतां ययौ । नचिरात्सा क्षेत्रमाससाद । पितामहस्य मेषयूथं शाद्वले तृणं भक्षयत् सुखमास्त । जृम्भमाणं क्षेत्रबटुमभ्युपेत्य साऽब्रवीत्सस्मितम् । ''याहि गेहम् । श्रान्तोऽसि क्षुत्क्षामकण्ठश्च । मेषरक्षणं स्वयं करिष्यामि । सूर्यास्तमने च तान् गोष्ठकं नेष्यामी'' ति ।

''कथं नाम भवतीमेकाकिनीमत्र विजने देशे विसृज्य गच्छेयमि' ति माणवकेन मृदुगिरा सविरोधं प्रत्युक्तम् । सा च प्रोच्चैः प्रहस्य पुनरवादीत् । ''नास्मि किमात्मरक्षणक्षमा । चिराय त्वयात्रावस्थितम् । परिश्रान्तोऽसि । क्षुधार्तोऽपि स्याः । याहि गेहं, याहि शीघ्रम् । तवाम्बा त्वदागमनोत्कण्ठिता त्वां प्रतीक्षमाणाऽसहाया स्थिता स्यात् । नास्ति कोऽप्यन्यस्त्वां विनान्धायास्तस्याः साहाय्यं कर्तुमपूपादिपाकनिष्पत्तौ।'' इत्युक्त्वा समीपवर्तिनश्चिनारनामकपादपविशेषस्य मूले स्थापितं तस्यायतदण्डमृद्धृत्य तस्मै प्रददौ । स्थिरबुद्धिरस्मा न शक्या निश्चयाच्चालयितुमिति जानन् क्षेत्रबटुरनिच्छन्नपि निजालयं गन्तुमुदतिष्ठत् । ''प्रातर्मार्तण्डोदयसमये गोष्ठमागच्छे'' ति सा तमस्मारयत् । तदापि विलम्बानं बटुं पुनः साऽभ्यधात् सस्मितम् । ''मा चिरयाध्वनि । गृहं याहि सत्वरम् । विलम्बं मा कार्षीः प्रातरागमने वर्तते कार्यबाहुल्यं मेषाणां क्षेत्राण्यानयनात्प्रागि'' ति । तदाज्ञां शिरसा प्रतिपद्य माणवकः स्मेराननः प्राचलत्प्रति गेहम् ।

अथैकाकिनी सा चिनारवृक्षविशेषस्याधः शिलायां किलिञ्ज प्रसार्य मञ्जूषां चोद्घाट्यार्धसमाप्तपलालपादुकाग्रथनोद्यताऽभूत् । अद्यापि समीपस्थे क्षेत्रे काश्चिद्योषितः प्रयस्यन्ति स्म । ताभिरस्मामवलोक्य धान्यसंग्रहणे साहाय्यं नो दीयतामिति समभ्यर्थितम् । शीघ्रं च सा तां अभ्युपायासीत् । कार्ये समाप्ते च न्यवर्तत सा निजासनं द्रुमस्य मूले ।

अत्रान्तरे प्रदोषः प्रत्यासन्नप्रायः । वनिताः सर्वाः स्वस्वगेहं वव्रजुः । अद्वितीया च बालिकेयं स्थलस्य विविक्ततां न मनागपि व्यचिन्तयत् । विश्रब्धं पादुकागुम्फनोद्यत । गायन्ती मन्दं मन्दं सुखमास्त । समीपवर्तिनि जलाशये सरोजवृन्दं निशागमनाशङ्कया सामिम्लानत्वमधात्। । क्लान्तकूजत्कपोतकुक्कुटादिपतत्रिणः स्वस्वकुलायान् सान्द्रविटपगतान् समाश्रयन् । दिनमणिः प्रतीचीं सञ्जिगमिषुः प्रसारितकोमलकरैर्मार्दवं भेजे । सर्वत्र शनैः शनैर्निर्मक्षिकं सञ्जातम् । हेमन्तर्तुवशाद्भूयिष्ठाः प्रवासिनो ग्रामानिवासिनश्च शैत्यस्यातिरूक्षतामसहमाना देशान्तरं प्रायेण व्रजन्ति स्म । तस्मात् पांसुलमार्गेऽस्मिन् ग्रीष्मर्तुवद् यानानि नावालोक्यन्त सम्प्रति।

अथेस्लामबादनाम्नो ग्रामस्य दिशः समायान्तमस्मा सहसा कस्यचित् पुरुषस्याकारमद्राक्षीत् । कृत्रिमसन्त्रासेनोद्विग्नेव विनोदयितुमात्मानमिव च सपदि गुल्मान्तरितविग्रहा तस्थौ । अनुकूलस्थानात्तस्मात् समीपमागच्छतोऽध्वगस्याकृतिमधिकाधिकस्फुटीभूतामपश्यत्सा सकुतूहलम् । नचिरात्स पुरुषोऽन्तिकं सम्प्राप्तवान् । निबिडगुल्मावृतां मां द्रष्टुं न प्रभवेदेष इति प्रतीता वर्त्मनो मध्ये तमुपविशन्तं ददर्श विश्रब्धं च स्थितवती वत्सा । पञ्चत्रिंशद्वर्षीयः पथिकः परितो दृष्टिमाक्षिप्य कञ्चुककोषतो नाणककोशमपाकर्षत् । पुनश्चेतस्ततो वीक्ष्य धनराशिहस्तो गणयितुमारब्ध । क्व नाम हस्तगतधनराशिः प्रत्यासन्नरजन्या गन्तुं प्रवृत्तः स्यात्पुरुषोऽयमिति दारिका व्यचिन्तयत् । नचिराद्धनसञ्चयं कटिबन्धाने गोपयामास पान्थस्ततः सोच्छ्वासं समुत्थाय पुरश्चचाल। शीर्णसुरालयकोणपर्यन्तं दृष्टिगोचरो भूत्वा क्षणाददृश्यतां गतः । म्लानप्रभायां तस्यां जर्जरायतनमिदमीष–द्धूसरपिशाचसादृश्यं भेजे ।

तदनु विश्रब्धमस्मा शिलासनं प्रत्ययासीत्पुनश्च ग्रथनकर्मणि निमग्नाऽभूत। स्निग्धस्थविरौ क्षेत्रादिकार्याणि च ध्यायन्त्यास्तस्याः कस्यचिन्मेषशावकस्य रेभणं सहसा श्रुतिपथे न्यपतत् । सपदि सोत्थय क्लान्तशावकं स्वबाहुभ्यां समुद्धृत्य चुकूज समार्दवं प्रेमास्पदीभूतं तं मानुषनिर्विशेषमिव । ''अपि निद्रालुस्त्वं वत्स । अलं रुतेन । नेष्यामि सत्वरं त्वां शयनम् ।'' इत्युक्त्वा मृदुलवाचाऽवशिष्टान्मेषान् एकीकर्तुं शीशशब्दमकरोत् । समीपवर्तिनं गोष्ठकं प्रतियातीं तामन्ये मेषा अन्वगुः । नचिरात्तया विश्रान्तिस्थलमिदं निवेशितकृत्स्नमेषवृन्दं तालकबन्धेन पिहितम् ।

अथापराह्णात्प्रतीक्षमाणो रजीननाथो रजन्या समगंस्त । दिष्ट्यासीद्दारिकाया मञ्जूषायामग्निशलाकापेटिका । यावच्च सा मार्तण्डदेवतालयमुपागात् तावत्पुरुषयोर्द्वयोः सवेगं विवदमानयोः स्वरध्वनिस्तस्याः श्रुतिपथे न्यपतत् । केनाप्यनर्थेनावश्यं भवितव्यमत्र तथापि न मया धैर्य त्याज्यम् । उद्देशस्यास्य परिचयात्समीपवर्तिनः कस्यचित्पुराणचिनारतरोरवस्थानं तस्याः स्मृतिपथं समायात् ।

विशालद्रुमस्यास्य प्रचण्डकोटरस्तदाकृतिसमानं वपुस्त्रयमपि सम्यग्गोपयितुं पर्याप्त इति व्यजानात् सा । निःशब्दं च तस्मिन् कोटरे ससर्प । अपि भवेतामिमौ भयङ्करौ पुरुषाधमौ । प्रायः वायव्यप्रान्तवर्तिनौ पापिनौ स्यातामिमौ । एतादृशो दुष्टात्मनोऽधिकृत्य पितामहोऽसकृदभाषतेति स्मरन्त्याः कोटरस्थितायास्तस्याः श्रुतिपथे न्यपतत्पुरुषयोरेकस्य वचनं यथा – ''अत्रैव खनित्वा निधेयमेतद् यथान्ये न पश्येयुरिति। कम्पमाना दारिका व्यचिन्तयत्कुतोऽमू नाम संरम्भेण कलहं कुरुतः। प्रायः कस्यापि ताभ्यां निहतस्यार्भकस्य वपुरुद्दिश्य विवादेनानेन भवितव्यम्। अनयोः पुरुषोर्नेदिष्टापि सुरक्षितेत्यात्मानमभ्यनन्दत् सा स्वरक्षणार्थं च परमात्मानि धन्यवादपुरःसरं कृतज्ञतां मुहुर्मुहुर्हृदन्तरे समुदैरयत्। अचिरात् सर्वत्र निःशब्दता व्यराजत। कल्काच्छादिते कोटरे प्रह्वीभूता कुमारिकेयमपसरत्पादशब्द–माकर्णयदचिन्तयच्च। अप्येतौ नु चलतः प्रति मद्गेहम्। नहि नहि व्रजतोऽमू प्रतीपदिशेति प्रतीता निरुच्छ्वासं किञ्चित्प्रत्यैक्षिष्ट। ततश्च निपुणं कोटरतो निःसृत्य देवालयं यावत्प्रविशति तावदवगुण्ठितार्तनादमश्रौषीत्सा। तस्थौ च स्तब्धा मुहूर्तं विचिन्तयन्ती। कस्यचिदसह्यावेदनार्दितस्य स्पन्दनेनानेन भवितव्यम्। पितामहो मे न मर्षयिष्यति दुःखितजनाय साहाय्यं न दीयते चेन्मया। स हि नित्यमेवाज्ञातजनपरिचरणपरोऽस्ति। इति विमृश्याप्रमत्ता तमुद्देशं निभृतं प्रत्यागमनोद्यता सामिश्वासनिरोधकं रुतमश्रौषीत्। आर्तनादोऽप्यभूदुच्चतरः। प्रज्वलितदीपशलाकयाद्राक्षीत्सा पञ्चत्रिंशद्वर्षीयं पुरुषमेकमग्रतः। धनमुद्रापत्राणि गणयन्नचिराद्योऽवलोकिस्ताया स एवासीत् पान्थोऽसौ। चीवरेण मुखमस्य निरुद्ध्य शरीरं च देवागारस्य स्तम्भे स्थूलरज्ज्वा गाढं निबद्धमासीत्। अप्येष परमार्थत एव दुःखार्तः स्यादाहोस्विद्दस्युरिति विशङ्कमाना मुहूर्तं निस्पन्दं तस्थौ सा। ततः क्षणमात्रं विमृश्य शङ्कां च दूरीकृत्य निबद्धपुरुषविमोचनपराभूत्। रज्ज्वा ययायं स्तम्भे न्यबध्यत तस्या ग्रन्थीनिपुणं स्वकररुहग्रैर्विश्लथयितुं प्रायतत। बहुलायासवशात् पान्थस्य गुरुकायः सरभसं भूमौ न्यपतत्। अपि मृतोऽयमिति जिज्ञासया सा विनतवपुरस्तदुच्छ्वासं श्रुतवती यद्ययं दस्युः स्यात्

तदस्मदगृहे भयावहजनस्य प्रवेशो न खलु शुभावहं। भवेदिति श्वासं निरुध्य विमर्शयोर्मध्ये दोलायमाना मुहूर्तं चिन्ताकुला स्थितवती। प्रायः किञ्चित् स वक्ष्यतीति प्रत्यैक्षत। परं तदार्तरवमेवाश्रुणोत् सा केवलम्। परमवेदनया ध्रुवं पीडितोऽस्तीति प्रतीता च तत्क्लेशं प्रशमयितुं निश्चिकाय।

अथ तं निपुणमुत्थाप्य शनैः शनैर्मार्गे प्रवर्तयितुमुपाक्रमत धैर्यशीला दारिकेयम्। स्निग्धौ पितामहौ संक्षोभवृत्तमिदं सकौतुकमाकर्णयिष्यत इति मनसा कल्पयन्ती भूयिष्टमहसद् सा। इतः परं पितामहो न कदापि मामेकाकिनीं बहिर्गन्तुमनुमंस्यते पितामही च मत्साहसगुणागुणे विजानती शिरः कम्पयिष्यति केवलमिति वितर्कयन्ती चिरेणासदन्निजावसथं कथमपि क्षताङ्गेन पान्थेन सह। चिरात् प्रवयाः कृषिकः स्वनिकेतनस्य द्वारि चिन्तापरस्तिष्ठन्नास्त। पर्यन्ते तमिस्रायां पथिकं कंचिदाकर्षन्तीं वत्सां निशाम्य तस्य गलदङ्गानि स्थैर्यमापुः।

यथाध्वगः समार्दवं वत्सया शुश्रुषितः परिसान्त्वितश्च वृद्धाभ्यां कृतातिथ्यः खट्वायां स्थितवान्निश्चलो निशि। परेद्यव्यस्मां दर्शं दर्शं साक्षात् कामप्यमानुषीं पश्यन्निव क्षणं स स्तब्धोऽभूत्। वत्साया मृदुत्वाचं श्रावं श्रावं सहसा स प्रोच्चैरुदगिरद् अयि हामिदे! हामिदे इति। भ्रान्तचेतसं ते मन्वाना तस्य तत्प्रामादिकं वचः सोपहासं वृद्धाभ्यां बालिका निवेदितवती। अनर्थपरम्पराभिभूतः सङ्कटाद्दारिकयाभिरक्षितो द्वित्रैर्दिनैः प्रकृतिमापन्नः परमकृतज्ञताकुलस्तस्यै धन्यवादान्मुहुर्मुहुर्व्यतानीत्। धनविनाशं न मनागपि व्यचिन्तयदध्वगोऽयम्। वत्साया अपरिमितगुणाकृष्टहृदयस्तथामितोपकारभारान्नतो विस्मयस्य परां कोटिमारूढस्तामालोकयन् सामिपरिम्लानस्मृतिपरम्परया भृशमाकुलोऽभूत्। इतो निर्गमात्प्राङ् मयावश्यं बालिकायै किमपि पारितोषिकं प्रदेयमिति मनसि कृत्वा स्वमहानुभावं दर्शयितुं वृद्धकृषीवलायासावाचख्यौ। श्रीनगरमागम्यतां तावद् भवद्दर्शनसुखं च मे दीयताम्। गुग्लुनाम्नो नाविकस्य मे गृहनौका सर्वनागरिकाणां विदितास्ति खलु। तस्य सङ्केतस्थानं प्रष्टव्यम्। भवदीयपौत्री यथार्हमुपग्राह्यं प्रदास्यते मया। अथास्मया शीघ्रं प्रत्युक्तम्। श्रीनगरमतिदूरस्थं चलितुमक्षमोऽस्ति मे

पितामह इति पथिकस्तामपाङ्गदृशा विलोकयन्नवदद् भवतीं भवत्पितामहं च नगर्यामानयनाय तरणीं प्रेषयिष्यामीति। तन्निमन्त्रणमवगणय्य प्रवयसि तूष्णीं स्थिते पान्थो व्याहरत्पुनः। गतभार्योऽस्मि। अनपत्यासीन्मद्गेहिनी। तस्या वन्ध्यतयातिकुपितस्तां सार्धत्रयोदशवर्षेभ्यः प्राग्गृहान्निष्कासितवानहम्। नान्यां च कन्यो परिणीतवान्। सन्ति मद्सविधे द्वे गृहनौके पञ्च तरण्यश्चेति।

पान्थस्यावशिष्टकथानिवेदनं नावश्यकम्। सोऽयं सार्धत्रयोदशवत्सरेभ्यः प्राक् शरणागताया हामिदाया भर्ता पौत्रीकृताया अस्मायाश्च जनितेति झटिति स्थविरौ तर्कयामासतुः। अनेन च तावुभौ किंचित् सम्भ्रान्तौ बभूवतुः। तदनु गुग्लु सानुग्रहं स्मेराननो बभाष। भवत्पौत्रै निमयेन रूप्यकाणां शतद्वयं प्रदातुमिच्छामीति। कोपाविष्टेन कृषीवलेन प्रत्युक्तम्। दीयतां तद्धनं गोक्रयमूल्यार्थमिति। पथिकस्य सुस्थितिं क्षणात्तर्कयामास कृषिकः। तदनु प्रवासी पुनर्वक्तुमारभत। मा कुपः कन्येयमवाप्स्यति सर्वमेव स्वाभीष्टम्। न कदापि तस्या अपकरिष्ये। मिष्टान्नेन तां पोषयिष्ये बोखारादेशोत्पादित– दुकूलैर्नवरत्नखचिताभरणैश्च तद्वपुरलङ्करिष्ये। अनपत्यस्य नयनयुग्मं मे नन्दिनी तव प्रायो जनितनन्दनेनान्दयिष्यतीति।

सञ्जातकुतूहला निरूपयन्ती प्रवासिनमेष एव मे पितेति न खलु व्यजानादस्मा। कृषीवलस्य पत्नी तस्य वचनमाकर्ण्य भर्तुः कर्णेऽजपत्। कथं परिणयेन्निजात्मजाम्। अयुक्तमेवेति कथय तस्मै इति। स्थविरो दोलायमानमानसः स्थितः। व्यचिन्तयच्च वत्सायाः प्रभाव एतस्मै निवेदनीयो न वेति। परमासन्नमृत्यवे हामिदायै प्रतिश्रुतमासीदावाभ्यां यन्न कदापि बालिकेयं तत्पितृसकाशं प्रेषयिष्याव इति। तथापि वत्सया अन्वयो यदि पान्थाय न कथ्यते तर्हि तस्या यावज्जीवं सुस्थितजीवनसौख्यमपहरिष्यते खलु। इति विमृश्य कृषीवलोऽवादीत्। नेयं भवते देया। केनचित्कुमारेण हि तस्या विवाहवाङ्निश्चयः कृतोऽस्तीत्युक्त्वा भार्याया बाहुं कूर्परेणेषत्समचालयत्। अथ स्वहृदयौदार्यमाविश्चिकीर्षुणा पान्थेनाभिहितम्। निवसतु सा तर्हि दुहितृभावेन मद्गेहे। पञ्चाशतं रूप्यमुद्रा

दास्यामि भवते। मृत्युवक्त्रात्परित्रातोऽस्मि तया। तस्या भावी भर्ता मन्नाविको भवत्विति।

प्रवयाः कृषीवलः पुनर्विममर्श, मनसि। उपन्यासोऽयं प्रशस्तः खलु सर्वथा नोचितं भाविसौख्यमपहर्तुं बालिकायाः। अथात्मगेहिनीं पुनस्तत्कर्णे जपिष्यन्तीं कूर्परेणास्पृशत् तूष्णीं तिष्ठेति च तां व्यजिज्ञपत्।

अन्ततः सदसद्विवेकनिपुणोऽपि स्थविरो वत्सामेव निर्णेतुमाज्ञापयत्। अथात्यन्तगाढप्रशान्तता व्यराजत प्रकोष्ठेऽस्मिन्।

कृषिको भार्याद्वितीयो निरुद्धश्वासो मुहूर्तं जोषं तस्थौ। पान्थश्च सोत्कण्ठं पुरोऽवलम्बमानो दारिकाया वचोऽशृणोत्। दीयतां पञ्चशती रूप्याणामर्हते जनायान्यस्मै। यत्र मे पितामहस्य पितामह्याश्च निवासस्तत्रैव समुचितो ममापि। विद्यते हि दिष्ट्या पर्याप्तधनमेतयोः सविधे मत्पोषणार्थमिति सनिश्चयं प्रोच्याग्रे च सपदि संप्लुत्योच्चैः स्थविरकृषीवलस्याङ्के सुखमुपाविशत्। सहसा विस्मापितो गुग्लुस्तां निरीक्षमाणस्तस्थौ। विलोलालका बालिका साभियोगं च पथिकमालोकयत्। अनेकसङ्कल्पविकारपरम्परया तस्य चेतः संग्रथितमभूत्। विवर्णवदनः शिरः कम्पयंश्च द्वारं प्रति चलिष्यन्नभ्यधात् पथिकः। 'अयि भोः परवस्तुलोभेन किम्। मदीयभार्या हामिदा यदि वन्ध्या नाभविष्यत्तदावयोरप्यस्मासमानरूपगुणादिसम्पन्नाभविष्यद्दारिका।' इति सदर्पं समुदीर्य श्रीनगरस्य विजनेनाध्वना स्वगेहं प्रति सायासं प्राचलदध्वगः।



# २. तापसस्य पारितोषिकम्

मासोऽयं कार्तिकः। कोंकणावनिमण्डलमण्डनायमाने सुरमणीय–पर्वतीयप्रदेशे महाबलेश्वरनामानि द्वित्रदिनानि सहसासीत्समुत्थितो झञ्झावातः प्रचण्डः। अकालेऽपि सकडकडाशब्दमतिभीषणसौदामनी ताटकारुण–रोषविडम्बिनी क्षेत्रेषु व्यापृतान् स्त्रीपुरुषसमूहान् संत्रास्य, वाताघातपाषाणपातनं विधाय परःशतानुच्चोच्चद्रुमान् सरभसं विधूय निपात्य च समुन्मूलं वन्यसत्त्वान्, भयानकेन स्वनेन भाययित्वा, गोमेषादिपशून् क्षणाद्भस्मीकृत्य, कृतकृत्येव विध्वंसकर्मण्यात्मानमपि क्रमेण व्यनाशयत्। ततश्चानवरतं नैकघटिका यावत्सतडतडाशब्दं गुटिकास्थूलवर्षोपलवृष्टिमारब्धवान् मघवा। मध्याह्नेऽद्य तु वृष्टिप्रवाहोऽयं मन्दीभूय शनैःशनैर्व्यरमत्। सायंसमये चास्तं जिगमिषुर्भगवान्भास्करः सिन्दूरस्नातया वरुणदिशा तरुण्या सन्ध्यारुणाकृतहरितवाहनः पश्चिमसागराभ्यन्तरं प्रविष्टः। प्रदोषस्य क्षणिकदीप्त्याऽभूदम्बरतलमरुणायितम्। ततश्च क्षिप्रमेव रजनीं प्रतीक्षमाणो रजनीनाथः सार्धकलो रमणीमाश्लिष्याश्लिष्य प्रफुल्लस्मितास्येति तां चुम्बन् विमलगगनमञ्चक आस्त। परमसौ प्रमोदामृतरसधाराबिन्दुमात्रस्यन्दनेनापि नान्वगृह्णान्मन्दिरमेकं विषादान्धकारावृतम्। तथा हि। शयनागारेऽत्र कस्यचित्तरुणस्यायुर्दशावर्तिस्तमोमयकोणे निहितस्य दीपकस्य तनुवर्तिरिव कम्पमानाऽऽसीत्। तत्र जीर्णधूसरभित्तिषु चित्रविचित्रविच्छायच्छायानिचयेन गाढनिःशब्दतयारण्यस्य गृहाद्बहिश्च मण्डूकानामनवरतेनारटनेन समवर्धत भीषणगभीरता शयनागारस्य। रोगग्रस्तो युवा कश्चित्पूर्वं सुघटितशरीरोऽधुना ज्वरेण कृशाङ्गः, पूर्वं कुञ्चितकुञ्चितकचकलापः संप्रति कर्तितसरलकेशः, पूर्वं कमनीयकपोलपालिरिदानीं तु कर्पूरपाण्डुवर्णः, पूर्वं प्रसन्नवदनाम्भोजः संप्रति खिन्ननिस्तेजोवदनो निस्सत्वः शेते स्म निश्चलो मञ्चके।

अथ व्यापृते भिषजि रोगिणो नाडीपरीक्षादिकार्ये तदीयगेहिन्यूर्मिला घोरचिन्तापारावारोर्मिलोडिता निरुच्छ्वासा बाष्पौघं सयत्नं निरुन्धाना

तल्पस्यान्तिकं तस्थौ। सेयमासीत् रूपयौवनसम्पन्ना केतकीगर्भगौरवर्णा सरलसरलाङ्गयष्टिर्हरिणलोचना मनोहारिणी च। यौवनसहजप्रोत्साहप्रफुल्लता विस्तृतासीत्तदीयाननाब्जमभितः। सूक्ष्मसूक्ष्मकार्पासाम्बरवेष्टितायास्तस्या मङ्गलसूत्रमालामन्तरेण नाभवदन्यदाभरणम्। तस्या गौरवर्णे शरीरे नीलकुटिलकुन्तलकलापः शुशुभेतराम्। तदीयायतनेत्रे दीर्घपक्ष्माच्छादिते तदन्तर्भूतभावनाभरमशंसिष्टाम्। अक्षियुगलेनात्मनो निखिलजगद्वशीकर्तुं प्रभवेस्त्वमिति बहुधा बहुभिर्जनैर्निवेदिताऽसीत्सा सगौरवम्।

अथ रोगिणश्चिराय सप्रयत्नं सादरं च कृतचिकित्सो भिषग्वर्यः प्रति गवाक्षं मन्दमन्दमचलत्। कम्पमाना तमनुसृत्योर्मिला ससंभ्रममाकृष्य तस्य कोषजालकं च सगद्गदमप्राक्षीत्। आर्याः कथ्यतां कथमासते भर्तृचरणा मे इति। भिषक् च कर्णेऽजपत्। अस्ति किलाद्य तस्य व्याधेरुद्रेकः। यदि कदाचित्प्रबलं दैवानुकूल्यं भवेत्तर्हि रात्रौ रोगोपशमः संभवेत्। परं हन्त रजन्यामेवाप्स्यते कालनिमन्त्रणं तस्माद्भवत्या सज्जीभाव्यमनिष्टव्यतिकराय खलु। भद्रे! ईश्वरेच्छा बलीयसी। दैवनियोगमुल्लङ्घयितुं कः पारयेदिति पाणिद्वयं संगृह्य मृदुस्वरेणाब्रवीद्वैद्यः। अहो भिषग्वर्याः परित्रायन्तां परित्रायन्तां भर्तृपादाः। नास्ति शरणमन्यन्मे तान् विना। इति सकरुणमुदीर्योर्मिलो भाविविपद्विभावनसंत्रासप्रस्यमाना भाविदारुण-स्थितिकल्पनाखिन्नानना भिषजः पादयोर्निपत्य गाढं तौ पाणिपल्लवाभ्यां निराशाकुला समपीडयत्।

अलमलं चिन्तातिरेकेण। जानात्येव भवती यद्यथाशक्ति सर्वोपचाराः कृता आवाभ्याम्। इतः परं परमात्मैव प्रमाणम्। तदिच्छाधीनैर्भाव्यं मर्त्यैः। इति तामुत्थाप्य सानुकम्पमुपादिशदगदङ्कारः।

भवतु, भवतु। अपि न किमप्यन्यत् कर्तुं शक्यते? अप्राक्षीत्सा पुनः पुनः। तस्या दृढीकृतदन्तपंक्तिर्विवर्णाननं च परिदेवनोद्रेकमसूचयतां स्फुटम्। नेति नेतीति प्रोच्य शिरो विधूय च तूष्णीं स्थितवान् भिषक्। नेति नेतीत्यक्षरद्वयवाग्ध्वनिश्च न्यपतत्तस्याः श्रुतौ मृत्युघण्टानिनाद इव। ततश्च तावुभौ पितृवनसंवादिन्या निःशब्दतया समाच्छादितावास्ताम्।

नैराश्यवज्रप्रहतेवोर्मिला नेदीयस्यासने निमज्य दुःखार्ता पुरतो बद्धदृष्टिस्तूष्णीं तस्थौ। अथ सहसा यावत्क्वापि प्रशान्तताच्छविः शीघ्रविमर्शजन्या समुल्लसति तदानने तावत्सा चिन्ताभारनताङ्गीवाधोमुखी तस्थौ। अगदंकारो निःशब्दं तदन्तिकमुपसृत्य विष्टरस्य पृष्ठमीषदवलम्ब्य च तत्कर्णेऽजपत्। वत्से! समाश्वसिहि! समाश्वसिहि! अद्य रात्रौ स्वल्पमपि सेवनीयमशनं भवत्या। इति फलके स्थापितं माध्याह्निकानास्वादितभोजनसंभृतं पात्रमङ्गुल्या निर्दिष्टवान्। संभ्रान्ता सा तद्वचनमश्रौषीत्। परस्ताद्भेषजपूर्णां स्वकीयमञ्जूषां समुद्धृत्य निःस्वनं द्वारमपावृत्य च मन्दिरान्निरगात्कौमुदीधवलितायां विभावर्यामगदङ्कारः।

अथ कुट्टिमसन्नद्धं शयनागारं पितृकाननस्य भीषणतामभजत्। प्रतिक्षणं कोणस्थो दीपो निर्वापं प्रत्यासदत्। गन्धवाहो गृहाद्बहिः ससुसूत्कारं क्वचिदाक्रोशत्क्वचिदुच्चैस्स्वरमवहत्।

अथ भयानकनिःशब्दतायां तस्यां पत्युर्हरिद्राद्रवस्नापितमिव पाण्डुरमुखं दर्शं दर्शं गमयेद्रात्रिं चेदिति भिषजो वचनं मुहुर्मुहुश्चिन्तयन्त्यास्तस्याः शरीरं सवेपथु समजनि। अहह विधे किं नाम कृतं मयेह जन्मनि यदेकमात्रशरणभूतं मम प्राणेश्वरं मय्येवं बद्धानुरागं मत्तो निष्ठुरमाच्छेत्तुमुद्यतोऽसि। केन घोरपातकपङ्ककल्केन कलंकितास्मि यन्मम जीवनसारमाजिहीर्षुरसि। भाविदुस्सहापदमुत्प्रेक्षमाणां मां वराकीं कोकीमिव कोकाद्विरहितामुत्तरोत्तरं तारस्वरै रुदतीं द्रष्टुं कथं त्वं सहसे। नास्ति ते हृदि करुणालेशोऽपि शोकपारावारे निमङ्क्ष्यतीनां मादृशीनामबलानां विषये। इति चिन्तयन्त्यास्तस्या अन्तरात्मनि विपदम्बुनिधौ निमज्जयिष्यतो विधेश्चेष्टितेन सह महत्संख्यं समजनि। उद्वेगझञ्झावातविवर्णवदनायास्तस्या मनस्येकस्वरोक्तिरेवास्पन्दत। यथा। नास्त्येकमन्तरेणान्यो मार्ग इति। साम्रेडमात्मनि निर्धारयन्त्यास्तस्याः प्रतिक्षणं विविधविचारभंग्यनुसारेण तरुण्या नयनयुग्मं सपदि परिवर्तनं भेजे। तथा हि। क्वचिदायतविस्फारितं, क्वचिद्वह्निवद् द्योतमानं क्वचित्तर्कवितर्कगम्भीरं तदभूत्। नास्त्येकमन्तेरणान्यो मार्ग इति क्रियासमभिहारेण प्रजल्पन्ती सावधानं विमर्शपूर्वकं सूत्रपुत्रिकाया

यष्टयुच्छ्रितपदविडम्बिनी सा शयनागारस्यैकस्मिन् कोणे स्थापितामोषधमञ्जूषामुपेतवती। तमीतमिस्रे समेधमाने परामृशदूर्मिला काचकूपीसञ्चयं यावद्यथाभीष्टां कूपीमुपालब्ध। एकापोशनमात्रेणालं स्यादिति निश्चित्य समीपस्थे फलके कूपं निधाय गवाक्षं प्रति च पुनर्गत्वा सृष्टेरालोकमालोकयन्ती लोललोचना सा समतिष्ठत। अत्रान्तरे बृहत्तमलोहितकन्दुकं निजकिरणधारास्नापितसान्द्रदेवदारुसुर्वाह्वया दिवनद्रुमग्रामारण्यं देदीप्यमानं गगनपटाङ्गणेऽवलम्बमानमासीत्। मरुत्कम्पितमहीरुहसमूहस्य सूत्कारस्वनेन पूरितमभूदिगन्तरालम्। इन्द्रनीलवर्णाम्बरं द्योतमानतारकैर्हीरकमणिभिरिव मण्डितं व्यराजत। क्वचिद्रजनीकरकरनिकरविरोचितां भूमिं, क्वचिद्दूरस्थमपि दृष्टिगोचरं प्रतापदुर्गप्राचीरं, क्वचिदभ्रंकषान् सुरुनामकतरुविशेषान् विलोकयन्ती समयं कश्चिदतिवाहयाम्बभूव। प्रस्फुरच्चन्द्रकलाकलिकाविलोकनेन-झिल्लीभ्रमरादिझंकारनिशमनेन, समुन्मीलितमालतीकुन्दादिकुसुम-सुगन्धघ्राणेन, वन्यपाटलपटलपरागपुञ्जसुरभित-विलोलशीतलसमीरस्य संस्पर्शनेन, सान्द्रद्रुमनिकरेषु वह्निकणदीप्तिजित्वरखद्योतद्युतिविलोकनेन, पयःफेनसार-छविसदृश्या ज्योत्स्नया धवलितस्य समीपवर्तितडागस्यावलोकनेन, द्विगुणितविषादाऽभूदुर्मिला। नेदीयसो गिरेर्मूलपादे भर्तुरस्याः फलवृक्षवाटिका परिणतफलसंपन्नापि स्वनाथस्य विप्रयोगादिवानाथीकृतेव विषण्णेव स्थितवती। तरुसंदोहस्य पेलवौज्वल्यजुषो विचित्रवर्णैः पर्णैः सान्द्रच्छायया च मृदुशीतलानि वर्त्मानि परिप्लावितानि। काश्चिदपि गूढपादिका वृक्षपुञ्जेष्वन्तर्लीना प्रत्यभात्। शलभसमूहस्य झणत्कारशब्देन प्रशान्तनिशाया वैचित्र्यमेव समुदपादि। लिङ्गमालानाम्न्यां क्रोशार्धवर्तिन्यां वाटिकायां जलप्रपातस्यानवरतगर्जितं दिगन्तं परिपूर्य चिन्ताचक्रमारूढाया ऊर्मिलाया निरानंदावस्थां समवर्धयच्च। नेदीयसो ग्रामाद्विवाहोत्सवनिमित्तेन क्वचिद्वीणामृदुस्वरः क्वचित्पटहभेरीमृदङ्गादिनिनादश्च भेजतुः कर्कशतां युवत्याः कर्णशष्कुल्योः। हन्त! मुमूर्षौ हृदयेश्वरे कथं नाम निर्दयं जनेनानेन सुखमुपभुज्येत। सहृदया चन्द्रिकापि मामनुकम्पमाना मन्दमन्दद्युतिर्बाष्पोदकं गोप्तुमिव मेघाम्बरेणात्मानमवगुण्ठयति।

इत्येवमुत्प्रेक्षमाणायां तस्यां शयनागारस्य द्वारं समुद्घाट्य सायन्तनभोजनसंभृतं पात्रमानीतवान् सेवकः। विधूतशिरसा तया भोजनं नापेक्ष्यत इतीङ्गितेनैव निर्दिष्टो वाहकः क्षणं व्यलम्बत ततो दीर्घं निःश्वस्य निःशब्दमपासरत्। क्षणेऽस्मिन् रजनीकरस्य मन्दप्रभाविरोचितं वनमालोकयन्त्यास्तस्या न्यपतत्स्मरणसरणीमेका पूर्वमनुभूता सुखमयी धवलसुधाकरसुधाधाराधवलिता विभावरी व्यतीताब्दस्य यस्यां सा भर्तृद्वितीया देवदारुच्छायावृतपदसरण्यां पक्षिकुलकूजितं मधुरमधुरप्रणयवचश्च प्रेयसः श्रावं श्रावं विहारं करोति स्म। ततश्च सस्मार सा कश्चित् त्रिविष्टपदेशीयं तापसं पुराणवस्तुसंचयहस्तं रजनीसमये पर्याटं पर्याटं समायातं तयोः सविधम्। वस्तुजाते तस्यासीदेका पुरातनी कुक्रीनाम्नी कृपाणिका। 'भद्रे कृपाणिकाया मंत्रिताया अस्या मंत्रगुणगणेन युवयोरुभयोः शुभमेव भविष्यति।' इति प्रतिज्ञाय तदस्त्रं ताभ्यामुपाहरद्वानप्रस्थः पुराणवस्तुकोविदः। कृतज्ञतया च तापसस्योपायनं स्वीचकारोर्मिला। अथ ध्यायं ध्यायमिदानीं तदलौकिकपारितोषिकं गवाक्षतः परिवृत्य च शयनागारस्य सुधालिप्तभित्तिकां प्रत्युपासरत्। कोणस्था पित्तलपात्रगतदीपिका सामिनिर्वापिताऽसीत्। तमीतिमिरकर्तनक्षमं शोणोल्लीढं भित्तावलम्बितं रत्नखचितरजतकोषच्छन्नं निःस्त्रिंशं समुदतोलयत् सा। 'भद्रे, कृपाणिकाया मंत्रगुणगणेन युवयोः शुभमेव भविष्यती' ति तापसस्य वचनं मुहर्मुहुः प्रजल्पन्ती क्वचित्सनिःश्वासं सपुलकं तामस्तौषीत्, क्वचिदखिद्यत, क्वचिदकम्पत, क्वचित्तामनिन्दत, क्वचित्तां व्यडम्बयत्। 'किं शुभमकारि नौ कृपाणिके त्वये' ति सोपालम्भमुदीरयन्ती सतिरस्कारमुन्मत्तप्रायेवोपकैरुपाहसत् सा। अहो! विश्वासशीला मायाविनानेनाविश्वसनीयेन सकैतवं प्रतारिताऽऽसं किल। इत्यात्मने कथयन्त्यास्तस्या मनोभित्तिकायां सहसा काचिदभिनवकल्पना प्रादुरभूत। किमेषा कृपाणिका मत्प्रयोजनं सफलत्वं नेतुं प्रदत्ता स्यान्मे। शीघ्रतरमेव कार्यनिष्पत्तिर्भवितेति न संदेहलेशः। इति विभावयन्ती रुग्णस्य पत्युरन्तिकमुपेत्य क्षणं तस्य निःशोणितं वदनं न्यरूपयत्। ' परं यदि

सुदैवात्प्राणेश्वरः पुनः स्वस्थो भवेत् तत्किमनया। नहि नहि न तत् संभावनीयम्। हा! भिषजो मुखावलोकनेन, तस्य स्वरशब्दविन्यासचेष्टितैश्च व्यतर्कि मया यदतिक्रान्तरोगोपशमाशः प्राणेशः सांप्रतम्। स्वल्पघटिकाभिरेव मज्जीवनप्रयोजनं पर्यवस्यतीति मनसा निर्धार्य सरभसं परावृत्य मुहूर्तं शयनागारे प्राचलदितस्ततः। परस्ताच्च निरुद्धक्रन्दना गृहीतकृपाणिका शयनस्य समीपवर्तिविष्टरे स्खलितगात्री न्यमज्जत्। नचिरादवर्णनीयब्रह्मानंदनिमग्नेव निरपेक्षेव विस्मृत्यात्मानं चिराय जागरणोपोषणादिक्लेशैः शिथिलगात्री दयितस्यानने बद्धदृष्टिस्तूष्णीमास्त। क्षणोत्तरं स्नातोत्थितेव सहसा स्फूर्तिस्फुरितगात्री किञ्चित्स्मेरानना वामहस्तेन मंगलसूत्रस्रजमास्पृशन्ती वामेतरेण च कृपाणिकां गाढमुरसि निपीडयन्ती पिहितलोचनयुगला कस्मिंश्चिदज्ञातप्रदेशे पर्यटन्तीव विस्मृतसांप्रति- कपरिस्थितिरिव ध्यानमग्नेव निश्चला वितस्थे। गृहाद्बहिर्न मण्डूककदम्बस्यारटनं न वा झिल्लिकानां झंकारो न वा निशीथसमयसूचको घण्टानादो विस्मृतात्मदेहायास्तस्या गाढप्रशान्ततां मनागपि व्यच्छिनत्। अथास्तं याते यामिनीधवे गाढान्धकारेण कज्जलरेणुपटलेनेव बहिःस्थवनप्रदेशो व्याप्तः स्थितः। शय्यागारं तु दीपिकायां निर्वापितायां सान्धकारप्रायं समभूत्। अथ कतिपयक्षणोत्तरं निवासस्य बहिरश्रावि पादन्यासध्वनिस्ततश्च कर्कशस्वनो मण्डूरदूषितकपाटसंधेर्यावदुदघाट्यत द्वारम्। भयग्रस्तोर्मिला यावदात्मानं पृच्छति कोऽयं धृष्टो जनः शयनागारमावयोर्विस्रब्धं प्रवेष्टुं धृष्णोतीति तावत्कश्चिद्भव्यस्तापसवेषः श्यामवर्णो महोदाराकृतिरवदातो महाप्रभश्च निःशब्दं प्रविश्य शयनशालां निमिषमात्रेण रोगिणः पादयोरन्तिकं तेजःपुञ्ज इवोदगमत्। ऊहितक्रन्दनां युवतीं मृदुगिरा साभिज्ञानसौहार्दं सस्मितं चान्वयुङ्क्त 'अपि भवत्याहमाहूतः'। इति प्रोक्ता सा प्रतिपत्तिमूढेव केवलं शिरो व्यधूनोत्। तमालोक्याकस्मादेव संभ्रमपारावारकल्लोलविलोडितहृदया संत्रासाद्रोमाञ्च- कञ्चुकितशरीरा स्फुरिताधरा विस्फारितलोचनाभ्यां निजमानसिक- विक्षोभमाविश्चकार सा स्फुटम्। मुहूर्तं निजदृटयामपि न सा व्यश्वसीत्। 'परं सत्यमेव

केनचिन्महापुरुषेण भाव्यमनेन। अस्य शरीराकृतिः स्फुटमेव भव्या किल दरीदृश्यते, एतत्स्वनश्च परिचितजनस्येव श्रुतिगोचरः। क्वापि दृष्टपूर्वोऽयं मयेति निश्चिनोमि'। इति मनसि विचार्य दत्तदृष्टिर्गृहागतस्य तस्य सुवर्णप्रभामण्डलमण्डितमाननं न्यरूपयत्। 'भद्रे, मुहुर्मुहुः स्मृतोऽहं भवत्येति समायातोऽस्मि'। इति घनगर्जितगभीरस्वरेण स समुदैरयत्। अकस्मात्सवेगं चलितेव भयाक्रान्ता च निरुत्तराऽस्थादूर्मिला।

**गुहाभ्यागतः** – भद्रे! श्रूयतां मद्वचस्त्यज्यतां च संकल्पोऽयं सोन्मादः। वृथायं व्यापारस्तवेति विद्धि। बहुतिथं कालं हि तवायूरेषा विधिना प्रागेवालिखितास्ति खलु।

इत्याकर्ण्य तदादेशं वसनाञ्चलेन परामृश्य च खिन्नाननं ससंभ्रममब्रवीत्। नोत्सहे जीवितुमितः परम्। गृहागतः कृतार्थतयेवास्मेष्ट।

गृ – (साग्रहम्) भवत्या मुहुर्मुहुरत्यन्तं गाढं स्मृतः संस्तवोपचिकीर्षुः समुपस्थितोऽस्मि। ममादेशं, प्रतिपद्य क्षिप्यतामस्त्रम्।

ऊ – कस्त्वम्? कुतः समायातोऽसि? किं तवागमप्रयोजनम्। किमर्थं यथेच्छं न कुर्याम्।

गृ – यतो नीतिशास्त्रस्य विरुद्धं भवेदीदृक् चेष्टितम्। विधात्रा दत्तान् प्राणान् हि विनाशयितुं न कस्यापि मर्त्यस्याधिकारोऽस्ति।

ऊ – मम प्राणा मदधीना एव। न कोऽप्यधिकृतोऽस्ति मां चालयितुं संकल्पितकार्यात्।

गृ – अये नैतिकनियमान् न वेत्सि किम्? किमिति बालिशवचनेनास्मदग्रे निजमुग्धतां प्रकटयसि। किमित्येवं ताम्यसि? कथंकारं खिद्यसे, शुष्यसि, ग्लायसि च?

ऊ – अपि न श्रुतं भवता यत्पुरातनकालेऽस्मद्देशस्य ललामभूतानि ललनारत्नानि पतिनिधनोत्तरं तच्चितामारोहन्निति। तथापि तानि न दोषास्पदमभवन् परं सतीमान्यान्यमत्वमेव लेभिरे।

गृ – परं न केनापि सुज्ञेन चेष्टितं तासामभ्यनन्द्यन्त।

इत्यभिधाय विस्तृतपाणिरग्रेऽचलत्। ऊर्मिला चाधिकसंभ्रान्ताऽऽ–सनादुत्पत्येव पाण्डुगण्डतलविसृत्वरस्वेदबिन्दून् वसनप्रान्तेन मार्जयन्ती

वेपमानहृदया रुद्धकण्ठा च कथं कथमप्यात्मानं वशंवदं विधायाजल्पासरभसमपसरेति।

गृ – किमर्थं तवोपचिकीर्षवे कुप्यसि। तव पत्युः परलोकयात्रा निर्विघ्ना भवेदिति ममागमनप्रयोजनम्। मा स्म दुःखज्वालाभिर्बकुलकुसुममिवात्मनः सुकुमारशरीरं धाक्षीः।

ऊ – अपसरापसरेतः। किं कुर्यां प्राणेश्वरेण विना। स एव मे सर्वस्वं, तत्सान्निध्यमेव मे सुखं, तत्साहचर्यमेव मे जीवितसारस्तत्परिषेवणमेव मे धनं, तद्वाक्सुधाधारैव मे भोज्यं, तस्मिन् भक्तिरेव मे जीवनहेतुः। तत्किं व्यामिश्रयैव वाचा मोहयितुं मामुद्यतोऽसि। कुतो मधुरमधुरैर्वाक्यैर्मच्चेतश्चञ्चलयसि। किमिति मां प्रतारयसि। अयि दुःखदावदन्दह्यमानां मामालोकयतः कथं ते हृदयं वज्रादपि कठोरं मार्दवं न भजति।

गृ – (अग्रतः समुपसृत्य) भद्रे! मर्त्यस्य जीवितं दैवाधीनमेव। दैवघटनायामलं शोकेन। तव भर्ता सह त्वया वर्षावध्येव जीवेदिति चेद्विधिना प्रागेव निर्णीतमासीत्तदीश्वरेच्छावशंवदया भाव्यं भवत्या। को जानाति नियतेर्घटनाम्। यथा हि प्रायोऽनुभविष्यमाणतया संवृत्तं युवयोरुभयोरपि हिताय भवेत्।

ऊ – आवयोर्हिताय? किं नाम घोरतरं स्याद्विश्लेषादावयोः। न कदापि विवाहोत्तरं विरहदुःखं प्रतीतमावाभ्याम्। क्षणमात्रमप्यनवलोकनं हृदयेश्वरस्यासहमाना कथं तं विना जीवेयम्। अपि जानाति भवान् किं भविष्यति मे वल्लभस्य विरहात्। अहो सजीवं मरणमेव मे भविता। अहह! मत्कण्ठरत्नहारोऽयं, मन्नयनानन्दः, मज्जीवनसारः खलु।

इति सदद्गदं समुदीर्य शय्यामवलम्ब्य पाणिपल्लवाभ्यां पतिं च गाढमाश्लिष्य मुहूर्तं निश्चला समतिष्ठत तरुणी।

गृहा – भ्रान्तिरेव खलु प्रीतिर्मर्त्यानाम्। मायैव सा प्रतारयति मोहयति च मानवान्। न ह्येषा परमपदं तान् नेष्यति।

इति वदतस्तस्य लोचनतेजः क्षणं पक्ष्मभ्यामाच्छादितम्।

ऊ – (सोद्वेगम्) कथम्। आवयोः परस्परप्रेम भ्रान्तिरित्युच्यते भवता? नहि नहि। तदेतत्तारामण्डलस्य वास्तविकत्वं बिभर्ति। अस्यापहरणान्मज्जीवनसारलोपो भविष्यतीति विद्धि।

इत्युदीरिते तया प्रकम्पनसंत्रासादिव सहसा मन्दिरस्य वितानमकम्पत। गृहागतस्य च सद्यो वचनसमाकर्णनजनितसंत्रासादूर्मिला वेपमानाङ्गयष्टिस्तस्थौ। ततश्च सतेजोमण्डलो भव्यपुरुष ईषत्स्मेराननस्तामुपदेष्टुं पुनरुपाक्रमत। व्रजात्मनो दुहितृवत्सलयोः पित्रोर्गेहमि' ति।

ऊ – हन्त! आ बाल्यादनाथया बान्धवैरनाथबालिकाश्रमं प्रेषितया मया जननीक्रोडसुखं नानुभूतमं न वा पितृलालनामृतरसः समास्वादितः किल। अथ संजाताष्टादशवर्षा द्विजेतरेण कृतपाणिपीडनमात्रैकदोषाहं तिरस्कृता परित्यक्ता च तैर्बान्धवैः। अथ कस्याग्रे दुःखं निवेदनीयम्।

गृहा – प्रायो विवाहपूर्वमेवावगमनात् तैस्तव पाणिग्रहणमनेन तरुणेन सार्धं व्यरुध्यत।

इत्युक्तवन्तं तं नेदीयांसमालोक्य विस्फारितनयनोर्मिला नवनीतकपोला चिन्तामहार्णवकल्लोलसंक्षुब्धहृदया चित्रलिखितेव जडीभूतेन चावर्तत।

गृहा – भवत्याः सुखमन्तरेण नाचिन्तयन् किञ्चिदन्यत् बान्धवास्ते। तद्विरोधस्तव हितायैवेत्यकथयिष्यंश्चेत्तदा सोपहासं तान्व्यडम्बयिष्यः। एवमेव विरहस्तव भर्तुर्दुःखप्रदोऽपि मिथः शुभाय भवेत्।

इत्युदीर्य स भव्यपुरुषः पुनर्निमील्य नयने तस्यै चिन्तनावसरं प्रदित्सुरिव क्षणं किञ्चित्पृष्ठतोऽपससार। 'नहि नहि' इति पिहितकर्णी सहस्तविक्षेपमूर्मिला चुक्रोश।

गृहा – भद्रे श्रृणु मे वचः। दीर्घकालो व्यतीतः किल समागतस्येह मम। अपरं कार्यमस्ति मे। सत्वरं गन्तव्यमितो मया।

इति सामिकर्णजल्पितां तद्गिरं समाकर्ण्य 'किं कार्यम्? कस्त्वम्? इति ललाटतटमङ्गुलीभिर्निष्पीडयन्ती युवत्यब्रवीत्। ततश्चान्तःप्रेरितेव

पवित्रभूता स्ववैवाहिकमंगलसूत्रमालिका स्वग्रीवायां सुरक्षितास्ति न वेति निश्चेतुमिव तां परामृशत्। तत्क्षणं क्रोडगता कृपाणिका नेदिष्ठासने न्यपतत्।

गृ – प्रथमं तावत्तवोपकर्तुं साहसाच्च त्वामभिरक्षितुं समायातवानहम्। अतोऽधिकाख्यानेन किम्।

इत्यधिकाधिकान्तिकं यावदुपैति तावदूर्मिला व्यलोकयत्प्रतिक्षणं भर्तुराननस्यैधमानमृत्युसूचिकां पाण्डुरधूसरताम्। गृहाभ्यागतेनोक्तसंदेशस्य भूतार्थमवबुध्याकाण्डं भयग्रस्तोच्चैस्तरामाचुक्रोश।' मुञ्च मे हृदयेश्वरम्। जहाहि जहिहि जहीहि तम्।' इति साम्रेडमभ्यर्थ्यत तया। अलमाक्रोशेन। न हिंस्यते मयासावद्यापि। इति पुनर्निगद्याभितो वीक्ष्य च क्षणं जोषं स्थितवान् गृहागतः।

अथ पुनस्तेनोदीरितम्। 'त्वद्भर्तुरन्तरात्मनैवास्ति मे विधेयं न तु तद्देहेन। इति तद्वचनमाकर्ण्य शूलेनैव तोद्यमानकर्णी भ्रुवावाकुञ्च्य गलितगात्री सवेपथुर्वितस्थेऽसौ। स च रुग्णस्य पाण्डुवदने दत्तदृष्टिर्हस्तावुन्नमय्य कथमप्याकारयितुमिव क्षणं निःशब्दं तस्थौ। सा च साक्षेपं किञ्चिदुत्थाय समुपाविशत्पुनश्चासने संग्रथितहस्ता। ततश्च नमितजानुर्भूमौ समुपविष्टा बद्धकरपुटा सप्रश्रयं सगद्गदं च व्यलपत्।

ऊ – भगवन्! न करिष्ये किमपि साहसमिति प्रतिजाने। मुञ्च मुञ्च मद्दयितं, प्रसीद प्रसीद भगवन्।

गृहा – (तां गम्भीरवचसा गतवृत्तं स्मारयन्) उत्तिष्ठोत्तिष्ठ। बान्धवानात्मानं चान्तरेण स्वधर्मं मा विस्मार्षीः।

ऊ – किं विधेयं स्यान्मया। तं विना किं कार्यैः।

गृहा – त्वदैहिककार्यं तं प्रति, तन्नाम प्रति, तद्वंशं प्रति।

ऊ – हन्त! भगवन्! कथं तच्छक्यं विना....

इत्यर्धसमाप्तवचनावसन्नोर्मिला भूमौ निपत्य मुक्तकण्ठं व्यरोदीत्। क्षणोत्तरमुन्नमितनयनयुगला पत्युर्मुखं मृत्युच्छायावृतमालोक्य भयात्स्तम्भितगात्री बभूव। अकाण्डमबोधितया यत्कृपाणिका निजहस्ताच्च्युतासीदिति। अन्विष्य च तामुपालब्धासनस्योपधान-कानिचित्पदानि पश्चादचलत्। सदयस्मितेन तस्य समाश्वासिता

समुदतिष्ठदूर्मिला तस्य सम्मुखीभूय च भृशं कम्पमानदेहयष्टिरधोमुखी जोषं वितस्थे। अतिनम्रा शिरो यावदुदनमयदियं तावदवाप्ताशीर्वचनमिवात्मानमाकलयत्। अभ्यागतश्च पृष्ठतः परावर्तताधिकाधिकम्। तच्छिरोऽभितः पूर्णं देदीप्यमानं प्रभामण्डलमिदानीं शनैः शनैर्विरलमभूदस्फुटा च तदाकृतिः। पर्यन्ते प्रातःकालीनच्छायापटलं एवालीयत।

'एषोऽन्तर्गतोऽस्ती' ति सहसा मन्दस्वरेणागदद्रुग्णः।'

अथ कृपाणिका सझणत्कारं भूमौ न्यपतत्। ऊर्मिला चाकस्मादासनात् सञ्चालितेव सपदि समुत्थायोपाविशत्ततश्च करयोरङ्गुलीः परस्परं संयोज्यं हस्तौ प्रसारयन्ती। विच्छिन्ननिद्रेव मन्थरा प्रामार्क्षीदक्षियुगलम्। शयनागारं सहस्ररश्मिरश्मिभिर्देदीप्यमानमासीत्। कपोतकुक्कुटशुकसारिकादयः पक्षिणोऽनवरतं गृहाद्बहिः किलकिलायन्ते स्म। मन्दिरस्यास्यबाह्यभित्तिलग्नाया मल्लिकावल्लर्याः परिमलः सर्वतो गन्धवाहेन विस्तारित आसीत्। 'यदि सन्तरिष्यति रात्रिमिति' क्रियासमभिहारेणात्मनि ब्रुवाणा सरभसमूर्मिला शय्यान्तिकं पातितोभयजानु समुपाविशत्। तत्क्षणं रुग्णः समुन्मीलितनयनो मन्दमस्मेष्ट। भावबोधपुरस्सरं तन्मुखमूर्मिला निरूप्य प्रेमपारावारपूरप्लावितान्तरङ्गा दयितस्य पाणिं मुहुर्मुहुश्चुम्बित्वा तं लोचनाम्बुधाराभिरस्नापयत्। तस्या म्लानशुष्काननमाशाङ्कुरेणोदभासत। ततश्च सा प्रह्वीभूय कृपाणिकामुदतूतुलत्। सोत्कण्ठं च तां पर्यचुम्बत्। युवत्या प्रहर्षोद्रेकेण देवतावदाराधिता–ऽभूत्कृपाणिका। पुलकोदञ्चितं शरीरमूर्मिलाया अभून् मनश्चोत्साहसुधासारै–रभिषिक्तमिव समुल्लसितं समजनि।

पञ्चषघटिकाभ्यः प्राग् वसुंधरा या मरुस्थलीव शून्यशून्येव भाति स्म सेदानीं प्रफुल्लजपाकुन्दबकुलमालतीमल्लिकादिकुसुमैः समुल्लसिता नन्दनवाटी–वातिमनोहारिणी तां समानन्दयदमन्दम्।

पतिव्रतानां पुण्येन किंवा न भवति क्षितौ।



## ३. परित्यक्ता

इदं प्रथममेव ममागमनमासीत् कश्मीरेषु। उत्तरभारतालङ्कारायमाणा नन्दनवनविडम्बिन्यः कमनीया मरकतोपत्यकाः प्रथममेव मया निभालिताः। आगामिवर्षाकालस्य पारुष्यमधिकृत्य प्रागेव बहुधा बहुभिः प्रबोधितोऽपि कोहालाख्यग्रामादारभ्य पञ्चविंशतिं योजनानि सृष्टिसौन्दर्य दिदृक्षासहकृतकौतुकाक्रान्तचेता अहं मार्गदर्शकद्वितीयः पादचारेणैव गन्तुं प्रावर्तिषि। मार्गदर्शकस्तु कश्मीरदेशपरिचितस्तत्रत्यजनाचारविचार–ज्ञस्तदितिवृत्तनिष्णातश्चासीत्।

अथ कोहालाग्रामात्प्रभृति नैकसप्ताहं पर्यट्य चारुग्रामाच्चारुतरं ग्रामं, विशालादेर्विशालतरमद्रिं, रम्योपत्यकाया रम्यतरोपत्यकां, महाजलप्रवाहान्महत्तरजलप्रवाहं पश्यन्तौ चाहिण्डमानौ बारामुल्लानाम्नो ग्रामान्नातिदूरमावां सायं सम्प्राप्तौ। अथ सहसा समुत्थितो झञ्झावातः। तडितः कडकडशब्दैरतिभीषणैर्बधिरीकृतं दिङ्मण्डलम्। ज्वालामुखसहोदरमीदृग् विद्युद्विद्योतनं न मयाऽवलोकितपूर्वमासीत्। प्रभञ्जनस्य प्रलयकालीनस्येव प्रचंडतायां पतितौ क्षेत्रिकौ समुज्ज्वलज्वालाविडम्बिन्या क्षणप्रभया क्षणाच्च क्षणदायां भस्मसात्कृताविति पुरो नागन्तव्यमिदानीमिति मार्गदर्शको मां व्यज्ञापयत्। नेदीयसीं धर्मशालामन्तरा विविक्तवासिनोऽभिजातस्य महाजनस्य कस्यचन नासीदन्यत्संश्रयस्थलम्। इति विज्ञापितमपि मां दोलायमानमानसमालोक्य पुनः साग्रहमभ्यधान्मार्गदर्शकः। भवत आतिथ्यपुरःस्सरं गृहस्वामी संभावयिष्यतीति न सन्देहः। कांश्चन मानुषविशेषानन्तरा सर्वेऽप्यध्वगाः सत्क्रियन्ते सदनेऽस्मिन्। इति कञ्चन पूर्ववृत्तान्तं विस्मृतप्रायं विमृशन्निव समभाषत मत्सहचरः। के ते मानवा इत्यनुयुक्तो मया स प्रोवाच। परिव्राजकाः कषायवस्त्रधारिणः प्रतिषिद्धप्रवेशा इह। जुगुप्सते हि गृहनायकस्तेभ्य इति स मन्दस्वरेणात्मगतं कथयन्निवागदत्। अथ गत्यन्तराभावान्मयानुमोदिते समाश्रयार्थिनावावां प्रचलितौ नचिराच्च निर्दिष्टधर्मशालां समासन्नौ। विचित्रोऽयं निलयः किल

लघुपर्वतोपरि निर्मित आसीत्। तदन्तर्गृहात्प्राङ्गणं पार्श्वयोश्चानेकभित्तिगतप्रतिमानस्थानं पूर्वकालीनं मठं मामस्मारयत्। प्रवेशद्वारे पलितकूर्चेन स्थविरदौवारिकेण गम्भीराकृतिना सादरं प्रवेशितौ प्राङ्गणमारोहाव गृहाभ्यन्तरप्रघणम्। इत उपत्यकायाः प्रफुल्लसान्द्रखस्खसक्षेत्राणामतिमनोहरोऽयमालोको लोचने मे प्रामोदयत्तराम्। सौदामन्या झगझगायमानाया दीप्त्या शोणितवर्णकौशेयाच्छादितेव सा स्थली प्राचकासीत्। विजने वर्तमानमिदं मन्दिरं कस्याश्चिद् विलक्षणाख्यायिकायाः पृष्ठभूमिरिव प्रत्यभान्मे। अपार्याप्तप्रकाशो निवासोऽयं गृहस्वामिनोऽन्धकाराभिरुचिमसूचयत्। परितो मन्दिरं हि व्यलसन्नानाविधविटपिनः संप्रफुल्लकुसुमसौरभ्याढ्या विविधफलभारावनताश्च। बहिःस्थालोके रमणीयेऽपि निवासस्यान्तर्गतनिरानन्दनैराश्यादिवैषम्यात्तत्र प्रविष्टमात्रोऽहं कयापि खिन्नतयाभिभूतोऽभवम्। विलीनासीत्क्वचित्कापि गुह्यता क्वचित्कोऽपि विडम्बनापारुष्यान्वितो विमोहश्च।

अथ तावत्समाप्तस्नानसन्ध्यादिकार्ययोः परिभुक्तसरससुलभभोजनयोर्गृहाभ्यन्तरालिन्दे समुपविष्टयोर्मन्दिरस्वाम्यतिक्रान्तनिजाभ्यासिकक्रम आवयोरन्तिकमुपस्थायान्वयुङ्क्त–कच्चिदार्यौ यथाविधि सत्कृताविति। कोणे निवेशिताया दीपिकाया मन्दप्रकाशे तदाननं दृग्गोचरं नाभूत्। मदीयमार्गदर्शकस्यापरिचितोऽयं महाभागः किचिन्मया सार्धं समभाषत। ततश्च मां नमस्कृत्य निजशय्यागारमगमत्। तमिस्रायां चाहं सहचरद्वितीयो धूमपानभोगसुखमनुभवन्नवास्थिषि। अथेदानीं प्रभञ्जनस्य प्राथमिकोग्रतायां विरतायां गुटिकास्थूलं वर्षितुमारब्ध मघवा। प्रघणस्याधःस्थं प्राङ्गणं पटलविहीनं जलौघेन समपूर्यत जानुदघ्नम्। आगामिनि दिवसे पर्यटनं दुःसाध्यमिव प्रत्यभात्। अथान्धकारावृते प्रवणेऽस्मिन् घटिकार्धमवस्थाय निद्रासुखमुपभोक्तुं यावत्प्रवर्तावहे तावत्कश्चन दीनदीनः शब्दः श्रुतिसरणिमावयोर्न्यपतत् तदनु सद्यो घण्टाया झणत्कारोऽश्रावि। किमेतदिति मया कुतूहलात्पृष्टः सहचरो मे प्रत्युवाच। कोऽप्याश्रयार्थीति। गृहाद्बहिः शब्दो नेदिष्ठतां प्रतिपेदे। न चिराश्चोद्घाट्य

प्रवेशद्वारं काचन योषित्पञ्चत्रिंशद्वर्षदेशीया हस्तशकटं प्रचालयन्ती प्राङ्गणं छायाकृतिरिव प्राविशत्। शकटस्य पूर्वभागलग्नदीपिकायाः प्रकाशेनालक्ष्यत यत्तस्याः स्विन्नकषायवसनं तदङ्गयष्टिलग्नमासीद् येन शरीरकृशता तस्या विशेषतो लोचनपथमगमत्। हस्तशकटे पिण्डीभूताष्टनवर्षीयस्य किशोरमानुषाकृतिः शयानासीत्। विलोक्य परिव्राजिकां तां मदीयः सहचरः सविस्मयमासनात्सपदि समुत्थायाधः स्थितामङ्गनां मृत्युलोकात्पुनरुत्थितामिव निरीक्षितवान्। तदेषा परिचिताऽस्येति मे स्फुटीभूतम्। प्रविष्टमात्रायाः प्राङ्गणे वृद्धप्रतिहारः शरणार्थिन्यास्तस्या असहायतामनादृत्य निष्ठुरं तामपसारयितुं प्रावर्तत। अथ सा हस्तशकटमधिशयानं बालं गोपयितुमिव क्षणं हस्तपल्लवाभ्यामाच्छादयत्ततश्च सद्यो यथागतं निर्गत्य सोत्फालमन्धकारमहोदधौ सह शकटेन न्यमज्जत्। सूचीभेद्यतमिस्रायां तपस्विन्यां निक्षिप्ताया अशरणायाः स्त्रियास्तस्या दीनदीनतामालोक्य दयाविष्टहृदयोऽहं सहचरमब्रवम्। 'मन्दभागायै तस्यै कियदपि धनं दातुमुत्सहे येन सा क्वाप्याश्रयं प्राप्य निशां सुखेन गमयेदिति'। मत्सूचनामननुमन्वान इव मार्गदर्शको विनोत्तरं क्षणं जोषमवतस्थे। न चिरात्तु साभिनिवेशं मामधोऽनैषीत्। निशब्दं च प्रवेशद्वारमुद्घाट्यापासर्पावावाम्। गृहाद्बहिःस्थां भित्तिमवलम्बमाना सवेपथुशरणाबला व्यलोकि। सह च नेदीयसः पुरातनचिनाराख्यतरुविशेषस्याधो निरन्तरपरिश्रमक्लान्तानना कम्पमान सर्वावयवा कञ्चन दुष्प्रतीकारमाधिप्रधानं व्याधिं स्पष्टयन्ती भस्मरूषिताङ्गी, शकटस्थं बालकं मधुरमधुरगिरा सान्त्वयन्ती स्थितासीत्। नानया जीर्णकषायचीवरवेष्टितविग्रहयापि बाष्पबिन्दुसन्दोहप्रवाहेण कलितकपोलया विकलिताङ्गयष्ट्या सामान्यवनीपकया भाव्यमिति निरचिनवम्। तस्याः पिङ्गलवर्णे वाताहते चानने क्षुद्वेदनाविच्छाये सद्वंशशंसिनी कापि दिव्यच्छटाऽद्योतततराम्। विचिन्तितं च मया यदनया तपस्विन्या कस्मिन्नपि दुःखप्रधानसंसारनाटकं दुःखिपात्राभिनेत्र्या भाव्यमिति। अतो यथापूर्वनिश्चितं तस्यै धनविश्राणनं कर्तुं नापारयम्। मत्सहचरो मम दोलायमानचित्तमनुमाय सपदि परिव्राजिकां

सम्बोध्याब्रवीत्। अयि भगिनि! कुतः शर्वर्यामीदृश्यां पर्यटितुं भवती प्रवृत्तेति। सा च सकडकडदन्ततिरनाथापि मूर्तिमती धीरतेव प्रत्युवाच – भ्रातर्व्रतोपदानार्थमवन्तिपुरस्थं देवतालयं प्रति प्रस्थितासमरुणोदये। प्रातरद्य को नु व्यतर्कयद्भाविनं प्रलयमीदृशमिति। कुत्र यास्यति भवतीदानीमिति प्रष्टुमधृष्णवम्। सा च प्रत्यभाषत – 'विधातुरवनी विपुला खलु। अवश्यं कापि कोणिका मयोपलप्स्यते। दयोदन्वान् भगवान् दामोदरो दीनाया मम दयिष्यत एव। अस्त्यदूरमितो रिक्तमेकं पुरातनं मरुत्पुत्रायतनं पर्याप्तं शकटमिमं धारयितुम्। एतं निधाय तत्र समीपवर्तिनो वृक्षस्य कोटरे स्थास्यामि सुखम्। इत्यपूर्वधैर्येण नौ समाश्वासयत्सा। पूर्वकृतो धनविश्राणनसंकल्पो मे मार्गदर्शकेन तस्यै निवेदितः, परं कृतज्ञतापूर्वं तमनङ्गीकृत्य व्याजहार सा पुनः।' अयि भो भद्रमुखाः! अवश्यमनुभोक्तव्यं कृतं कर्म शुभाशुभमिति पुराणवचनानुसारेण जन्मान्तरपापस्य फलमनुभूयते मयेदानीम्। अपरिचित जनस्यालयेऽभीक्षणम– भ्यर्थितो मयाऽश्रयः, परमज्ञातजनान्नाद्यावधि स्वीकृतं धनं मन्दभागिन्या मयेति रुद्धकण्ठं नयने वसनप्रान्तेन प्रमृज्याभ्यधादेषा। तदनु वात्सल्यपूरप्लावितैर्वचनैः सन्त्रस्तामाकृतिं शकटस्थां सान्त्वं सान्त्वं पुरः पङ्किलमार्गे शकटं प्रचालयन्ती पयोदपटलप्रावृततया गगनस्य तमःप्रच्छादितायां भूम्यां शनैः शनैः प्राचलत्। तस्या अद्भुतेन धैर्येण विस्मायितावावां तमिस्रायां मार्गमन्विष्यन्ती–माकृतिकिंञ्चनाया निरूपयन्तौ क्षणं स्तब्धाववास्थिष्वहि। अथ कम्पित– समस्तान्तरिक्षं सकडकडं गर्जितं पौनःपुन्येनाकर्णि। अन्तरान्तरा च दुष्टजनसम्पदमिवानुकुर्वती क्षणदृष्टनष्टालोकप्रसारा व्यद्योतत क्षणप्रभा। पूर्वतोऽपि प्रचण्डतरेण द्वितीयेन प्रभञ्जनेन सकलधरातलं जलासारैः प्लावयिष्यता प्रलयेन प्रत्यासन्नप्रायेण भाव्यमिति शङ्कितं मया। सृष्टेर्निष्ठुररोषाऽऽक्रान्तां पङ्गुशिशुद्वितीयां परित्यक्तां वराकीं शोचनीयदशाभिभूतां तां चिन्तयन् करुणोद्रेकवेपमानहृदयः किंकर्तव्यतामूढ इव मुहूर्तं स्थितवानहम्। कषायाम्बरधारिण्या दीनदीनायास्तपस्विन्या आश्रयार्थिन्या दयस्वेति गृहस्वामिनं प्रार्थयितुमिच्छन्तं मां मत्सहचरः सनिषेधं रुन्धानोऽभ्यधात्।

परकार्येषु व्यवहारो न साम्प्रतमिति। अथ गत्यन्तराभावात् सुतरां निषण्णः सहचरेण सह प्राङ्गणोपरिस्थमलिन्दं निवृत्तः प्रभञ्जनप्रहतयोर्दैवोपहतयोर्द्वयोः परित्यक्तयोर्मूर्ती- मच्चेतसो निरासयितुमक्षमोऽवोचं सहचरं 'कीदृशीयं घटना विधेरि'ति। 'स्वकीयेन कर्मणा निहतास्ति सा। मन्दभागां तां विना न कोऽप्यत्र दोषास्पदं खलु।' इति प्रत्यभाषत मार्गदर्शक ईषन्निर्घृणेन स्वरेण। परिव्राजिकायामनुजिघृक्षयाप्राक्षं 'किमर्थं भवद्भिरुपालम्भपात्रं निश्चितास्ति से'ति। 'भागधेयं मनुजस्यात्मन एवाधीनं खलु।' इति मन्दस्वरेणोदीरितं सहाध्वगस्योत्तरं शोचनीयवार्ताशंसीत्युत्प्रेक्षमाणेन सपदि मयोक्तम्। 'कश्चिद्भवतामस्या इतिवृत्तं विदितमि'ति। 'अथ किम्। अतिशोचनीया खलु वार्तास्याः'।' इत्यवदत्सहचरो मे दीर्घं निःश्वस्य। तदनु स तमाखुपात्रं प्रज्वलय्य सौख्यार्थं प्रसारितपादः परिव्राजिकाया वृत्तान्तं कथयितुमुपाक्रमत।

''आसीदेकदा सा निखिलपञ्चाम्बुदेशे श्रीमत्तमस्य श्रेष्ठिनो गेहिनीति विश्वस्येत किं भवद्भिः'' इत्यनुयुक्तोऽहं क्षणं विमृश्याब्रवं 'प्रतीतोऽस्मि खलु तद्विषय' इति। मत्सहायो मुहूर्तं विचारपरः स्थित्वेतस्ततो निक्षिप्य दृष्टिं नास्ति कोऽपि सन्निधौ निभृतश्रावीत्याश्वास्यात्मानं सहजस्वरेणारब्धवान् कथाख्यानम्।

दशभ्यो वत्सरेभ्यः पूर्वं नासीत्किमपि धरातले दुरासदमेतया। श्रीलोऽयं पत्नीप्रणयी पञ्चाम्बुदेशस्यामृतसरनामनि नगरे महत्तमसौधानामनेक- फलवृक्षवाटिकानां निखिलभारतदेशपर्याप्तफलोत्पादिनीनां स्वामी देवतामिवैतां समभावयत्। आसंश्च बह्व्यो विपण्योऽप्यस्मिन्नायत्ताः। प्रतिवर्षं ग्रीष्मसमये जायापती शीतानिलसुखोपभोगार्थं कश्मीरेषु भूस्वर्गायमाणेषु श्रीनगरवर्तिनि रमणीयभवने दलनाम्नः सरसस्तटे कमलदलाख्ये निजालये कतिपयमासान् कृतावासावास्ताम्।

'अपि केनापि दुष्टकामुकेन दत्पत्योः सुखं विध्वंसितम्'। इति सहसानुयुक्ते मया 'एवमेव प्रत्यभात्तदानीमि' त्युक्त्वा क्षणं विरम्य पुनराख्यातुमारब्ध सहचरः।

मुग्धाया अतिश्रद्धालुत्वादेव विनाशस्तस्याः समजनि। निखिलवैभवद्युत्या समुद्भासितमपि सर्वभूषाभिभूषितमपि मृष्टान्नफलादिवैपुल्यवदपि रजतपात्रसंभृतमपि प्रत्यग्रपुष्पसौरभ्यसुरभिप्रमदवनेन समीपवर्तिना सुखसागरायितमपि जितेन्द्रभवनमपि गृहभूषणभूतस्यापत्यस्य विरहेण शून्यमेवासीत्सदनं तयोः। दम्पत्योः परस्परप्रेमबद्धयोः कौबेरसम्पद्विडम्बिनि गेहे सन्ततेरभावात्प्रापञ्चिकसुखरसो मक्षिकापतनात्क्षीरमिव दूषितो बभूव। नन्दनानन्दाभिलाषिण्यानया सन्नार्या धार्मिकवृत्तिसंपन्नया सह भर्त्रा नानाविधानि व्रतानि समाचरितानि भारतवर्षस्य भूयिष्ठानि पुण्यानि तीर्थानि च समासेवितानि। प्रत्यहं तया जप्ता जपाः। अनुष्ठिता महारुद्रादियज्ञाः प्रतिवत्सरम्। प्रतिसायं पण्डितप्रकाण्डेभ्यः पावनतमानि श्रीभागवतादिपुराणानि श्रुतानि सपरिवाराभ्यां दम्पतीभ्याम्। आसेव्यन्त तया च नानाविधभेषजानि। परं नैकोऽप्यभ्युपायः फलोन्मुखत्वमापेदे। निराशापिशाचिकया कवलितचित्तायास्तस्या जीवनं शून्यशून्यमभूत्। अथ गच्छत्सु कतिचन वर्षेषु तस्या अनुत्साहः प्रतिदिनं वृद्धिं गतः। पञ्चविंशतिवर्षदेशीयाप्यात्मानं वृद्धमाकलयत्। तथा वराकीयमपि भर्तृबान्धवानां तिरस्कारभाजनमभूद्यथा वन्ध्याः प्रायेण जनधिक्कारपात्रं भवन्ति। अधिक्षिप्ता च तैर्भृशं कटुशब्दैः कवलीकृता च मानसव्यथयाऽवसन्न–प्रायाऽवतस्थे। अथ तस्मिन् समये सर्वतः पञ्चाम्बुदेशमण्डले पूजितस्य कस्यचन योगिनोऽलौकिक प्रभावजन्याद्भुतवार्तास्तदीयश्रुतिपथे न्यपतन्। नानादिग्भ्यो यात्रिकाः समाययुस्तत्सविधे–केचिन्निरुपायव्याधिग्रस्ताः, अन्ये दुर्भाग्यपरम्पराप्रहताः, केचिदितरे जन्मनः प्रभृति विकृताङ्गानामपत्यानां चिकित्सार्थिनः, केचित्पुनर्मुनेर्दर्शनकुतूहलादेव। प्राहुर्जना यत्स प्रतिवर्षं हेमन्तकाले यदा श्रीमदमरनाथस्य हैमदेवायतनान्निर्गत्यावारुक्षत्तदा सहस्रशो यात्रिका आ हिमालयादाकन्याकुमारीतआमुक्तमुक्तामाणिक्यवैडूर्यहीरकमरक–तपद्मरागादिच्छुरिताभरणादिभिर्वोखारादेशीयरुचिरदुकूलाम्बराणां

रजतहाटकमयपात्रैर्विरलविरलफलपुष्पपूरितमञ्जूषाभिरमूल्योपहारैः सार्धमहमहमिकया समुपययुः। योगीन्द्रमेनं निरतिशयप्रभावबद्धादरो मुग्धजनो बहुतिथं कालं पूजयामास। सद्यः साक्षीकृता भवद्भिरियं तपस्विनी चापि तस्य दिव्यशक्तौ सञ्जातकुतूहलादौ ततस्तद्विमोहजाले न्यपतत्। व्यवहारकुशलस्य शङ्काशीलस्य भर्तुः परिव्राजककुलं सर्वथा तिरस्कुर्वाणस्य विनानुमत्या स्वाभीष्टसिद्ध्यर्थं सा प्राकृतजनस्य देवताभूतमेनं मुनिं दिदृक्षुर्महाशापूर्णमानसा कश्मीराणामतिरमणीयोपत्यकाभ्यन्तरनिवेशिते पहेलगावनामनि ग्रामे कृतावासमाससाद। तस्मिन् रमणीयावसरे ग्रीष्मर्तुप्रसङ्गतः सरोजदलास्तीर्णस्य दलाख्यसरोवरस्य तटे श्रीलः सभार्यः कमलदलनामनि निजालये निवसति स्म। अथ तापसस्याश्रमान्निवृत्ताया अपत्याकाङ्क्षिण्याश्चेतसि दृढाशाङ्कुरः समारुक्षत्। तदनु रत्नखचितहिरण्यभूषणानि हरिणनयना सा द्रविणपूरिताः कन्थाश्च तस्मै सानन्दमुपायनीकृत्य तस्यापारप्रभावे क्रमेण जातप्रत्ययाभूत। प्रतिदिनं किंचन पानीयं तस्यै व्यतरन्मुनिः। अनेन जह्नुकन्यायाः पूतसलिलेनाभिलाषो भवत्या ध्रुवं पूरयिष्यत इति तेनाश्वासिता वरवधूः प्रतिरात्रं मन्दानिलान्दोलिता लतेव महाशापूर्णमानसा नवोढेव कम्पमानाङ्गयष्टिः पावनोदकं तत् सेवते स्म। सप्ताहद्वयान्ते च स्वप्रकृतौ विकृतिं कामपि वीक्ष्य परमानन्दतुन्दिला विकसितमुखाम्भोजा स्वशरीरजनितविकारविषयेण तापसस्य कर्णौ सनाथीकृतवती सा, न पुनः श्रुती स्वनाथस्य। भवत्या मनोरथसिद्धिसूचकमिदं परिवर्तनं खलु। परं परिपूर्णफलनिष्पत्तिर्जपध्यानत- पोभिरेव संपाद्यते तस्मादस्मदाश्रमे कञ्चित्कालमवस्थातुमर्हति भवती। स्वार्थत्यागः स्वकीयवस्तुजातोत्सर्गश्चापेक्ष्यतेतराम्। वरदाया देवतायाश्चरणा- रविन्दयोः पुरो भवत्या सर्वस्वमर्पणीयम्। प्रसादप्राप्तौ सर्वमपि भवत्यै पुनः समर्पयिष्यते'। इति तस्यादेशं श्रद्धालुः सिद्धवाक्यविश्वासादिव मुकुलितकरकमला प्रमोदाश्रुपूर्णा प्रत्यपद्यत सा। समये तस्मिंस्तदीयदयितः कार्यवशात्पश्चाम्बुदेशं गतवानासीत्। पत्युरनुपस्थित्या प्रत्यूहपरिहारेण

समभूत्सुकरं तस्या निष्क्रमणं गृहतः। अथैकस्यां निशीथिन्यां परिजनेषु सुप्तेषु संचित्य निःशेषमाभरणजातं स्वहस्तगतं भूरिद्रविणं च निभृतमविचारयन्ती दुर्भागधेयं सन्तत्येकतानहृदया स्वसंकल्पितार्थसंफुल्लवदनारविन्दा दयितस्य प्रत्यागमनात् पूर्वमेव निवर्तिष्य इति निर्धार्य सवैभवं सदनं विसृज्य निःशङ्कं सूचीभेद्यतमस्ततायां तमिस्रायां, पूर्वनिश्चितस्थानं प्रत्येकाकिनी प्रतस्थे। द्वित्रसप्ताहोत्तरं प्रायेण समाप्तकार्येण श्रीलेन निवर्तितव्यम्। परमतिवृष्टिवशात्फलवृक्षवाटिकासु कार्यनिवृत्तौ संजातायां सप्ताहाभ्यन्तरेऽकस्मादेव गेहिनीशून्यतया शून्यमिवालयं न्यवर्तत।

विनोदाभिलाषिण्या रमण्या क्वापि गुप्तया भाव्यमिति तां भूयो भूयः समाहूयापि यदा तत्प्रतिवचनं नाप्नोत्तदा सर्वानपि परिजनानाकार्यान्वयुङ्क्त तान् गृहिण्या वृत्तम्। परं स्वामिन्यां विश्वासघातं कर्तुमनिच्छन्तस्ते प्रत्युत्तरमदत्त्वा तूष्णीं तस्थुः। ततश्च स्वामिना निर्बन्धातिशयेन प्रणोदितास्ते स्वामिन्या निष्क्रमणवृत्तं खण्डश एव न्यवेदयन्। हन्त! खण्डशो निवेदनेन महाननर्थो व्यधायि। यदि सविस्तरं तस्मै वृत्तान्तस्तैर्न्यवेदयिष्यत तदा न्यवारयिष्यत प्रायः शोचनीयोदर्कस्तस्या निरागसः साहसकर्मणोऽपि। संशयपिशाचेन श्रेष्ठिनश्चेतसि नैककुत्सिततर्कवितर्काणां तुमुले व्यतिकरे समुत्थिते केनाप्यज्ञातेन पुरुषेण सार्ध भार्यायाः पलायनं व्यभिचारहेतुकमेवेति शङ्कितवानसौ। अपि चाभरणजातद्रव्यापहरणात्संशयोऽस्य दृढीभूतः। योगीशंमन्येषु कपटपरिव्राजकेषु विश्वासातिशयजन्या अनर्था विदिता एवासंस्तस्य, तथापि मन्दभागां गेहिनीं परपुरुषमोहितां मन्यमानः परित्रातुं नोदसहत। विनैव दोषं मात्सर्यपूरितैर्निन्दिता पत्या च कोपविषयीकृता मृतप्रायेवाजायत सा। कुलकलङ्किनीं तामाकलयतस्तस्य विवेकशून्यमतेः पलायनद्रव्यापहरणादिदुष्कृति- जातमसह्यमभूत्। वरं तस्याः कालवशान्मरणं न तु कामुकपरवशतया पलायिताया जीवनमिति मुहुर्मुहुर्विचिन्तयन् विध्वस्तस्य कुलस्यात्मनो दुःखदविचारं स्मरणसरण्या कण्टकमिव निष्कासयितुमिच्छन् क्वचिद् दूरदेशं प्रति पर्यटितुं श्रीलोऽय मतिमकरोत्। अथ कतिपयदिवसानन्तरं निःशेषपरिजनगणमपास्य सदनस्य

सर्वोपकरणजातं विक्रीय पिहितद्वारं तच्च विसृज्य श्रीनगरान्निर्ययौ।'' इत्युक्त्वा मत्सहचरः पुनः प्रज्वलयितुं तमाखुपात्रं क्षणं व्यरमत्। प्रशान्तायां रजन्यां कुतोऽपि नेदिष्ठप्रदेशाद्दीर्घोच्छ्वासः समाकर्णि। अवशिष्टकथा-श्रवणकुतूहलोद्वेगमात्मनो निरोद्धुमक्षमेण मया ततः किं संभूतं तस्या हतभाग- धेयाया इति सौत्सुक्यं पृष्टः स पुनरुपन्यसितुमारेभे।

''अथ निर्दिष्टस्थानमजानती सा सह तापसेन प्राचलद् यावत् कञ्चन ग्रामटिकामज्ञातपूर्वां निशीथिन्यां समासदत्। ततश्च तेन सा प्रापिता कञ्चन भयानकं कारागृहसहोदरमुच्चभित्तिपरिवेष्टितं निलयं निलीनं सान्द्रविटपिगुल्मेषु कस्मिंश्चिदधित्यकोपकण्ठस्थेऽरण्ये। प्रविष्टमात्रा सा प्राङ्गणं यावन्न किमपि चिह्नमाश्रमपदसूचकमवलोकयति तावच्छङ्काग्रस्ता स्विन्नगात्री क्षणं कम्पमाना तस्थौ। वृद्धमेकं सेवकं विना न कोऽप्यन्यो विशालालयेऽस्मिन् व्यलोक्यत। नासन् वामतो न वा दक्षिणतः प्रतिवेशिः। नेदिष्ठं पुररक्षास्थानं सार्धयोजनमासीत्। दुर्गसदृशं भीषणगृहमभितो विरचितभित्तिचतुष्टयादपसर्पणमशक्यप्रायमेवाभूत्। अथ तमिस्रायां समाप्य स्नानसन्ध्याभोजनादिकार्याणि तापसस्तामनास्वा- दिताहारामाहूय गम्भीरस्वरेणाभ्यधात्। 'अयि चारुमुखि! अलमिदानीं जपानुष्ठानादिभिः! न खलु ते बकुलकुसुमकोमला तनुस्तीव्रतपसे विनिर्मिता विधात्रा। तवाभीष्टप्रदातारं मामेव विद्धि। मय्येव सर्वं निक्षिप्य मम पूतचरणयोरन्तिके सर्वस्वं विसृज्य ममैव ध्यानं कुरु न पुनरन्यस्य कस्यापि।' इत्याकर्ण्य वचस्तस्य मुग्धेयं बद्धवाक् संत्रासविषमविषज्वालावलीढावयवा दुराचारस्य कष्टसंकल्पं झटिति व्यभावयत्। उदरवेदनाव्याजेन वक्तुमक्षमेति निःशब्दमिङ्गितेनैव निर्दिश्य, स्वकल्पितप्रकोष्ठस्य द्वाराणि दृढं पिधायोन्निद्रनेत्रा भयाक्रान्ता सवेपथुः स्थण्डिलशायिनी निशां निखिलां कथमपि निनाय सा। बहुलपक्षशशिकलेव क्षामक्षामा निराहारा चिन्तयन्ती निजमौर्ख्यं किंकर्तव्यतामूढा घोरकारावासात्तस्मात्कथमात्मनो विमुक्तिर्भवेदिति ध्यायं नेत्रजल- बिन्दुप्रवाहार्द्रीकृतोपधाना पिपासाशुष्ककण्ठी मृगीव व्याघ्राघ्राता व्याधिव्याजेन सन्ततं शयाना कतिपयदिवसान् कथमप्यगमयन्। वरं प्राणत्यागो न तु कलङ्कमलीमसं

जीवनमिति सा मुहुर्मुहुरात्मानं वदन्त्यधिकाधिकमतप्यत। तत्कटिबन्धगोपितमङ्गुलीयकद्वयं महार्हहीरकमणिखचितमन्तरा तस्याः समस्ताभरणजातमात्मसात्कृतं धर्मकञ्चुकिना तेनाधर्मिणा।

अथ सप्ताहानन्तरं कार्यवशात्स पिशुनोऽकस्मात्केनापि कारणेन सम्भ्रान्त इव 'द्वित्रदिवसोत्तरमिह निवर्तिष्ये रुग्णामिमां सावधानमुपचरे'ति स्थविरपरिजनमादिश्य वेश्म निःशङ्कं व्यसृजत्। सुयोगोऽयं दैवेनैव परित्राणाय स्वपथे प्रापित इति सपद्यपसरणाय बद्धपरिकरा साऽभूत्। प्रवयाः परिचरस्तस्याः शोकपारावरेण द्रुतान्तःकरणः प्रवेशद्वारमुद्घाट्य तन्निर्गमनमसाधयत्। कृतज्ञताभारभुग्नायास्तस्या निजकटिबन्धादुद्धृत्याङ्गुलीयकमेकं तस्मै प्रदातुमिच्छन्त्याः सप्रश्रयं तद्दानं निराकृत्य बद्धाञ्जलिर्भद्रं भूयाद्भवत्या इत्यभिधायाभिरिरक्षिषुरेकाकिनीमेनां क्रोशपञ्चकं वनमार्गेणान्वगच्छत्। अक्षतपातिव्रत्येयं कृतज्ञतार्णवपूरप्लावितहृदया प्रहर्षनयनाम्बुप्रवाहेण क्षालितकपोला मुर्हुमुहुर्विभोः स्तवं विदधाना सर्वात्मना च महिमानं तस्य गायन्ती महार्हभूषणनिकरविनाशं तृणमिव विगणय्य सायासं प्राचलत्। पापिष्ठो मुनिम्मन्यो मामवलोकयेत्क्वाप्यध्वनीति प्रतिक्षणं संत्रासात्कम्पमाना च क्वचिद् गुल्मेष्वन्तर्हिताभूत् क्वचिश्च कस्यापि क्षेत्रिणः कुटचामाश्रयमभ्यार्थयत। ज्येष्ठमासेऽस्मिन् जलदपटलच्छन्ने क्वचिद्विलोकयन्ती मयूरनृत्यानि क्वचित्सान्द्रद्रुमेषु टिट्टवीपक्षिकुलानामारवं श्रुण्वती दूराध्वन्यचलत्। अजिरेऽपि या नाचलत्पूर्वं सेदानीं पद्भ्यां मासमेकं पर्यट्य पर्यट्य भर्तुर्गेहं समासदत्। दूरतो गगनचुम्बिनीं सुराख्यद्रुमश्रेणीं वीक्ष्य नानाविधदुर्निवारचिन्तागृहीतचित्ता धडधडयमानेन चेतसा बाष्पोद्गारेण स्रस्तपक्ष्मपङ्क्तियुगला वेपमानविकलाङ्यष्टिः क्षुत्पिपासाकुला मुर्हुमुहुरात्मनि व्यचिन्तयदविचारिणी–अहो, कथमहं विश्वासघातिनी क्षम्येय स्वामिना। तथापि शरणान्तरहीना मन्दभागा दयितस्य पादपद्मयोः शिरो निधाय नेत्राम्बुभिस्तदङ्घ्रियुगलं प्रक्षाल्य सप्रश्रयं क्षमां याचिष्ये। न खलु मे पातिव्रत्यं दूषितमिति वेत्ति परमात्मैव। करुणानिधेस्तस्य प्रसादादक्षता स्थितास्ति स्वविशुद्धिरिति पुनः पुनस्तुष्टाव सा परमेशम्।

अथ यावत्पत्युः प्रासादोपकण्ठमुपैति तावदद्राक्षीत्सा शून्यशून्यतां सर्वत्र मन्दिरं पिहितद्वारमासीत्। न कोऽपि जनो दृग्गोचरः क्रीडावनेऽभूत्। क्व गतः स्वामी किं सम्भूतं तस्येति न कोऽप्यासीत्सविधे तां विज्ञापयितुम्। एवं सा निजालयाद् बहिः स्थिता पूर्वं सुस्थितमप्यद्य निराश्रितम् आदौ सर्वैः सम्भावयितुमव्यधुना जनापवादकलङ्कितम् अनपराधमपि दूषितमद्य, पुरा प्रफुल्लवदनमप्यधुना शोकज्वालावलीढाननं सनाथमपि संप्रत्यनाथ मात्मानमपश्यत्। पर्यन्ते दीर्घाध्वश्रमेणावसन्नगात्री सदनाद्बहिरेकस्य तरोः प्रच्छायशीतले तले शोकपारावारनिमग्ना दुर्निवारनैराश्यझञ्झावातप्रहतेव समुपविश्य सोरस्ताडं व्यलपत्। तत्क्षणे च मन्दिरस्य पार्श्वप्राङ्गणात्कश्चित्तदपरि-चितो मनुष्यो रक्षापुरुषपदे नियोजितो गृहस्वामिना तां समुपेत्याप्रा-क्षीत्कोऽन्विष्यते भवत्येति। सपदि पटान्तेन विमृष्टनयनया तया नाथस्य प्रवृत्तिं पृष्टेन तेन प्रोक्तम् – 'मासो व्यतीतो गृहिण्या दुराचाराद्विरक्तचेतसः स्वामिनः सपरिवारस्येतो निर्गतस्य।' इत्याकर्ण्य शङ्कुनिषिताग्रविद्धहृदयेव क्षणं मूर्च्छितेव भूतले न्यपतत्। अविदिततदितिवृत्तेन रक्षकेण समाहूय स्वगेहिनीं निजकुटिरं सदनस्य पृष्ठभागवर्तिनमनाथेयमानाययाञ्चक्रे। क्रमेण लब्धसंज्ञा दम्पती सव्रीडमापृच्छ्य सत्वरं तौ व्यसृजत्। असहाया च शोकपारावारमपारमुत्त-रीतुमपारयन्ती कस्यचिच्चिनारतरुविशेषस्य शाखायामुत्तरीयार्धेन मृतिसाधनं बन्धनं विरचय्य मर्तुकामा सा प्रायततात्मानं व्यपादयितुम्। नचिरादात्मानम-न्तर्वर्त्नीमपश्यत्तदा सर्ववैकल्यमवगणय्य क्षणं क्षणहीनापि सा प्रामोदत। चिराद्विधृताभिलाषस्य सन्निहितपरिपूर्त्येकहृदया जन्मतः सुखोपभोगभाजी सेदानीं कृषीवलस्य कस्यचित्क्षेत्रे प्रायास्यद् यावत्तत्र प्रासूत सुतम्।''

इति कथयित्वा मत्सहचरो मुहूर्तं यावद् विरमति तावत्क्वापि मन्दिरेऽस्मिन्नार्तनादः श्रवणपथमावयोः समारुक्षत्। पर्यन्ते फलितोऽभून्मनोरथस्तस्या इत्युक्ते मया सहचरोऽब्रवीत्– 'सिद्धमनोरथया तया साध्व्या बालोऽयं जन्मतः पङ्गुर्भारभूतोऽप्यष्टनव वर्षाणि पोषितः परिषेवितश्च सप्रयत्नम्। तदधिष्ठितं हस्तशकटमाकर्षन्ती पर्यटन्तीदानीं

हतभागेयं प्रत्यक्षीकृता भवद्भिः। वरं यदि विकलाङ्गोऽयं नन्दनस्तन्नयनानन्दनोऽपि नाजीविष्यत्। अथ तस्याः पतिर्बहुतिथं कालमुषित्वा विदेशे, निवृत्तः स्वदेशं विरक्तो विस्मृतप्रायो जनेन, क्वापि विजने निलयेऽवशिष्टमायुर्यापयति। यदतिशोचनीयं तदद्यावधि स गेहिन्याः सतीत्वं न वेत्तीति। कदाचिद्दैववशाच्चेन्मिथोऽवलोकयेतां ततः परस्परं नाभिजानीयातामिति विशङ्के खलु।'

अत्र सहचरस्य स्वरो मन्दीभूतः प्रशान्तरजन्यां कर्णजल्पितस्य प्रतिध्वनिं विडम्बमान इवाश्रावि। तस्यावासस्थानमिति मया कुतूहलपरवशेनानुयुक्तः स प्रत्युवाच–'निवसत्येष नातिदूरमित' इति।

अथ कतिपयक्षणोत्तरमश्रावि कश्चिदस्फुटो नादः समीपवर्तिन्यां सोपानपङ्क्तौ। अधःस्थप्राङ्गणं सकृन्निरीक्ष्यावाभ्यामेका च्छायामय्याकृतिः प्रवेशद्वारं प्रति निभृतं त्वरया प्रचलन्ती व्यलोकयत। तत्त्वरितनिष्क्रमणोदर्कस्य चिन्तया संक्षुब्धो मत्सहाध्वगः प्राङ्गणे बद्धदृष्टिः क्षणं तूष्णीकः स्थितवान्। मन्दप्रकाशे दीपस्य मां प्रति साकूतं दृष्टिमक्षिपदिति विभावितं मया। क्षणेऽस्मिन्मज्जिह्वाग्रे प्रश्नजातमुत्तस्थौ, परमेकमपि समुदीरयितुं न प्राभवम् मदीयसहचरः सपदि सोपानमेवारुक्षत्। अहमपि कुतूहलाकुलस्तमन्वगच्छम्। प्रभञ्जनस्य तीव्रवेगः सतडित्कडकडशब्दो भीषणो नाद्यापि ह्रसितोऽभूत्। तमिस्रा सूचिभेद्यान्धतमसेव मसीपटलेनेव लिप्तासीत्। गृहाद्बहिः कस्यचिच्छायाचित्रं मन्ददीपहस्तस्य विजनेन मार्गेण गच्छदवलोकि। गुह्यनिष्क्रमणस्योद्देशं तपस्विन्यामीदृश्यामवगन्तुमक्षमः सहचरमपृच्छम्– 'अप्यस्ति मन्दिरेऽस्मिन् कोऽपि निद्राचारी रुग्ण इति'। स च विधूय शिरः प्रत्युवाच। 'नहि नहि'। महाभागोऽयमनामयः सर्वथा। बहुतिथं समयं मूर्च्छानिद्राभिभूतः प्रबोधमगमदिदानीम्'। इति तस्यास्फूटेन सगूढार्थेन च प्रत्युत्तरेणाधिकाधिकसञ्जातकुतूहले। यावत्तं प्रष्टुं प्रावर्ते तावन्नैपुण्येन प्रस्तुतविषयं परिहृत्य स व्याहरत्। सर्वमेव श्वो ज्ञास्यते भवद्भिः। आगम्यतामिदानीं भयावहा हि स्थितिरत्र। इत्युक्त्वा सदनान्तः पुनर्मामनैषीत्। निशीथप्राये समये तस्मिन् तन्निकेतनकृतवासानामन्येषां

निद्राभङ्गो मा भूदिति प्रस्तुतप्रसङ्गस्य विशदीकरणे न मयाऽकारि निर्बन्धः। तदनु च चिरादध्वश्रमखिन्नेन मया निरवेशि निद्रासुखम्। परेद्यवि प्रातस्तमुत्थाय प्रातस्तनविधिव्यापृतः पूर्वरात्रौ सहचरेण प्रोक्तस्य गूढार्थं प्रष्टुमवकाशं न प्राप्नुवम्। समाप्तप्रातरशनौ प्रतिष्ठासू यावदूर्ध्वककोष्ठादवरोहावस्तावन्मुख्यद्वारेण विशन्तं प्राङ्गणं परिव्राजिकायाः शोकानन्दमध्यवर्तिन्यां धृतवन्तं करं, मधुरमधुगिरा गाम्भीर्येण प्रेम्णा च मुहूर्मुहुः सान्त्वयन्तं च तां निरुद्धबाष्पां प्रहर्षनयनाम्बुस्विन्नकपोलां गृहस्वामिनं चावलोकयाव। तस्य विनताननस्य शोकहर्षरसवैशम्यान्नानाभाव भङ्गतुङ्गप्रवाहसंयमनपरस्य पृष्ठतः शिबिकाधारि पुरुषद्वयमन्वयात्। शिबिकामध्यास्त शायितोऽङ्गारीभूतोऽनभिज्ञेयपूर्वाकारो विगतासुः शिशुः। वाहकयोः पश्चात्प्राविशन्माणवकः कश्चिच्चालयन् हस्तशकटं रिक्तम्।

अथ श्रीनगरं प्रतिगामिना पोप्लराख्यद्रुमविशेषपङ्क्तिमण्डितेन सुदीर्घपथेन प्रयातयोरावयोर्मार्गदर्शकोऽब्रवीत्। किमित्यस्मद्गृहस्वामी विद्वेष्टि कषायाम्बरधारिणं परिव्राजकवर्गमिति न स्यादिदानीं विस्मयावहे भवताम्। दिवाकरः प्रत्यगुदियादम्बरतलमिन्दीवरमण्डितं स्यात् परं न भवेत्कदापि तस्य विश्वासो योगिम्मन्यमानेषु कषायाम्बरधारिषु।

किन्तु हतभागिन्या अनपराधायाश्चिरत्यक्तायास्तस्या उपच्चिकीर्षयैव मत्सहचरेण व्यतीतायां रात्रौ गृहस्वामिकर्णगोचरतया तदितिवृत्तमाख्यातं स्यादित्यसकृदात्मानं पृष्टवानहम्। हन्त! विरहिजनसंगमं निपुणं साधयितुं प्रयत्नस्तस्य चिरादपि सफलीभूत इति तं प्रशंसातततिभिर्दीर्घाध्व- प्रवाससमयमगमयम्।



# ४. मिथ्याग्रहणम्

चैत्रमासस्य सायंसमयः। मोहमय्या माझगावनामनि स्थाने कस्यचिच्छ्रीलस्य गेहे कन्याया विवाहस्य मण्डपमण्डनादिप्राथमिकसंभारोऽनुष्ठीयते स्म। क्वचिन्मङ्गलपाठकानां पुरोहितानां मधुरवचनैः कठिनमणिकुट्टिमस्य निखननरचनेन, क्वचित् कर्मकराणां कलकलेन संचरज्जनचरणविक्षेपणध्वनिना, क्षुभितमिव भवनमेतदभवत्। परेद्युर्हि केनचिद्धनाढ्येन सह वत्साया उद्वाहो निश्चित आसीत्। सेयं विंशतिवर्षीया कृशाङ्गी ह्रस्वाकृतिः परिमितवागपि मधुरस्वरा गौरवर्णापि नातिरूपवैशिष्ट्य-संपन्ना अमीनाभिधापि मीनाक्षी सह सख्या सरलाभिधया सरलस्वभावया गगनतलचरमार्धवर्तिनि भगवति दिवसाधिनायके रसालादिवृक्षभूषितायां वाटिकायां स्वपितुर्मन्दिरपक्षद्वारसमीपस्थायां विजनकोणे बकुलतरोरेकस्याधः संलापं कुर्वत्यासीत्। पतत्रिणां किलकिलरवोऽस्तं गतः। आलोलमालती पुष्पसमूहादुत्पत्यालिकदम्बकानि तूष्णीकां भेजिरे।

सरला –सखि, विवाहमङ्गलविधिस्ते कस्मिन्मुहूर्ते निश्चितोऽस्ति श्वः।

अमीना –अस्तङ्गमनसमये भगवतः सवितुः।

सरला –(सोपहासम्) अयि सखि, वरमदृष्ट्वा तत्पाणिग्रहणं कथं नाम प्रतिपद्यते त्वया?

अमीना –तद्दर्शनेन किम्? भारतवर्षे भूयिष्ठानां कन्यानां वरस्य दर्शनात्प्रागेव विवाहो भवति। अनतिक्रान्तशैशवापि मदीयाम्बा विवाहात्पूर्वं मे पितृपादानां दर्शनामन्दानन्दमलब्ध्वापि सह तैर्वस्तुमगमत्। अहं तु विंशतिवर्षीयास्मि। मातापितराववलम्बमाना तयोराज्ञां शिरसाङ्गीकृत्य निःशङ्कं निश्चितवरस्य पाणिग्रहणं मुदा करिष्ये।

सरला –परं यदि कुमारो विवाहात्प्राक् परिचितः स्यात्तदा निजभाविसुखप्राप्तौ प्रतीता भवेत्कुमारी।

इत्थमभिधाय सरला किंचिन्नत्वा भूतले विस्तारितबकुलपुष्पनिकरात्

कानिचिद्विचित्य तदामोदमास्वादयत्।

अमीना –हुम्। पाश्चात्यदेशीयानामेवानुकूला प्रीतिविवाहादिकल्पना। कृतप्रणयविवाहानामपि वधूवराणां व्यभिचारपरस्परस्वभावा सङ्गत्यादिकारणेभ्यः पाश्चात्यदेशेषु विवाहविश्लेषस्य वृत्तपरम्परा क्रियासमभिहारेण श्रूयते। परमस्मदीयदेशे विरलः खलु व्यतिकरस्तादृशः।

इत्यमीना स्वपितुरसकृदुक्तं वाक्यमुदीर्य कस्यचित्प्रफुल्लगुलमोहोराख्य–द्रुमविशेषस्याधो मरकतोपलकल्पितासन्दीं प्रति सखीमनयत्।

अमीना–सरले, जानासि त्वं यच्छकुन्तलादुष्यन्तयोरनुराग–बद्धयोर्गान्धर्वविधिना स्वैरं परिणीतयोरपि कतिपयकालोत्तरं विच्छिन्नप्रायोऽभू– द्विवाहः।

सरला –परं शापप्रभावात्कुपितस्य दुर्वासोमुनेस्तत्संवृत्तं न तु तयोर्दोषात्

कुमार्याविमे आशैशवात्प्रतिवेशिन्यावास्ताम्। यद्यपि भिन्नभिन्नरीत्या संवर्धिते अध्यापिते भिन्नभिन्नश्च तयोर्नैकविषयेषु गृहसंस्कारोऽभूद्, भिन्नभिन्ने च धर्ममते अभूतां तयोस्तदपीमे परस्परं प्रतिबद्धदृढसख्ये चिरं स्थितवत्यौ। अमीना हि कन्याशालायामध्यापितापि स्वातन्त्र्यसुखं नान्वभवत्। सेयं व्यक्तित्वविहीना भावनावर्जिता वैवाहिकविषये न कमपि पक्षमवालम्बत। तस्या विवाहवाङ्निश्चयो हमिदनाम्ना केनचिद्धनाढ्येन शिल्पयन्त्रस्वामिना सह पितृभ्यां व्यधायि। सोऽयं तरुणो मोहमय्यामेव कृतावासोऽभूत्। वस्तुतः पितुराज्ञया कस्यापि कुमारस्य पाणिग्रहणं मुग्धेयमङ्ग्यकरिष्यत्।

अथ परेद्युः समाहितनानाविधसंस्कारममीनायाः पितुर्मन्दिरं महोत्सवमयं सङ्गीतनृत्यादिध्वनिमयं दिव्यमन्दिरमिव व्यभासिष्ट। क्रमेण समुपतिष्ठद्भिः प्राघुणिकैः सदनमेतद्व्यराजत। आमध्यरात्रं च समुचितभोजनैः सत्कृतः प्राघुणिकसमूहो वाराङ्गनासङ्गीतादिभिः प्रापितविनोदः श्रीलस्यालये सुखं कालमयापयत्। निर्वर्तितविवाहा प्रातस्तरां च वधूर्मृगमदकर्पूरादिना सुरभिद्रव्येणानुलिप्तसर्वाङ्गी

धौतदुकूलवसना धवलपुष्पमण्डितशिरा रत्नखचितकण्ठाहारकुण्डल–कङ्कणाभरणभूषिता पत्युर्गेहमयात्। बालसखीं सरलां विस्रब्धुमसहमाना नवोढेयं पितुर्गेहान्निर्गमनात्प्राग् यथाप्रतिश्रुतं प्रतिदिनं वाहकेन सार्धं प्रेमोद्रेकसंभृतं पत्रं प्राहिणोत्। अवर्णयच्च लेखे समुद्रतटस्थं दीपमाला–विहितबहुलचाकचक्यं हृदयहारि सौधं पत्युः समुद्भासमानं संख्यातिगामिना चतुरविशिष्टवेषधारिणा परिच्छेदेन समन्वितं नानाविधपुष्पामोदसुरभितान्तःपुरं, निजामूल्यरत्नखचिताभरणजातं, पयोनिधेर्मधुरमर्मरोर्मिमाला यास्तस्या मार्तण्डतापक्लान्तिं मन्थरीकुर्वन्ति स्म दिवा, नक्तं च वीजयन्तो मन्दानीलं समचारयन्। यच्चासन् हमिदस्य भूयांसि यन्त्रवाहनानि, मन्दुरा चानेकवाजिभिः संभृता। इति सर्वमेव सविस्तरममीनया सगौरवं वर्णितं, परं स्वभर्तारमधिकृत्य लेशमात्रमपि न कदापि शंसितमिति सरलया लक्षितम्। न तु तयापि हमिदमुद्दिश्य किमप्यनुयुक्तम्। नवोढेयं पितुर्गेहं बालसखीं चानवरतं स्मारं स्मारं पत्युरदृष्टपूर्वेऽसमाने प्रासादे चलन्ती मातृविरहितां नष्टाध्वगां नवशुकीं महारण्ये द्रुमाद्द्रुममुड्डयमानमिवात्मानमकलयदमीना। निर्मितोऽभूद्धि प्रासादोऽयं नानामूल्यदुर्लभोपलजातेन। अंतराङ्गणे सुगहनगृहाभ्यन्तरमार्गपरम्परा मरकतस्तम्भावलम्बिता स्थिता। सुखोपभाजां मोगलधराधिपानां कालादवशिष्यश्चित्रिताः पटला विश्वकर्मसमशिल्पिकर्मकौशलभूषिता आसन्। अन्तःपुररस्य भूतलं चोत्कृष्टपारसीकदेशीयकौशेयास्तरणैराच्छादितमभूत्। भित्तयोऽपि कार्मिकक्षौमपट्टैरावृत्ताः। अन्तःपुरस्य विशालाङ्गणं परिलम्बमानरजतपञ्जरक्रोडाकुलं शुकसारिकाकुलं कलरवमनोहरम्। पार्श्ववर्तिन्येकस्मिन् काष्ठजालालयेऽन्ये पतत्रिणो मयूरादयः कूजनकलकलैः पक्षस्फुरणैः समञ्जीरशिञ्जननर्तनैश्चाक्रीडन्। विवाहात्पूर्वं मातृगृहे भाविविवाहविषयं व्यचिन्तयदमीना, ''अपि मद्विवाहः श्रीलेन सह हमिदेन सुखावहो भविता। कथं नामैकाकिनी विशालसौधेऽस्मिन् कालं यापयितुं प्रभवेयमिति।''

अमीना ह्यादौ व्यवसायभावाच्छून्यहृदयमात्मानमपश्यत्। तद्भर्ता हि प्रातस्तरां नगरात्सार्धयोजनदूरस्थं शिल्पयन्त्रकार्यालयं प्रति गृहान्निर्गत्य

सायं सूर्यास्तमनसमये न्यवर्तत। अथाविच्छिन्नविविक्ततायां सौधस्य तरुणीयं ताम्बूलं चर्वन्ती दासिभिः पादयोर्निपीड्यमाना विद्युद्व्यजनेन चक्राकारेण वीज्यमाना स्वभाग्योदयसोपानं मनसि प्रशंसन्ती, अज्ञभृत्येतरजनसम्पर्करहिता, चतुरसखीविरहिता, विविधभूषणविहितप्रबलचाकचक्या सुगन्धितैल प्रसाधितकेशकलापा, अञ्जनरञ्जितलोचनाञ्चला हिरण्यमयसूत्राङ्कित- पट्टाम्बरधरा, सागरोर्मिमालातुषारकणिकाहरणशीतस्य समीरस्य सुखस्पर्शमनु- भवन्ती शुकसारिकादिपक्षिणां कलकलं शृण्वन्ती अट्टालिकाया अट्टालिका- मङ्गणादङ्गणं पौनःपुन्येन पर्यटन्ती कालमयापयदमीना यावत् प्रसूत यमलौ सुतौ।

अथ कतिपयवर्षोत्तरं तस्या बालसख्या सरलायाः कश्चिद्विश्वसनीयऋजुस्वभावस्तरुणः पाणिमगृह्णात। तयोश्च विवाहो विनाडम्बरं निरवर्तत। व्यवसायप्रवासिनः सरलायाः पत्युर्नासीत् स्थिरो निवासः क्वापि। परं स्वकार्यार्थं मोहमयीं गतागतं कुर्वन्नेष नगरीमिमामधिवस्तुं मतिं कृत्वा सरलाया इच्छामनुसरन्नमीनायाः प्रासादस्याधस्तात् द्वित्रप्रकोष्ठात्मकं वसतिस्थानम-ल्पिष्ठमुपलब्धवान्। अतिविशालसौधेऽस्मिन्नैकभाटकभवनयुक्ते बहुतिथं कालमुषित्वापि तत्र निवासिनोऽन्योन्यदृष्टिपथमपि प्रायो नेयुः। अमीनाया अन्तःपुरवलभितुङ्गवातायनादधो भूतलस्थस्य सरलाया गृहस्य सूक्ष्मकार्पासवस्त्राच्छादितवातायनान्तःप्रकोष्ठं स्फुटं बहिस्थो दृक्पथमगमत्। यदा च सरलायाः पतिर्नगरान्निरयात्तदा तदा सा मनसो द्वितीयनिबन्धभूतायाः सदनेऽमीनाया भूयिष्ठमहोऽनयत्। इमे च सहचर्यौ पुनः सङ्गमेनामन्दानन्द- मन्वभूताम्।

अथामीना स्वधर्मनियममनुसृत्याऽवगुण्ठनपद्धतिं निभृतावास- विशेषावस्थितिमङ्गीकृत्य क्वचिदेव विहाराय गृहाद्बहिर्निरगात्। अतो नागरिकाणां प्रतिवेशिनां वा वृत्तानभिज्ञापि क्रमेण संजातबहुप्रजा परं संतुष्टाऽऽस्त। यदा यदा तु सरला निजसुखातिशयः स्वभर्तुः साहचर्यं तद्विप्रयोगोत्तरप्रत्यागमनोत्कण्ठा चोभयोरित्यादिविषयमधिकृत्य समलपत्,

तदा तदामीनां विदूरबद्धदृष्टिमलक्षयत् सा। अथ गच्छति काले दृष्ट्याममीनायाः कोऽपि खेदद्योतको विकारो व्यलोकि। तयोर्निवासयोः पुरःस्थस्य पयोनिधिस्तटे सप्रेम ग्रथितान्योन्यकरौ सरलां तत्पतिं च रजन्यां शतपदीं कुर्वाणा दर्शं दर्शममीनाया विषण्णता वृद्धिमगमत्। सा च दीर्घं निःश्वसती दुर्मनायमानेव क्वचिदात्मानं सरोषमप्राक्षीत्कुतो निःश्वस्यते मूढेन त्वयेत्थमिति तावन्निखिलेऽहनि भर्तुर्मुखदर्शनानन्दं क्षणिकमेवपलब्धवती सा। सहनिवासिनावपि तावदधिकाधिकमसंबद्धौ स्थितौ। सोऽयं हि हमिदो द्यूतप्रियो नैकक्रीडामण्डलेषु प्रत्यहं विनोदितात्मा गेहं निवर्तितुं दिने दिनेऽधिकाधिकं व्यलम्बत। सा चाधीरतया पतिं प्रतिरात्रं प्रतीक्षमाणास्त। परं क्रमेण यदा स्वपत्यागमसमय आप्रभातं विलम्बितः समभूत्तदा 'मा प्रतीक्षस्व मां, भोजनं समाप्य यथाकालं स्वपिहि। अहं हि सुहृद्भिः सग्धिं करिष्य' इति हमिदस्तामज्ञापयत्। सा च तस्य विलम्बस्य कारणं नितरां ज्ञातुकामापि कुतस्त्वयाऽद्य चिरायितमिति तं प्रष्टुमलं धैर्यं न वा दृढाग्रहं भेजे। एवं तयोर्वैवाहिकसंबन्धे कथाशेषमात्रे संजाते हन्त स्वपतिं सा निजसन्ततेर्जनक इत्येवालोकयामास। प्रायेण भूयसीनां धीमतीनां परिस्थित्येदृक्शोचनीयया भाव्यमिति मन्वाना पतिप्रेमानन्दरसे स्वप्नेऽप्यनास्वादितेऽपि निजावस्थां शोचनीयां नामन्यतामीना मनागपि।

अथैकदेयं पयोधिफेनपाण्डुरे शयनीये कृतपदा प्रस्वापसुखमनुबभूव। समयोऽयं किल ग्रीष्मर्तोः। अवसरेऽस्मिन् सर्वतो निशानाथस्य संपूर्णकलाप्रायस्य द्युतिदुग्धाधवलधारानिचयेन धवलितमासीद्धरातलम्। जलनिधेर्जलानि हीरकनिचय इव चाकचक्यं भेजिरे। पिहीतेषु भवनद्वारेषु स्वस्वप्रकोष्ठेषु परिजनाः प्रसुप्ता आसन्। अमीनापि प्रस्वपती कमप्यतिमात्रारम्यं स्वप्नमद्राक्षीत्। यत्तदीयबालसख्या सरलया तदीयसर्वस्वमपि विलुण्ठ्य सा हमिदस्य हर्म्यान्निष्कासितेति। चण्डवात्यया सहसा प्रहतेव सरुतं प्रबुध्य शयनात्समुत्थाय नयने परिमृजती संभ्रमेण रुद्धकण्ठा चकितचकितेव विशिथिलाङ्गयष्टिः स्खलत्पादाभ्यां समीपवर्तिनः सौधस्याधो भूतलस्थं सरलाया निलयमवलोकयन्ती वातायनसमीपं चिरमवतस्थे। नितान्तविविक्ततया विषण्णमना अमीना

जलाब्धेरूर्मिमालाया मन्दमन्दमर्मरं श्रावं श्रावं परिमृदितमृणालिनीव म्लानाङ्गी प्रियजनस्य कस्यापि मृदुलस्पर्शजुषः सान्त्वनस्याभिलाषुकाभूत्। तावत्सरलायाः शाय्यागारं विद्युद्दीपकद्योतितं व्यलोकि तया। वातायनस्य सूक्ष्मनेपथ्यस्य पृष्ठतः सरलाया सुकुमारशरीरयष्टिरितस्ततश्चलन्ती दृग्गोचरतामगादमीनायाः। भर्तरि निर्याते नगरान्निशीथिन्यां किन्नाम कर्तुं प्रवृत्ता स्यात्सरलेति व्यचिन्तयत्स-विस्मयममीना। अथ यावत्सखीं समाह्वयितुं प्रवर्तते सा तावत्तस्यैव सौधस्याधोगृहपृष्ठभागतो निर्गच्छन्तीं हमिदस्याकृतिमिव कस्यापि पुरुषस्याकृतिं व्यलोकयदमीना। तदनु च झटिति सरलायाः शय्यागृहस्य दीपिका निर्वापिताभूत्। नीरवं निभृतं प्रचलन् पुरुषोऽयं स्वपतिरिति क्षणं सा न व्यश्वसीत्परं यदा स्वहर्म्यस्य बहिर्द्वारमुद्घाट्यान्तः स प्राविशत्तदायं हमिदमन्तरा न कोऽप्यन्य इति प्रतीताऽभूत्। पाण्डुवदना वेपमानविग्रहा किंकर्तव्यप्रतिपत्तिमूढा स्थितवती च। प्रभातप्रायः समयो नचिराद्भविता। कुत एतावान्विलम्बः प्रत्यागमस्य भर्तुः कुतश्च सरलायाः शयनगृहं मध्यरात्रे प्रकाशितं स्यादित्यनेकवितर्कजालेनाक्रान्ता वातायनात्परावृत्योन्निद्रनेत्र्याभानूदयं सम्भ्रान्तान्तःपुरे गतागतमकरोदमीना। परेद्युर्निशीथे पुनगर्वाक्षसविधे सा चिरं स्थित्वापि सरलाया निलयमन्धतमसावृतमपश्यत्। बहिः सर्वत्र प्रशान्ततादेवी व्यराजत्। यामिनीकामिनीवदनतिलक-बिन्दुरिन्दुश्चान्द्रिकाव्याजेनाम्बरतलात् सुधाधाराभिरातलमधावत्। अन्तरान्तरा वारिधिवीचिमालानां मन्दमन्दरवोऽमीनायाः कर्णशष्कुलीमपूरयत्। अथ यावत्परावर्तते सा वातायनात्तावत्पादचारध्वनिमिव कस्याप्यश्रौषीत्। ध्वनिनानेनाकृष्टेव गवाक्षसविधं पुनः सा ययौ। न चिराच्च समीपवर्तिनः सौधस्याधस्तलमार्गान्निर्गच्छन्ती हमीदस्य शरीराकृतिः पुनस्तस्या दृक्पथे न्यपतत्। हिमधवलवसनोपरि श्यामक्षौमप्रावारो रक्ततुर्कोष्णीषश्च निशाकरकरनिचये वैलक्षण्यं भेजाते। ततश्च गवाक्षजालप्रसारितै रजतमार्जनीनिभैः कलानिधिकरनिकरैः संशोधितान्धकारे पयोधिफेनसंदोहेनेव निर्मिते शयनीय उपविश्य संदेहकोपोन्मथितहृदया

मुखमधःकृत्वा निःश्वस्योष्णं च सा तूष्णीं तस्थौ।

एवं चतसृषु निशासु नैशान्वेषणमुपाक्रमतामीना यावत्सा सरलायाः कपटस्य संजातप्रत्ययाभूत्। सरलाहमिदयोर्मध्ये निभृतासक्तिसंबन्धविषये न कोऽपि संदेहलेश इति निश्चितमतिः सा समभूत्। प्रतिनक्तं व्यतिकरमिमं प्रत्यक्षीकृत्य लोहितवदना कोपस्फुरदधरा जाज्वल्यमानलोचना शयने कृतपदा पार्श्वद्वये मुहुर्मुहुर्लुठन्ती नैराश्यादवातिष्ठत्। कुतर्कपरवशेयं क्रियासम- भिहारेणोद्गच्छद्रोषबाष्पा क्रोधाग्निना लुलितलुलिताङ्गकैस्ताम्यति स्म प्रतिदिनम्। 'अहो कथं नाद्यावधि सरलाया गूढकौटिल्यं न तर्कितं मन्दधिया मये'ति मुहुर्मुहर्विचिन्तयन्ती भृशमकुप्यदात्मने।

अथ पूर्ववद्यदा सह सख्या सूचिशिल्पं कर्तुं सरला तस्याः प्रासादं समायात्तदा मीनाऽत्यन्तनिरुत्साहा कोपेनान्तरेव तातप्यमाना हास्यविवर्जिता समतिष्ठत। कैश्चिदपि गृहकार्यव्यवस्थाक्लेशैरुद्वेजिता स्यात्सहचरीति सरला तामुल्लासयितुं सविनोदं प्रायतत। परमधिकाधिकमौदासीन्यमेवावलम्ब्य विमनायमाना स्थितवत्यमीना। उच्चैः पुस्तकपठनं चिकीर्षुं सरलां सपदि सपदि सहस्तविक्षेपं प्रत्याख्यात्सा। प्रतिवारं यदा सरला विश्रम्भालापं कर्तुं प्रावर्तत तदा तद्वचोभिर्भूयो भूयो वितुष्टहृदयमिवात्मानं सा प्रादर्शयत्। तदनु सरला स्मारं स्मारं कवेरुक्तिम् 'अतिपरिचयादवज्ञा संततगमनादनादरो भवतीति' व्यरमद् गमनात्सख्या हर्म्यम्। अमीनाया हृदि तावत्सहचरीं प्रति विद्वेषाग्निरधिकाधिकं समुदज्वलत्। अनवरतं च व्यचिन्तयत्सा यदाबाल्याद्यस्यां पूर्णशो व्यश्वसं सेयमद्य कथमीदृगधर्मकर्मणि प्रवृत्ताभूत्। तत्रापि निजसख्याः सह वल्लभेन। मधुरमधुरवचांसि मत्पुरः समुदीर्य परोक्षं मां कथं सा प्रतारितवती। अहह! कथं कमलामिव विमलां शारदामिव विशारदां सतीमिव सतीं स्वां प्रदर्शयन्ती मलिनहृदया स्थितवत्येतावत्कालम्। अहं च तां विश्वसनीयां प्राणप्रियां च भगिनीमिव समभावयम्। अपि हमिदस्य वैभवेन मोहिता स्यात्सा यत् स्वपतेः पत्नीवत्सलस्य परोक्ष व्यभिचारकर्मणि प्रावर्ततेयम्। कीदृशोऽयं विश्वासघातः। कीदृशीयं चञ्चलता चित्तस्य, यन्मत्सहचर्यैव विश्वेषां

नर्मपात्रं कृतास्मि। अहह! कथं नाम तस्या विषयासक्तिं वत्सरेष्वेतेषु नाविदम्। कुतश्चेयं मद्‌गेहसविधे कृतावासाभूत। अपि भर्तुः परोक्षे निभृतदुराचाराय व्यवसितमित्थं तया। बाह्यतो मुग्धाननाया विनयसम्पन्नायाश्च तस्या हृदि कौटिल्याहिः कथमाश्रितः स्यात्। सर्वा अपि सहचर्य आत्मानं निरागसं प्रदर्शयन्त्योऽविश्वसनीयाः स्युः। इत्थं तर्कवितर्ककण्टकनिकरव्यथिता सा सरलां प्रस्तुतविषयमुद्दिश्य विशकलय्य प्रष्टुकामापि स्वप्रतिष्ठाया अलीकदर्पाज्जोषं स्थितवती। सरलायाश्चिरसख्यं तदीयमधुरवचश्च स्वप्न इवेन्द्रजालमिव मायादर्शनमिवामीनायाः प्रत्यभाददानीम्। आधिं चात्मनो रहसि सहमानावातिष्ठत सा।

अथ गच्छत्सु वर्षेषु शिशुरेकोऽमीनायाः केनापि व्याधिना ग्रस्त इत्याकर्ण्य तस्य शुश्रूषायां सख्यै साहाय्यं प्रदित्सुः सरला सानुनयं पत्रद्वारा तस्यै न्यवेदयत्। परं लेखमिमं प्रावरणादपसार्यैव यथागतं वाहकायादापयदमीना। अनेन परमोद्विग्नापि सरला सख्यै नाद्रुह्यन् मनागपि। रुग्णार्भकस्यामीनायाश्च वृत्तं स्वसेवकमुखादुपलभ्य जोषं स्थिता। अथैकवत्सरोत्तरं हमिदोऽकस्मात्केनापि निरुपायरोगेणाक्रान्तो मरणोन्मुखः स्थितः। क्रमेण च स नष्टोल्लाघताशो नचिराद्विनष्टवागासन्नप्रायोन्तकाल इति ज्ञात्वा सरलाया गृहस्य दिशमङ्गुल्या निर्दिश्य मुहुर्मुहुः कापि समाहूतयामितीङ्गितेनैवासूचयज्जोषम्। भर्तुराशयमवगत्यापि तस्य परयोषितासक्तिमनभिनन्दमाना तत्सूचनमवा –मंस्तामीना। सरलाया आकृतिर्हि हृदि तस्याः श्यामश्यामा मृत्युछायेव सन्ततमवस्थितासीत्। अथ पञ्चषदिनोत्तरं भगवतो भास्करस्यास्तमनसमये हमिदः प्रति परलोकं प्रस्थितः। तस्य निधनवृत्तं प्रतिवेशिनां सपदि श्रुतिपथे न्यपतदचिराच्च सर्वतोपरि नगरे प्रासरत्। भर्तुमृत्युना शोकाकुलाभूदमीनेति न, परं तस्याकस्मिकान्तेन स्तम्भिता निजशयनागारे निश्चलातिष्ठत्। परिचराणां गमनागमनिनादेन वृद्धसेवकानामाक्रोशकल्लोलेन च जागरिता। तस्या बालकाः संभ्रान्ताः संत्रस्ताश्चाभ्यधावन्मातुः शय्यालयम्। सा च बालवत्सला गाढं तान् परिष्वज्य मृदुलवचोभिश्च समाश्वास्य निजपर्यङ्के

शायितवती। सुप्तेषु तेषु हमिदस्य सेवको निःशब्दं तामुपेत्य न्यवेदयद्यथा– स्नापितो धूपितो गन्धादिरुषितो विग्रहः स्वामिनः। न चिरादायास्यन्ति नागरिका अनुकम्पिन इतो नेष्यन्त्यधः स्वामिनः पूतदेहमुत्तरविधेरनुष्ठानार्थम्। पुरोहिता हि समायाताः। इत्युक्तया शीघ्रमायामि तावदिति प्रत्युक्तस्तया परिचारिकोऽपासरत्। पत्युरन्तिमदर्शनेच्छ–याऽमीनान्तःपुरान्निर्गत्य दीर्घदीर्घगृहाभ्यन्तरमार्गान् दीपमालाभिरुद्भासितान् समुलङ्घ्य प्रासादस्य विशालसोपानसमीपस्थस्य हमिदस्य शय्यागृहस्य संनिधिं कथं कथमपि प्राप। अथ यावत्प्रकोष्ठस्य द्वारमुद्घाटयितुं सा प्रावर्तते तावत्पश्यति सोपानपङ्क्तिमारोहन्तीं शनैः शनैः सरलाम्। निशाम्यैनां शीतशीतसमीरेण कम्पमानाङ्गयष्टिरिव तस्थौ विधवा। अवनतमुखी सरला च यावत् सहानुभूतिं प्रदर्शयितुमिच्छन्तीं सखीं सप्रेम समालिङ्गितुं करपल्लवौ विस्तारयति तावदमीना तां सहस्तक्षेपं निवार्य ब्रवीति कटुस्वरेण समायातासि निःसंशयं वल्लभस्यान्तिमदर्शनायेति। नैवं नैवम्। आयातास्मि खलु त्वत्कृत इति पश्चात्प्रचलिता विकम्पितशिराः प्रत्युवाच सरला। अप्रदत्तप्रत्युत्तरा घनसंशयमसावृतहृदया यावदमीना भर्तुरावासद्वारं समुद्घाटयति तावदन्तः काञ्चन काञ्चनाङ्गीमङ्गनां दृष्ट्वा साक्रोशं पृष्टतः प्रचलिताऽमीना।' किमिदम्? केयम्? कुत इयम्। अहह! इत्युदीरयन्ती स्खलितस्वरेण चकिता विस्फारितलोचना स्तम्भितेव सा स्थिता। पुष्पमाच्छादितस्य हमिदस्य हि शयनस्य सविधं विन्यस्तजानुः श्यामसूक्ष्मदुकूलाम्बरवेष्टिताङ्गयष्टिश्चारुवदना गौरवर्णा। शिरीषसुकुमारतनुर्मृतस्य पादयोर्निहितशिराः शोकज्वालावलीढेव हरिद्राक्षालितवदनेव निःशब्दं विलपन्ती मुक्तकण्ठं काचित्तरुणी व्यलोकि। अमीनया सानुयोगं निर्दिष्टामेनामालोक्य सरला कर्णेऽजपत्।'सखि सहज एवास्याः शोकोद्वेगजनितो विलापो विगतासोः प्राणेश्वरस्य कृते। तयोर्दीर्घानुरागाभिज्ञया त्वया भाव्यम्। विदितवृत्ताः सर्वेऽपि प्रतिवेशिनोऽत्रे'ति। कथम्? कदा? त्वमेवास्य प्राणेश्वरीति मयाकलितमिति प्रालपदमीनाऽस्फुटम्। विस्मिता स्तम्भितेव वचनममीनाया नावगच्छन्तीव क्षणं विस्फारितनयनावातिष्ठत् सरला। ततश्च विवर्णवदनममीनाया विलोक्य

सा सवेगमभाणीत्। 'अयि मूढमते! यथैहिकसम्पत्तिवैभवैश्वर्यादिभिः सनाथीकृतासि त्वं विधिना, तथैव तेन पत्युः प्रेमोद्रेकसम्पत्त्यैकसुखभाक् कृतोऽस्ति जनोऽयम्। प्राणेश्वरान्तरेणेतरपुरुषा मे भ्रातृसमना एव इति समुदीर्य विरतवचनाऽऽस्ते सरला तावदमीना लज्जया नतमुखी निःशब्दा स्थितवती। मुहूर्तोत्तरं लब्धप्रकृतिरुवाच सरला पुनः। 'अवगतमिदानीं मया तव मां प्रति दुराग्रहहलाहलविकारस्य कारणम्। बालसख्यामनिन्द्यायां कुतर्कजनितदुष्टसंशयपिशाचभारमारोप्य पञ्चसु वर्षेष्वेतेषु तां हन्त दृक्पथादकारणं निष्कास्य दुर्मनायमानात्मानं पर्यतापयस्त्वं वृथा। वाक्प्रतिष्ठानि देहिनां व्यवहारतन्त्राणि। वाचि खलु सत्यासत्यहेतवो व्यवस्थिताः यदि सरलवचनेन मामप्रक्ष्यस्त्वं तर्हि याथार्थ्यमवेदिष्यः। परं हृदि निभृतं वैमनस्यमाश्रित्य वृथा संशयजनिताभिद्रोहाग्निसन्तप्ता मृगीव घोरसंदेहजनित- कोपव्याघ्राऽऽघ्राता निभृतमश्रुप्रवाहैर्वृथा स्नाता क्रियासमभिहारेण मां हृदि शपन्ती च दीर्घकालं स्थितासि कामं तव भर्तृश्चेष्टितं नोचितमासीत्खलु। परं यवनधर्मेण स्वदारेतरायाः परकीयाया अङ्गीकारो यथान्यायमिति प्रतिपद्यत इत्यपि विदितमासीत्ते।'

आकर्ण्यैतन्निपत्यामीना सरलायाः पादयोर्विशिथिलवचन-विन्यासाऽति-मन्दस्वरा लज्जयाऽनन आविर्भूतविविधभावभङ्गा बद्धाञ्जलिरब्रवीत्। सखि! क्षम्यतां क्षम्यतां जनोऽयम्। सनाथाप्यहं चिरात्पराङ्मुखीभूते नाथेऽनाथीभूतेव कथं कथमपि कालमयापयम्। नाथस्य निधनेनाद्य यथापूर्वं निर्विशेष-मवस्थितास्मि खलु। परं चिरादात्मनैव निःसारितबालसखी दैवयोगात् पुनर्मयोपलब्धेति मद्भाग्यभास्करोऽयमिति प्रमुदितान्तरङ्गास्मीति वचः पुनरुक्तिरेव स्यात्। हन्त! इतःपरमाजीवभावामुभे दृढबद्धसख्ये स्थास्याव इत्युदीर्य सरलां गाढमाश्लिष्य निजशयनागारमेनामनयदमीना।



# ५. वृत्तशंसिच्छत्रम्

राजदुर्गान्नातिदूरं कस्याश्चिद् ग्रामटिकायां रथ्याख्यामेकदा कस्यचित् पुरोहितस्यात्मजा रूपयौवनसम्पन्ना नवयौवने प्राप्तवैधव्या सह जामात्रात्मनोऽष्टाविंशतिवर्षीयेण चतुरङ्गं क्रीडन्त्यास्त। पित्तलदीपिकाया मन्दमन्ददीप्त्या मुखशाला सामिप्रकाशितासीत्।

''हंहो! अनुपम! पुनरपि जितोऽसि मया तृतीयवारमद्य'। इतीन्दिराब्रवीज्जामातरं शारिनृपस्तम्भनं सम्पाद्य। समाश्रितौदासीन्येन पराजयः प्रत्यपद्यत जोषमनुपमेन। नानाविधजटिलचिन्ताशतैराकुलितमासीत् खलु तदीयहृदयम्। किञ्चिदज्ञाततीरं समापन्नस्येव नाविकस्य तदानने काचित्सन्दिग्धतोपालक्ष्यत। ''किं संवृत्तं भवतोऽद्य? कैर्विचारतरङ्गैराकृष्टं चतुरङ्गपटोर्भवतश्चेतः'' इतीन्दिरा तमपृच्छत्।

**अनुपमः** – आवयोरितः प्रस्थानस्य चिन्तयाऽऽकुलीभूतोऽस्मि।

**इन्दिरा** – पितृचरणैः पञ्चाङ्गावलोकनं कृतं न वेति ज्ञातुमिच्छामि खलु।

**अनुपमः** – कुतः?

**इन्दिरा** – युवयोः प्रयाणानुकूलशुभमुहूर्तोपलब्धये।

अनुपमस्याधरोऽस्फुरत्। विनतमुखः क्षणं स तूष्णीं तस्थौ, तत इन्दिरायां बद्धदृष्टिः किञ्चिद्रहस्यं तस्यै निवेदयितुमिच्छन्निव सम्भ्रान्तचेता बभौ।

**इन्दिरा** – भवत्प्रस्थानमाशु मा भूत्।

**अनुपमः** – अप्येवं भवत्याभिलष्यते?

**इन्दिरा** – (सगद्गदम्) अनतिक्रान्तशैशवास्ति मदीयवत्सा मीरा। प्रथमत एव भविताऽऽवयोर्वियोगः।

प्रकोष्ठस्य तमोमयकोणे श्रुतिपठनं कुर्वन्निन्दिराया जनको जराक्रान्तो जगाद ''नास्त्येतावदल्पवयस्का मीरा। द्वादशाब्ददेशीया हि सा संप्रति।

त्वमेकादशवर्षीयासीरुद्वाहसमये। चतुर्दशवर्षीयायां च त्वयि समुपजाता तवात्मजा'' इति। अत्र सहसा चकितेवेन्दिरा जिह्वां दष्ट्वा पितरमपृच्छत्। ''तात! अपि पञ्चाङ्गमवलोकितं भवता'' इति। ''आगामी भानुवासरोऽनुकूलः प्रयाणे'' इति प्रवया राजदुर्गवर्तिनो देवालयस्य पुरोधा अभ्यधात्। ततश्च विशीर्णहस्तलेखान् सञ्चित्य जीर्णवस्त्रेण परिवेष्ट्य च तान् स समुत्थाय मुखशालातो मन्थरमपासृपत्। अथेन्दिरा सायतोच्छ्वासं दीपिकायां तैलमधिकमुत्सृज्य मृदुस्वरेणाब्रवीज्जामातरम्। सप्ताहमात्रमवशिष्यते प्रयाणस्य युवयोरिति।

**अनुपमः** – सहावाभ्यां देशान्तरमायास्यति भवतीत्याशास्यते बलवन्मया।

**इन्दिरा** – पितृपादानत्रैकाकिनो विसृज्य कथं नाम निर्गच्छेयमितः। परिवेषितुं तानवश्यं कोऽप्यपेक्ष्यते।

**अनुपमः** – अमंसि सर्वथा मया यदस्मत्सदन एव भवती नित्यं कृतावासा भवितेति।

**इन्दिरा** – आदौ प्रायो लज्जाशीलेव वत्सा मे प्रतिभायात्परं क्रमेणातिक्रान्तभीरुताऽऽचरिष्यति पत्युः परिचरणं विना निर्बन्धम्। अतिसौम्या सुशीला दक्षा च कन्यका मे।

इति सबाष्पं नयनयुगलं मार्जयन्तीन्दिरा व्याहरत्।

**अनुपमः** – देवालयं यातेषु भवदीयपितृपादेषु कथं भवत्यैकाकिन्या स्थास्यते विजने स्थले?

**इन्दिरा** – किं वा करणीयम्? वार्धके गुरुजनस्य योगक्षेमं वोढुमर्हन्त्यात्मजाः नोचेन्निन्दास्पदं खलु ता भवेयुः।

इति निगद्येन्दिरा स्वकेशकलापं विमुच्य करपल्लवाभ्यां वेणीं विरचयितुमारेभे।

**अनुपमः** – अहो कामनीयकं भवत्याः कुन्तलानाम्।

**इन्दिरा** – मीरायाः रुचितरो भ्रमरसदृशमसृणकुटिलालककलापः

कौषेयस्य मादर्वं भजते।

**अनुपम**: – न मयाद्यापि लक्षितोऽसौ।

तदौसिन्यात्किञ्चिद् विषण्णाभूदिन्दिरा।

**इन्दिरा** – आरूढनवयौवना वर्षद्वयोत्तरं वत्सा मे भवत्सहचारी भविता।

**अनुपमः** – अस्त्येकैवावनितले–

**इन्दिरा** – (सकुतूहलम्) का नाम सा?

**अनुपमः** – भवतीमन्तरा न भवेत्काप्यन्या मत्सहचरी।

इति किंवक्तव्यतामूढस्य जामातुर्मुखादकाण्डे निःसृतं वचः। वचनस्य याथार्थ्यं जिज्ञासुरिवेन्दिरा शून्यदृष्ट्या तं व्यलोकयत्। निद्रालोरर्भ-कस्यास्फुटजल्पनमिव प्रत्यभासत वचनं तस्य यत् स पुनरभ्यधात्।

**अनुपमः** – अपि जानाति भवति यद् भवत्या वियुक्तस्य मे शून्यशून्यं भविता जीवनमिति?इन्दिराया मुखाब्जस्य मृदुलत्वं सपदि विलीनं तत्र च कापि रुक्षता दृष्टिगोचरतामापतत्। विस्मितविस्मितेव सा स्थिता क्षणं तूष्णीम्, परस्तात्तद्वचः श्रावं श्रावं नितरां सम्भ्रान्ता समभूत।

**अनुपमः** – मासषट्कात्प्राक् भवल्लावण्याम्बुनिधौ निपातितो मनसिजेन ततश्च सन्तापवह्निकुण्डे निक्षिप्तः सन् कियतीं वेदनामन्वभवमिति न कोऽपि पृथिव्यामाकलयितुं प्रभवेत्।

इति कथं कथमप्यगदत्तरुणः। रोषाग्निनेन्दिराया नेत्रद्वन्द्वं नितरां प्राज्वलत्। 'अलमलमीदृग्वचसे'ति परुषतरं सा निजगाद। अनुपमस्याननं नैराश्येन विवर्णतां भेजे।

**इन्दिरा** – (सविषादम्) ''अहो नैतदनुरूपं चेष्टितं भवतः। किमिति प्राकृतेनेवाचयते भवता। कुतोऽयमुपप्लवो येन भवदिन्द्रियसंयमो विनाशितो वशित्वं चेतसश्च विलुप्तम्। क्व तच्छ्रुतिविज्ञानं यद्भवता सर्वतो विश्रावितम्। क्व हस्तलिखितानां गाथानां विशुद्धिकार्यं यस्मिन् सुदीर्घं व्यापृताः स्थ। किमिति रागाभिषङ्गेण कलुषीकृतं विद्वत्त्वं भवतः। नवोढैव

मदीयवत्सा भवतो हृदि विराजमानाऽग्रिमपदमलङ्कुर्यात्। अहं तदीयप्रसूर्मातृभावेनैव सम्भावनीया भवतेति। किं भविष्यति बालिकाया ममाद्य। मुग्धेयं न चिरान्नवयौवन-पदमारोक्ष्यति। पराङ्मुखस्य पत्युर्गेहे कीदृशी तज्जीवनयात्रा भवेत्?''

इति चिन्तयन्ती जामातरि बद्धदृष्टिरस्थादिन्दिरा। स च वज्राहत इव निष्पन्दः स्थितवान् क्षणमात्रम्। तदनु क्षिप्रमुत्थाय स्वार्थं कल्पितं शयनागारं प्रति स्खलद्गतिश्चचालानुपमः। अपूर्वप्रशान्ततया गृहमेतदावृतं स्थितम्। निशीथसमयमाख्यातुं ग्रामस्य प्रचण्डकांस्यमुच्चैरस्वनत्। सञ्जातलज्जा-श्चिन्तासङ्घातप्रहतश्च निजतमोमयप्रकोष्ठे दीर्घमितस्ततः समचलदनुपमः। पूर्वमसाध्यत्वादुद्वाहस्य सह गतभर्तुकयेन्दिरया नैकमासान् परममाधि-वैक्लैव्यमसहतैषः। पर्यन्ते भग्नाशयस्तदीयबालिकामुपायंस्त येन विवाहोत्तरमिन्दिरापि तयोर्गृहे निवसेदिति। इदानीं तु त्रपाभिभूतः स्वान्तराशयं समूलमुत्पाट्य कस्मिन्नपि गिरिशिखराग्रे विजने भित्तिभिः परिवृतेनात्मनावस्थेयमाजीवम्। विषयोपभोगाभिलाषकलुषतां नयता मनसिजेनोपहासास्पदतां नीतोऽस्मि। अपूर्वेयं विडम्बना। इति मनसि कृत्वावर्णनीयक्लेशार्तो गुरुचिन्तनभारमसहमानो मुखशालां प्रत्युन्नतप्रपदमचलत्। तस्यां तमसावृतकक्षायां क्षणं यावत्तिष्ठति तावत्कस्या अपि योषितो रुदितनादं स्फुटं श्रुणोति। इन्दिराया परितापकारणीभूतमात्मानं विजानन् वज्राघातेनेव प्रभिन्नान्तःकरणोऽभूत्। शनैःशनैरग्रद्वारं प्रति गत्वा निःशब्दं सपदि तमिस्रायां न्यमज्जत्। सूचिभेद्यतिमिरे दुःस्वप्नग्रस्त इव निभृतमास्त मुहूर्तम्। दूराद् ग्रामरक्षकस्य स्वरप्रतिध्वनिरनिलसूत्कारमिश्रितो वैरस्यमपूर्वं परितः प्रासारयत्। विरक्तात्माऽनुपमो राजदुर्गगामिन-मध्वानमाश्रितवान्। अचिराद्रजनीनाथवियुक्ता रजनी विप्रलम्भदुःखमसहमानेव प्रभातं प्रत्यैक्षत।

अथेन्दिरा प्रकोष्ठान्तरं प्रविश्य वत्सायाः पार्श्वे शयने शयितवती जामातुः पापसङ्कल्पं ध्यायं ध्यायमुन्निद्रनयना पापबुद्ध्याः जामातुस्तस्यां जुगुप्सां महतीमजीजनत्। अब्रवीच्चात्मानं ''हा किं भविष्यति बालिकाया

मे। विधवाजीवनापेक्षयापि तिरस्कृतपत्न्या जीवितं ननु दुःखतरम्। महानर्थोपनिपातेऽस्मिन् प्राणत्यागेनापि रक्षणीया वत्सा।'' इति मुहुर्मुहुश्च परिस्फुर्जतो वात्सल्याद् विषादपरिवाहिना नयनयुगलेन चिरं बालिकामवेक्षमाणा मातृप्रेमनिर्झरप्लाविता नवनीतमृदुलं तस्याः कपोलं पर्यचुम्बयत्। व्यचिन्तयच्च ''सुज्ञस्तरुणोऽयं कथं नामाज्ञां बालिकामुद्वोढुं प्रवृत्त'' इति यदादितो विलक्षणं प्रत्यभान्मे तदिदानीं सर्वमेव स्फुटमस्ति'' इति। ततश्चानुपमस्यापूर्वसौमनस्यं येनाकृष्यमाणासीत्पुरा स्वयं तदद्य रोषमेव हृदि तस्या अजीजनत्। बीभत्सिता चात्मानमेव सा भूयो भूय उपालब्ध पर्यष्वजत च गाढं दारिकां पुनः पुनः।

अथ परेद्यवि जामातुः शयनागारं रिक्तमपश्यत। कृत्स्नं दिनं न न्यवर्तत स मन्दिरं न वान्येद्युर्न परश्वो वा। सर्वत्र रथ्याग्रामे समीपवर्तिग्रामान्तरे च सप्रयासं तं गवेषयामास जनः। परं न क्वापि प्रत्यक्षीचकारानुपमं कोऽपि। ततःपरमपि चिराय ग्रामीणैर्मार्गितोऽसौ। नासीत्तु विना नैराश्यं किमपि फलम्। मासार्धोत्तरं जातुचित्तन्नामाक्षराङ्कितं छत्रं शिरस्त्राणद्वितीयं राजदुर्गोपकण्ठवर्तिनो लालपुरीनाम्नस्तडागस्य तटे गुल्मान्तरितमुपालभ्यत केनचित्। परितप्तमानसेन तपस्विना प्रायः कासारस्य नीलमणिसवर्णजलेषु परमानन्द उपलब्ध इति तर्कितं जनैः। पर्यन्ते च नामशेषमेवामन्यत जामातरमिन्दिरा। एवं व्यतीत–मब्दानामष्टादशकम्। क्रमेण मीरापि बालविधवेत्त्यात्मानमाकलयामास। इन्दिरा च गुरुतरया चिन्तया कवलीक्रियमाणेवावतस्थे।



वर्षाकालः। अमवास्या तिथिः। अपराह्णसमयः। पुण्यपुरोपकण्ठे खड्कीनामोद्देशे समीपवर्तिन्या नद्यास्तटं बभूवैकदा संकीर्णं जनौघेन। अश्रावि नैराश्यशंसि क्रन्दनं सहसा कस्याश्चिद्दुःखार्ताया अङ्गनायाः। मध्यमवयस्कस्तापसः कश्चिदस्य प्रदेशस्यान्तिकं निवसन्निशम्य रुतन्नदीतटं प्रति तत्वरे। निर्घृणजलकल्लोलैः सहसाऽऽकृष्यमाणायाः कस्याश्चित्किंकर्तव्यमूढाया युवत्याः सान्निध्यं क्षणात्प्राप्तवान्। अथ निमज्जनोन्मुख्यास्तस्या वसनाञ्चलाग्रं पाणिना धृत्वा तटमुपेत्य

तदीयशिरीषपुष्पपेशलं वपुस्तटस्थशाद्वलोपरि न्यधात्। उन्मीलितनयनयुगलं तरुण्या वीक्ष्य तापसो विस्मयस्तिमित इवाभवत्। कोऽप्यवर्णनीयभावविकारो हृदि तस्य प्रादुरभूत्। युवत्याः कान्तिविशेषशालिनमाननेन्दुं निरीक्षमाणस्यारूढानेकतर्कस्य चिराद्विस्मृतं पूर्ववृत्तं सहसा स्मरणसरणिमारुक्षदगमच्च व्याकुलतां हृदयं तापसस्य।

''प्रतीक्ष्यतां तावत्। मदीयकुटीरतः प्रावरणमानेष्यामि शीघ्रम्।'' इत्युक्त्वा युवत्याः सखीगणं विसृज्य क्षणात् कश्मीरदेशविनिर्मितप्रावरणं कश्मीरजसवर्णं गृहीत्वा न्यवर्तत तापसः। तेन च कुमार्याः स्कन्धयुग्मं कमनीयं समाच्छादयामासुः सहचर्यः। ततश्चावलम्बमाना द्वयोरंसयुगले नगरोपकण्ठवर्तिनं विधवाश्रमं प्रति मन्थरगतिः सहचरिभिः सार्धं ययौ युवतिः। तापसश्च कृष्णवर्णकूर्चमात्मीयं परामृशन् पाणिना निजजीर्णकुटीरं शैवालाच्छादितभित्तिं ययौ। एष त्यागराजाभिधो निखिलमप्यहः प्राक्तनहस्तलिखिततालपत्रपठने व्यापृतः स्थितवान्। न कस्याप्यासीद्विदितोऽसौ।

निशायां तस्यां मुहुर्मुहरापराह्णिकवृत्तं तत्स्मृतिसरणीमारुक्षत्। संलग्नक्लिन्नाम्बरतनोः श्लथकुन्तलाया युवत्याः प्रतिमा तच्चेतस्यनवरतमाविरभूत्। साऽपि येन महाभागेन परित्रातासीत्सङ्कटात्तस्मै धन्यवादान् वितरन्ती चिराय जागरितावस्थे रजन्याम्। तदनु प्रस्वपती चाद्राक्षीत्स्वप्ने स्पृहयालुमुखं सौजन्यसंप्लुताक्षियुगलं तापसमेव।

अथ द्वित्रदिवसोत्तरं तापसप्रावरणहस्ता तत्कुटीरमभ्युपाययौ युवतिः। उटजाद्बहिरलिन्दभूमौ तालपत्राणि पठन्तं संस्तरमध्यासीनमद्राक्षीत्सा तापसम्। अथ मिथोऽभिनन्दने जाते युवती रामीति सुगृहीतनामधेया धरातलमागता राधेव नयनाभिराममुखराजीवान्वयुङ्क्त त्यागराजं सविस्मयम्, ''अपि भवद्भिरवगम्यते शास्त्रीयविज्ञानमिदमि''ति। तथैवेत्युक्त्वा तालपत्रेणैकेन पाणिं तस्याः सनाथीकृतवांस्त्यागराजः। ''अहो कियदद्भुतं नाम पुरातनकविरत्नैः स्वहस्तलिखितानां प्रबन्धानामध्ययने वैदग्ध्यं भवताम्!'' इत्यस्फुटमवदद्रामी साश्चर्यम्। ''पाठयिष्यामि यदि कदाचिदत्रागच्छेद् भवतीती'' प्रत्यश्रावि त्यागराजेन।

तदीयनिमन्त्रणमुररीकृत्य समाययौ रामी पुनर्नदीतटं कियद्वासरोत्तरम्। तदारभ्य तयोर्मिथः साक्षात्कारोऽभूद्भूयो भूयः। व्यतीताः मासाः केचन। जीवितमुभयोर्यन्नचिरात्प्राग् विरसमासीत्तदिदानीं प्रमोदज्योतिषा समुद्भासितमिवाभवत्। स्वस्वपूर्वकथामुनुक्तवतोरनयोर्न विदितमासीद्य–दष्टादशाब्दितः पूर्वमुभौ यथाविधि परिणितावास्तामिति। अत्रान्तरे प्रत्यहं च गाढाद् गाढतरो बभूव तयोः प्रेमबन्धः।

अथैकदा प्रदोषे जम्बीरपादपस्येकस्य मूले कस्यचिन्महात्मनः समाधिसमीपवर्तिनि परिचितपूर्वां मीरां परमद्य रामीति विश्रुतां प्रतीक्षमाणो विजनमार्गे बद्धदृष्टिर्दूवर्तिनि क्षेत्रे एकैकाध्वगं निरीक्षमाणो विस्फारितलोचनश्चिरमास्त त्यागराजः परिचितपूर्वोऽनुपमः। पर्यन्ते विदूरमालोक्य तन्वीमाकृतिं काञ्चिद्रोमाञ्चितकलेवरो बभूव सः। नचिरात्समुपेतां प्रेयसीं किञ्चिद्विवर्णवदनां वीक्ष्य हृदयं त्यागराजस्य निशितशल्यविद्धमिवाभूत्। अप्राक्षीच्च तां विषादस्य कारणम्। साऽब्रवीदितः ''परं मम निभृतमागमनमत्रासाध्यं किल। विधवाश्रमे तस्मिन् परतन्त्रास्मि खलु। तथाप्यद्यावधि तत्र कस्यचिदधिकारिणोऽनुमत्या भवद्दर्शनसुखं कथमपि मया लब्धमासीत्। दीपावलीमहोत्सवकारणाद् विश्रान्तकालो न चिराद्भविष्यति तदाध्यापका विद्यार्थिन्यश्च भूयिष्ठाः स्वस्वगेहं यास्यन्ति।'' इत्युक्तस्तया त्यागराजः प्रत्यवादीत्, 'प्रियतमे कृतं चिन्तयाद्यैव हि निर्णेष्यावहे विवाहस्य मङ्गलतिथिमि'ति।

''ननु गन्तव्यं मया श्वः स्वग्रामे बान्धवानामनुमतिप्राप्त्यै।'' इति तस्या वचनमाकर्ण्य तापसस्य बाहुयुगलमवसन्नं पार्श्वयोश्चावलम्बितं निःसत्त्वमिव। नाद्यावधि पृष्टमासीत्तेन ग्रामस्य नाम प्रेयस्या न वा तस्यै निवेदितं तेन पूर्ववृत्तमात्मीयम्। अथ असाध्वसमनुयुक्तं तेन अपि ते बान्धवा अस्मदुद्वाहं निषेत्स्यन्तीति।

**रामी** – वल्लभ गतभर्तृकास्मीति विदितमेव ते। अस्मद्ग्रामे विधवानां पुनर्विवाहो न सम्भवनीयः। अतो व्यतिकरेऽस्मिन् बान्धवानामनुमतिमवश्यमेव ग्राह्या मया।

**त्यागराजः** – कियान् कालोऽपेक्ष्यते भवत्या गतागतयोः।

**रामी** – मासार्धेनात्र भवन्तमुपैष्यामि।

इति प्रतिश्रुतवत्यां तस्यां मुहूर्तं तूष्णीमपातिष्ठेतामुभौ। वासरोऽप्य-वतिसप्रायोऽभूत। प्रदोषस्य निष्प्रभत्वं गाढतरं समजनि।

रात्रौ तस्यां तटिन्यां घर्घरशब्दं श्रावं श्रावं चिराय न निद्रासुखमवाप्नोत्तापसः। भाव्यनिष्टसूचकविचारसङ्कुलमभूत्तच्चेतः। मरुतो मर्मरध्वनिः कुटिरस्य स्वद्वारकपाटाभ्यन्तरे सूसूकुर्वंस्तदीयशोकावहचिन्तनस्य प्रतिध्वनिरिवाश्रावि। तमिस्रा च रमणमभियियासुर्म्लानमुखमिन्दुं समुचितनीलवर्णाम्बरगुण्ठनेन सावधानं तनुयष्टिमाच्छादयितुमुपाक्रमत। अथ समयेऽस्मिंस्त्यागराजो विगतनिद्रो व्यचिन्तयत्। ''किं वदिष्यन्ति प्रेयस्या बान्धवाः? अपि न निवर्त्स्यति सा मत्सविधम्।'' ततो मूर्तिस्तदीया सहसा तच्चेतसि विलीनाऽभूत्। अकथयत्स आत्मने। 'अनिवेद्य प्रियायै मत्प्रथमोद्वाहवार्तां तत्पाणिग्रहणमन्याय्यं खलु भवेत्। परित्यक्ता नवोढा जीवत्येवाद्य प्रायः। तथापि धर्मशास्त्रेष्वेकपत्नीव्रताग्रहो न प्रतिपद्यते। परं गत्वा रय्याग्रामं पुनरवश्यमेव तद्विषये विधेया पृच्छे'ति निश्चयमकार्षीत् त्यागराजः। तदनुद्वित्रदिनोत्तरं राजदुर्गवर्तिनो देवतागारस्याङ्गने स प्राविशत्सायम्। आसीत्सन्ध्योपासनाऽव्यवसितप्राया। देवमन्दिरस्य घण्टानाद उच्चोच्चैरनवरतं शुश्रवे। अथ गगनतलचरमार्धवर्तिनि दिनकरे समूह उपासकानामेकैकशो देवालयान्निश्चक्राम। त्यागराजः क्षणमात्रं प्राङ्गणे विलम्ब्य मार्गे यावत्प्रचलति तावत्सम्मुखीभूतायाः कस्याश्चिदङ्गनाया दर्शनेन स्तिमितोऽभूत्। सेयं पूर्वमपूर्वलावण्या युवतिरिदानीं मध्यवयस्कापि ससौष्ठवपुष्टाङ्गी चारुवदनेन्दिरासीत्। तमेतं संवीक्षमाणायास्तस्या जामातरममन्दानन्दपूरेण परिप्लावितं हृदयम्। दृष्टिर्हर्षबाष्पजडाऽभूत्। किमिदं स्वप्नोऽनुभूयत इति मन्वाना दीर्घतरं निराश्वास सा। भिया विस्मयेन कुतूहलेन च गृहीतं हठादन्तरङ्गमेतस्याः। जामातरं सम्बोधयन्ती, 'किं भवाननुपमः?' इत्यभ्यधादश्रद्दधानेव स्वनेत्रयुग्मम्। जामाता निरुत्तरः स्थितवान् क्षणम्। 'किमुत कोप्यन्यो वा महाभागः?' इत्यपृच्छत्सा पुनः

सन्देहात्। अभिज्ञातोऽस्मि श्रीमत्या सम्यगित्यस्फुटं प्रत्यभाषि ससम्भ्रमं साम्प्रतिकेन त्यागराजेन परिचित– पूर्वेणानुपमेन। ततश्चापृच्छद् ''अपि कुशलं श्रीमत्याः पितृदेवानाम्?'' इति। दिवं गतास्ते पञ्चभ्यो वर्षेभ्यः प्राग् इतीन्दिरयाभाणि। अथ तदीयकन्यापि प्रायः कालवशं गता स्यादिति बलवदाशासानो विनताननः क्षणं जोषमस्था–त्पुनस्तापसः। ''अपि वत्सा श्रीमत्या...'' इति वचनार्धं एव स व्यरमत्।

**इन्दिरा –** चिरादतिक्रान्तमुग्धावस्था लावण्यातिशयसम्पन्ना प्राप्तोत्फुल्लयौवनदशां शोभतेतरां मे नन्दिनी। कुतः समायाता भवन्तः?

इति पृष्टोऽब्रवीदनुपमः पुण्यपुरोपान्तवर्तिनः खड्कीनाम्नः प्रदेशादिति। अथ निशम्य नाम पुरस्य परमविस्मयसरणिमारुक्षत्सा। ''अपि प्राक्त– नहस्तलिखिततालपत्रेषु नित्यं व्यापृतः स्थ पूर्ववदेव'' इति तत्तादात्म्यं परीक्षितुमिच्छन्ती पप्रच्छेन्दिरा। तथेति तेनोक्ते व्यजानात्सा सद्यो यत्पुरुषे यस्मिन् निजात्मजेदानीं निबद्धानुरागास्ति तेनानुपमेनैव संप्रति गृहीतत्यागराजनाम्ना ध्रुवं भाव्यम्। अयं च पथिकः स एव येन परित्यक्तासीन्नातिक्रान्तशैशवा नवोढा मीरा प्रागष्टादशभ्यो वर्षेभ्य इति। अभिज्ञानेनानेन परमानन्दतुन्दिलं समभूत्तदीयान्तरङ्गम्। हर्षातिशयेन रोमाञ्चितगात्रयष्टेस्तस्या अश्रुपूरेण परिप्लावितं लोचनयुग्मम्। तथापि स्वान्तर्गतविचिन्तनस्येङ्गितलेशमपि तस्मै नावबोधयन्ती वत्सात्ममातरौ परस्परपारमार्थिकतादात्म्याज्ञा अकल्पितविस्मयप्रहृष्टौ कारयिष्य इति झटिति निश्चित्याब्रवीदिन्दिरा। ''अतिवाहितः कल्पायमानोऽयमे– तावान्समयो भवन्तं प्रतीक्षमाणया मीरया। अपि नासीत्क्षणमपि वर्षेषु व्यतीतेषु सकृदपि तावदस्मानवेक्षितुं मनस्यभिलाषो भवताम्'' इति। निरुत्तरोऽनुपमः। शुष्ककण्ठो मर्मस्पृशानुतापेन परिविद्धो हृदये निजानुचिताशाखण्डनवैक्लव्येन नितान्तलज्जितो नताननोऽवतस्थे। वत्सामुद्दिश्य यथा यथा सा व्याहरत् तथा तथाभूदनुपमो निश्चेष्टः स्तिमितश्चत। पूर्वं यस्याः स पाणिमगृह्णात्सा मुग्धेदानीं क्षणमात्रं तत्स्मृतिसरणिमारुढासीत्। मूर्तिश्चान्यस्यास्तन्मानसचित्र– फलकात्तिरोऽभूत्। यास्यावस्तावत्सदनं सत्वरमित्युक्त इन्दिरया

किञ्चिद्दोलायमानमना अब्रवीत्।

**अनुपमः** – कस्यचिज्जनस्य गृहे स्थापितां पेटिकामानेतुं गन्तव्यं मयादौ। गम्यतां श्रीमत्या तावत्पूर्वमायास्यामि पश्चात्।

**इन्दिरा** – परं मीराया अवितर्कितहर्षोद्रेकस्य विलम्बो मा भूत्।

**अनुपमः** – भगवति! अपात्रे प्रेमानुबन्धोऽयं निहितो भवत्या किल।

इति निगद्य सगद्गदमङ्गुलीर्व्यावर्तयत् पुनः पुनः ससंभ्रमम्। मैवं मैवमित्याश्वासयन्ती रथ्याग्राममार्गेण प्रत्यचलदिन्दिरा जवेन।

अथ निजालयस्य प्राङ्गणं प्रविष्टमात्रां तां मीराऽभ्यधात् सविस्मयम् 'अम्ब! कथमियत्सत्वरं प्रत्यागतासि?'

**इन्दिरा** – वत्से! श्रुतं किचिद्वृत्तं मया।

**मीरा** – किमुक्तं पुरोहितैः? कच्चिदनुमन्यते तैः पुनर्विवाहो मे।

**इन्दिरा** – देवागारं प्राप्तया मयावलोकितो द्वारि कश्चित्सुहृदनुपमस्य। सर्ववृत्तं तद्विषयं जानाति महाभागोऽयम्। भोजनाय निमन्त्रितश्च मयाऽसौ। न चिरादागच्छत्येवात्र।

मीरा – अथ--अथ--जीवत्यद्यापि---

**इन्दिरा** – नैतत्कथितं तेन। वत्से! अलं चिन्तया। न चिरात्सर्वमेव नौ विदितं भविष्यति।

**मीरा** – कथं गच्छेयं खड्कीपुरम्। अयि मातः सन्देहपिशाचाभिभूतः विगतप्रायप्राणास्मि खलु।

**इन्दिरा** – वत्से! समाश्वसिहि समाश्वसिहि। सर्वथा शुभमेव भविता।

एहि तावत् किञ्चिन्मिष्टान्नं प्रसाध्यम्। अनुपमस्य सुहृच्छुभवार्तासुखेन पूरयिष्यति हृदयमावयोः।

इत्युक्त्वा प्रसन्नाननां प्रसूर्मीरामाश्लिष्य गाढं महानसमनैषीत्। अत्रान्तरे देवमन्दिराद् बहिर्विलम्ब्य किञ्चिदनुपमो रथ्याग्रामं प्रति वव्राज। अष्टादशसु वर्षेषु व्यतीतेषु न किञ्चिदपि परिवर्तनं तद्दृष्टिगोचरतामयात्।

तान्येव क्षेत्राणि यथापूर्वम्। तदेव पतत्रिणां विरुतम्। त एव यथादौ शुष्कतृणराश्या एकपार्श्वप्रवणाः। कर्कशस्वरं टिट्टवीविशेषाण्डजानां शृण्वतोऽस्य स्मृतिसरणिं समारुक्षत्पूर्ववृत्तमात्मनः। शनैः शनैस्तु तिरोभूद् भूतकालः। वर्तमानकाल एव तच्चेतसि दृढमूलः स्थितः। ततश्च प्रतिपत्तिमूढ इव ''किं सुप्तोऽस्मि? किं जागर्मि वा? किं कुर्याम्?'' इत्यनिश्चितचेतसा विजनं ग्राममासादयत्। अदूरादिन्दिराया गृहस्य धूमनालिकोद्गीर्णधूमनिकरमीक्षमाणस्यास्य प्रादुरासीद् वेपथुर्देहे। ''आरूढानेकतर्कस्यास्य व्याकुलतामवर्णनीयामुपजगाम हृदयम्। व्यचिन्तयच्चासौ।'' हन्त! अष्टादशेभ्यो वत्सरेभ्यः प्राङ् नवोढां सजीवां भूमौ निखातवानहम्। तत्सविधे पुनर्गमनेन प्रेयसी मे रामी परित्याज्या स्यात्। इति चिन्ता निर्मर्यादेव प्रवृद्धिमारूढा तं चिक्लेशतराम्। पर्यन्ते शिलायामेकस्यामुपविश्य स्तिमितोऽवतस्थे। नैकघटिका व्यतीताः। प्रत्यासन्ना निशीथिनी। समाधेर्निःशब्दतयेव समावृतोऽभूद् ग्रामोऽयम्। सूचीभेद्यतमसा द्विगुणीभूतानुतापःशून्यदृष्टिरसह्याधिमन्वभवद्वराकोऽयम्। तदीयशोकाग्निनैराश्ये– नेव संवर्धितोऽदन्दह्यत तद्बाह्यकरणम्। सर्वतो दिशः शून्यतां गताः। निखिलं गगनन्निष्प्रभमेव बभौ। आरूढवार्द्धकप्रायं सहसाऽऽत्मानं सङ्कल्पयामास तदनु कृतमतिरिवोत्थाय झटिति इन्दिरागृहगामिनो मार्गान्निवृत्य तमिस्रायां निममज्ज।

सप्ताहद्वयोत्तरमिन्दिरया सह मीरा खड्कीप्रदेशसमीपवर्तिन्या–स्तटिन्यास्तटे यथा प्रतिश्रुतमुपातिष्ठत। सुतरामवदीर्णहृदयाऽपि सन्देहात्कृत– निश्चयासीन्मीरेदानीम्। ''अम्ब! किं नाम मया तस्मै निवेदनीयम्'' इत्यविदित– वल्लभतादात्म्यां न्यगददसकृन्मीरा। ''वत्से कृतं चिन्तया। सर्वमेतन्मयि विसृज्य विश्रब्धं तिष्ठ। स्वयमेव तस्मै निवेदयिष्यामि।'' इतीन्दिरा मीरामाश्वासयन्मृदु–स्वरेण। अथ दिवसोऽप्यवसितप्रायोऽभूत्। सायन्तनचित्रविचित्रकुटिलच्छायाभिः सर्वत्र किमपि रुक्षवैलक्षण्यं प्रसृतमासीत्। सङ्केतस्थाने प्रतीक्षमाणयोर्मातृ–दुहित्रोदीर्घः कालोव्यतीतः। निर्झरिणी सघर्घरशब्दं पादयोस्तयोर्निकटेऽसुस्रुवद् विमनस्केव। क्षेत्रेषु चरतो गोव्रजस्य

ग्रीवावलम्बमानघण्टानादो न्यूनीभूतः क्रमेण। प्रत्यासन्नायां निशायां वेपमानगात्रयष्टिर्मीरा शून्यहृदयेव तस्थौ। ''कच्चिज्ज्ञानासि तस्य... तव प्रियकरस्य वसतिस्थनम्'' इति मन्दस्वरेणेन्दिरया पृष्टा मीराऽङ्गुल्यैव तन्निर्दिदेश। उभे च सद्यस्तापसस्य विविक्तावासमुपजग्मतुः। मलिनवातायनो रजःशुष्कतृणावृतः कुटिरो निरानन्दतां नितरामेधामास। शैवलाच्छादिताभ्यो भित्तिभ्य उदभूत् क्लिन्नताशैत्यम्। कुटीरस्यान्तरत एव द्वारमर्गलीकृतमासीदिति। कीलकेनान्तर्गतशृङ्खलामुद्धृत्य सलीलं द्वारकपाटमुद्घाटयदिन्दिरा। प्राविशच्च सह दुहित्रा मुखप्रकोष्ठम्। कुटीरे सर्वतः परिभवनैराश्यातिशयशोकादिभावा व्यक्तीभूता आसन्। शून्यशून्यतैवावर्तिष्ट सर्वत्र भग्नाशया समारूढा विषादस्य कोटिमन्दिरा कुटीरान्निर्ययौ। मीरा तु ततो निर्गन्तुमनिच्छन्तीव मुहूर्तमलिन्दभूमौ चिरायिता जोषं स्थितवती। शोकातिशयेनान्तर्दन्दहयमाना बहिः शून्यकुट्याः स्तम्भितवाक् कश्चित्कालमिन्दिरा तस्थौ।

मीरावदत्। ''मातः क्षेमायैव मे प्रायः सर्वमिदं संवृत्तं स्यात्। पूर्ववन्नात्मनमिदानीं गतभर्तृकामाकलयामि। दुराशामृगतृष्णिकयैवासौ तपस्वी त्यागराजो निर्लज्जया निर्लक्षणया मया प्रतारितः किल। तथापि स्वकथानिवेदनान्निवारितास्मीति शुभमेव'' इति। निशम्य तस्या वचनमधिकाधिकमवदीर्णहृदयेन्दिरा व्यचिन्तयत्। 'जन्मान्तरोपार्जितस्य दुष्कृतस्य मे किमेष परिणामो यन्मन्मनोरथनैष्फल्यादनर्थपरम्परा समुद्भूत्। हन्त कन्या जामातरौ विस्मापयितुमिच्छन्त्यात्यन्त विपरीतमेव व्यधायि मया। साहमेवंविधा पापकारिणी निष्फलजीविता गर्हणीया यया स्वात्मजाया निर्मूलमुन्मूलितः सुखद्रुमः।' इतीन्दिराया असह्यानुतापाग्निना भस्मीक्रियमाणं हृदयमासीत्।

अथ यावत्कुटीरान्निर्गच्छन्ती मीरा प्रवेशद्वारं पिधातुं यतते तावत् कपाटस्य पृष्ठे क्लिन्नं छत्रमेकं तापसस्य नामाङ्कितं भूमौ सहसा न्यपतत्। सपदि तदुद्धृत्याभ्यधान्मीरा अम्ब! अम्ब! पश्य! हन्त तस्येदं छत्रम्। तत्स्मारकमिति रक्षिष्याम्येतत्। इत्युक्त्वा छत्रं सादरं सबहुमानञ्चादाय बद्धमौनां प्रसूमुपेत्य समं तया प्राचलत्प्रदोषे। अथ कतिपय पदानि

प्रचलन्तीभ्यां विजने मार्गे प्रदोषसमये दूरादेव ताभ्यामवलोकि कस्यचित्पुरुषस्याकृतिः। नचिराच्च तापसस्तयोः पुरतस्तस्थौ। तमालोक्य मीरा रोमहर्षात्कम्पमाना विलुप्तवागिव बभूव। तापसस्तु स्वप्नगतदृश्यं पश्यन्निव भूलग्नस्तस्थौ। प्रहृष्टेन्दिरा साशीर्वादवचोभिर्वत्सा-जामातरावभिनन्द्य तयोः करौ संयोजयामास। ततश्च सगद्गद न्यगदत् 'अहो! अनुपम अनुपम! अमूल्यं भवदीयं छत्रमिदं येनाष्टादश वर्षाणि विश्लिष्टया भार्यया पुनः संयोजिता भवन्तः सर्वं च सुखावहं पर्यवसितमि'ति।



# ६. हैमसमाधिः

दिवसोऽवसितप्रायः। अस्तं गमिष्यतो भगवतः सहस्ररश्मेररुणरश्मि-भिश्चुम्बितानि हिमच्छन्नान्युच्चोच्चशिखराणि हिमाचलस्य विविधधातुमयत्वाद् देदीप्यमानानि नानाविधरत्नखचितानीव विदूरात्प्रतिभान्ति स्म। नगाधिराजोऽयमवगाह्य पूर्वपश्चिमौ वारिनिधी भूमेर्मानदण्ड इव पूज्यमान- स्तिष्ठतीति कवीन्द्रस्य सूक्तौ प्रेक्षकस्तं दर्शं दर्शं कथं न प्रतीतो भवेत्।

अस्ति निविष्टं मणिमयगिरिमेखलायाः किष्टिवाराख्यग्रामस्य च मध्ये क्वचिद्विविक्तस्थले कुटीरमेकं ग्रामीणस्य कस्यचित्। प्रदोषेऽस्मिन् काचिद्रूपयौवनसम्पन्ना हिमानाम्नी युवतिः सृष्टिसौन्दर्यमालोकयन्ती कुट्या बहिश्चिनारनाम्नस्तरुविशेषस्यालवालं परितो रचितायां वेदिकायामुपविष्टासीत्। दरीदृश्यते तस्याः पुरः कुटिलः पन्थाः यः शालिक्षेत्रादारभ्य कारवाहीगुल्मेष्वन्तर्हितस्ततश्च पुनः सुदूरं दृष्टिगोचरो भवति। नेदीयसः परश्शतपादायतस्य गिरेरधस्तात्सुदूरं प्रसृतः प्रचण्डो जलप्रवाहः प्रतिबध्नतः प्रस्तरान् शकलीकुर्वन् फेननिकरोद्भारभासुरो निर्झरझर्झरनिनादेन दिगन्तमापूरयन्निवासीत्। आस्तामुभावपि पार्श्वौ पर्वतस्यावृत्तौ नानाविधपुष्पितवन्यगुल्मैर्नन्दनवनरमणीयताविडम्बिभिः। अतिमनोहरं हिमालयस्याद्भुतसौन्दर्यं दर्शं दर्शं विस्मृत्यात्मानं हिमा गाढं समाहितेव तस्थौ। सर्वतः शान्तताधिदेवता व्यराजत। समयेऽस्मिन् गगनचुम्बिशिखराः सर्वाह्वयद्रुमाः पर्वतीयप्रदेशस्य दिग्रक्षका इव निश्चलाः सावधानमिव तस्थुः। गन्धवाहो निरुच्छ्वास इवास्त निःशब्दः स्तब्धश्च। अथ यावत्तरुणी दीर्घं निश्वसिति तावत्तस्या माता पृष्ठतः समुपेत्य तारस्वरेण पप्रच्छ।' हिमे, अयि किं चिन्तयसि वचनं सर्वथा तस्य मूढमतेस्तापसस्य श्रीनगरनिवासिनः।' सहसाऽऽसनात्समु-त्थापितेव हिमा परावृत्य परिणतवयस्कां कृशाङ्गीं निजजननीं कुटीरान्निर्गतामद्राक्षीत्। दत्त प्रत्युत्तरेङ्गितेन पुनरसंख्यवर्णरञ्जितक्षेत्रविस्तारस्य निरूपणे हिमा व्यापृता समभूत। स्थविरा च दुहितुरन्तिकमुपविश्य ताम्बूलं चर्वन्ती व्याहरत् -

'अये निमित्तज्ञोऽयं धर्मकञ्चुकीति निश्चिनोमि। किमनेन तस्य संदेशेन। हन्त तस्मिन् विश्वसत्या त्वया समाकृष्टास्मीयद्दूरं महारण्यम्।

हिमा – मातः, किमिति वृथा तापसमुपालभसे।

**वृद्धा** – अपि तेन सनिश्चियं ज्ञापितासि तव पत्युरम्बुजस्य संकेतस्थानमुद्दिश्य अम्बुजस्य वृत्तोपलब्ध्यै गतवत्यहं सह त्वया तत्सविधे, न पुनस्तद्विचित्रमुखावलोकनाय। आः वञ्चक एवासौ।

इति सतिरस्कारमुक्त्वा सा नासिकया नस्यचूर्णमाददे।

**हिमा** – मातः उक्तमेव तेन यत्---- इत्यर्धोक्तवचसो व्यरमत् तरुणी।

**वृद्धा** – किं नाम व्याहृतं तेन। पुण्यम् – पुण्यमेव सिद्धिप्रदम्। (सोपहासं विडम्बयन्ती) यथा यथाधिकं कष्टं पुण्यवृद्धिस्तथा तथा। नैतदम्बुजस्योदन्तस्य कमप्यंशं व्यनक्ति।

**हिमा** – तथापि तापसस्य संदेशेऽस्मिन् कोऽप्याशाङ्कुरो व्यज्यते खलु।

इति सा चुम्बितनिष्प्रभधूसराम्बरतलान् देवदारुद्रुमाञ्जोषं विलोकयन्ती समुदैरयत्।

**वृद्धा** – वत्से का नामाशा? अपीदममरनाथस्य हिममन्दिरं प्रति प्रयाणं संगमयिष्यति त्वामम्बुजेन? व्यतीतं खलु पञ्चवर्षकं तस्य प्रयातस्य गृहात्। पितापि तस्य त्रिंशे वर्षे परिभ्रमणसक्तो भार्यां मासजातापत्यं च विसृज्यामरनाथयात्राबद्धादरो गेहान्निर्गतो न पुनर्निवृत्त इति श्रुतममस्माभिः। गेहिनी तस्यानवरतनयनाम्बुधारा वर्षन्ती शोकानलेन प्लुष्टेव स्वशिशुं ग्राहिताम्बुजनामकं तदानीमेकाब्ददेशीयं कस्मैचित् सुहृदे समर्प्य दिवं गतवतीत्यपि सुविदितमेव नौ।

**हिमा** – परं पर्यटनासक्तिः पित्रा प्रेरिता तस्मिन्निति तत्पूज्यतातपादेषु दोषमारोपयितुं नोचितम्। अपरं च विदितमेव ते यच्चिरात्तिरोहितस्य पितुरन्वेषणैकधिया प्रस्थितो हिमाचलं प्रति तव जामाता, न तु विहारसुखोपभोगाय न वा पर्यटनासक्त्या।

**वृद्धा –** प्रवृत्तिरीदृशी वंशपरम्परागतास्तीति न संदेहः। हिमे, सुग्राहितनाम्नी त्वमपि हिमगिरिमारोढुमिच्छसि नष्टस्य पत्युर्गवेषणायेति न विस्मये।

**हिमा–** अम्ब किमित्येवं ब्रवीषि। वेत्सि त्वं यदस्य पुनर्दर्शनस्य नास्ति स्तोकमप्याशा। आध्युपशमनार्थमेव यात्रेयं मयि जिगमिषां जनयति। व्यतितेषु पञ्चसु वर्षेषु प्रतिक्षणं विरहजन्यमसह्यादुःखं सोढवत्यहम् इदानीं तु गलितधैर्या संजातास्मि। मानसव्याधिमुपशमयितुमनेक उपायाः कृता अस्माभिः, परं सर्वेपि निष्फलत्वमेव याताः। तस्मादेव श्रीनगरे तापसस्योपदेशोऽभ्यर्थितो मया।

इत्यभिधाय श्वासस्थैर्यार्थं मुहूर्तं विरम्य पुनरुपाक्रमत् वक्तुम् –

**हिमा –** अम्ब पर्यटनमिदं प्रशान्तिं मे प्रदास्यतीति नास्ति संदेहलेशोऽपि।

**वृद्धा –** परं पुण्यस्य कः सम्बन्धोऽत्र।

यथा यथाधिकायासः पुण्यवृद्धिस्तथा तथा।
पुण्यं हि सात्त्विकं नूनमशक्यमपि साधयेत्।।

इति भविष्यवादिनं तापसं विडम्बयन्ती मुखविकृत्या क्रियासमभिहारं तद्वचनं प्राजल्पत् स्थविरा।

**हिमा –** मातः जानासि यन्नास्ति पुण्यादन्यत्किमपि महत्तरम्। ध्यान– तपोव्रतादिक्लेशोत्तरमधिगतात्पुण्यान्माङ्गल्यमेवोद्भविष्यति। अपरं च वर्षपञ्चकात् प्राक् श्रीमदमरनाथक्षेत्रादेवाम्बुजस्य प्रथमं पत्रं समासादितं मया।

**वृद्धा –** कश्चित्कालमुषित्वा च तत्रास्मिञ्जन्मनि समं वल्लभेन संयोक्ष्यते पुनरिति तव विश्वास उपहासास्पदं खलु।

**हिमा –** को जानीते।

**वृद्धा –** वत्से, वृद्धाया मे वचः श्रुणु तावत्। अतिशैत्यादावां न यावच्छिलायिते भवावस्तावदेव श्रीनगरं निवर्तावहै।

**हिमा –** (सविस्मयम्) किम्? इयद् दूरमागत्य निवर्तिष्यावहे?

**वृद्धा –** (असन्तोषस्वरेण) हन्त, मार्गक्लेशबाहुल्यस्य नाल्पिष्ठमपि व्यतर्कि मया प्रयाणात्पूर्वम्। उपत्यकाया अध और्णवस्त्रजात-भारवाहकस्योरणस्य पतनादारभ्य शैत्याच्छकलीभूतास्मि। को जानिते कीदृशी घटना घटेत पथीति। अपरं च समयेऽस्मिन् विशेषतः श्रावणमासे यात्रिकाः परस्सहस्राः पुण्यक्षेत्रं समागता विकरिष्यन्ति सर्वत्र मालिन्यं व्याधिं निर्भरं च। एतद्देशीयवायुजलादिकमपि नानुकूलं तवेति प्रत्यहं क्रशिमानमापद्यसे विवर्णा च संजातासि। अतः स्वदेशं प्रतिनिवर्तावहै शीघ्रम्।

**हिमा –** मातः प्रोक्तमेव मयाऽसकृद्यन्न कोऽपि जगतीतले मत्प्रतिज्ञां मिथ्या कर्तुं प्रभविष्यतीति। तस्मादलं निषेधवचोभिः।

**वृद्धा –** (किञ्चित्कुपिता) मूढासि त्वं यत्पराधीनेऽपि विषय एवंविधा प्रतिज्ञा कृता त्वया। अतो गम्यतामेकाकिन्यैव। निवर्तिष्येऽहमितः श्रीनगरम्। नाहं व्याहन्मि तवोत्साहम्। (मुहूर्तं विरम्य) परिभ्रमणावेशप्रवृत्तिं पैतृकधनमिवाप्तवानम्बुजः परं कस्मात्त्वयाधिगतेयमिति न जाने।

अथ मातृवचनमाकर्ण्य किञ्चित् स्मिताननाऽप्रहतोत्साहा तरुणी तूष्णीकं वितस्थे। अथ परेद्यवि भानूदयात्प्रागेव विसृज्य शय्यां विना जननीं प्रस्थातुं प्रावर्तत हिमा। ह्रस्वकायस्त्रिविष्टपदेशीयः कश्चित्तस्याः पोट्टलिकां वहन् स्कन्धेन तत्पृष्ठतोऽचलत्। प्रस्थानसमये मातरमियं यदाह्वयत्तदा तस्यै प्रदायाशीर्वादं वृद्धा तूष्णीं तस्थौ। परस्तात्कुटीरस्य द्वारदेहल्याः प्रयान्ती कन्यामादृष्टिपथगतां प्रेक्षमाणा स्थितवती।

अथ हिमानेकाहानि चिनारदेवदारुसुर्वाह्वयादिद्रुमव्याप्ते महारण्ये पर्यटच्च यावदेकदाऽपराले चेनाबनामकं रज्जुनिर्मितसेतुं समासदत्। समागत्यात्र कस्याचिच्चिनाराख्यतरुविशेषस्य प्रच्छायशीतले तले निजं शयनीयं विस्तृत्य कञ्चिकालं विश्रान्तिसुखमासेवत। पराह्णस्य मान्थर्येण व्याप्तं गन्धवाहं निर्मलं परिमलमयं च श्वसत्यै सपदि तस्यै निद्रादेव्या सुष्वापसुखमदीयत। घटिकोत्तरं प्रबुद्धा शय्यां निबध्य पुरः प्रयातुं यदा सा

प्रवर्तते तदा मार्गदर्शकस्तस्यै चिरक्षुण्णवर्त्माऽङ्गुल्या निर्दिश्याब्रवीत् अनया पदव्या गन्तुमर्हति श्रीमतीति। परं श्रीनगरनिवासिनस्तापसस्य संदेशो यथा यथाधिकायासः पुण्यवृद्धिस्तथा तथेति तस्याः श्रुतिशष्कुलीं पूरयन्नासीत्। तद्वचने बद्धविश्वासा च सा शिरः कम्पयित्वेङ्गितेनैव मार्गदर्शकस्य सूचनां निराकरोत्। सङ्कटाक्रान्तेन यथा जिगमिषोस्तस्या निश्चयं विदित्वा साश्चर्यं तस्याः बद्धदृष्टिः क्षणं निरुत्तरः स्थित्वा त्रिविष्टपदेशीयः प्रत्युवाच 'भगवति, पुरो गन्तुमक्षमोऽस्मि, पादव्यथां मा पीडयतीति। 'यथेच्छं विधेहि' इति तं प्रोच्य युवतिः पोट्टलिकामंसे समारोप्य रज्जुनिर्मितसेतुमतिक्रमितुमुपाक्रमत्। ततश्च पर्वतश्रेणीतः पर्वतश्रेणीम् अटवीतोऽटवीम् शिखराग्राच्छिखराग्रम्, अधित्यकातोऽधित्यकां समुलङ्घ्य पुरतो दरीमेकामत्यगाधामधस्तनीमालोक्य तस्या मस्तके कोऽपि झङ्काररवः समुदित इवाभात्। एकमात्रं पदस्खलितमस्मादान्दोलयद्रज्जुसेतोर्मां प्रचण्डप्रवाहसिन्धा अस्मिन् प्रसभं पातयेदिति विभावयन्ती सा स्विन्नगात्री सवेपथुः समजनि। ततश्च परमात्मनः परमकरुणामेवावलम्बनं प्रतिपद्य परेशस्यागाधमहिमानं च ध्यायं ध्यायमगणिताध्वक्लेशवन्यसत्त्वभयादीन् विगणय्य कुटिलवर्त्मन्नैव निर्भयं सनिश्चयं प्राचलत् प्रागल्भेयं तरुणी। देवदारुद्रुमैर्गाढमाच्छादिते महारण्येऽस्मिंस्तत्पादविन्यासशब्दमन्तरेण न कोऽपि ध्वनिरश्रावि। प्रदेशोऽयमत्यन्तभयावह इति यात्रिकैर्वर्जितप्रायोऽभूत्। क्वचिद्रोमायुस्तरुगुल्मान्निर्गत्य तां न्यरूपयत्, ततश्च भयोद्विग्न इवात्मनोऽभिरिरक्षिषया द्रुतं पलायितः। अभ्रंकषपाप्लरनामकानां पारसीकदेशोद्भवतरुविशेषाणां मोगलसाम्राज्यकालादारभ्य सर्वत्र कश्मीरेष्वारोपितानां श्रेणिः निबिडतमच्छायायां पिशाचपङ्क्तिरिव घोरलास्यं कुर्वाणेव व्यभासीत्। हिमा तु निर्भयमूर्ध्वोर्ध्वमारोहत् पृष्ठतस्तस्याः पुरतश्च तस्थुरुच्चोच्चश्रेणयोऽत्यन्तविशालहिमाद्रेर्नितम्बानाम्। क्वचिद् द्विरेफस्य झङ्काररवे तस्याः श्रुतिसरणिं निपत्य पुनर्विरते प्रशान्तता प्रासरत्।

पर्यन्ते श्रीमदमरनाथगुहाया बहिःस्थाधित्यका दृष्टिगोचराऽभूत्। ततो

यावत् पिसुनाम्नः शैलस्योत्सङ्गे स्मयमानशेषनागाख्य-सरोवरमवलोकयन्त्यधित्यकां समुपैति सा, तावद् बृहदक्षोट्टद्रुमस्याधो ध्यायन्तं कञ्चित्तापसवृद्धं व्यलोकयद्धिमा। प्रदोषस्यैधमानान्धकारे निष्प्रभनीललोहितपर्वतच्छाया-भिर्घनीभूते स प्रवया जीर्णपर्णमिव वलितपीतवर्णास्य आनाभिविलम्बमा-नसितसान्द्रकूर्चो भस्मधूलीरुषितजटाजूटकोऽशिथिलाकुञ्चितगात्रो दाक्षिण्याङ्कितललाटो भद्रतयेव स्नातशरीरो भ्रूमध्यस्थापिताचलदृष्टिः शताधिकवर्षदेशीयः पुरातनकालप्रतीक इव समुदलसत्। हिमायाः पदन्यासशब्दमाकर्ण्यायतद्योतमानं नयनयुग्ममुन्मील्यान्वयुङ्क्त तां 'वत्से कुतः प्रतिपन्नं त्वयेदमतिक्लेशकरं प्रयाणम्।' इत्यनुयुक्तया युवत्या तस्य तेजस्विमुखमण्डलं निपुणं निरीक्षमाणया श्रीनगरकृतावासस्य तापसस्य संदेशो निवेदितस्तस्मै। योगीन्द्रोऽभिनन्द्य तत्सङ्कल्पं तस्यै मेषदुग्धफलाद्युपहारं व्यतरत्। ततश्चेङ्गितेन समीपवर्तिनीं निम्नपटलां निजकुटीं तस्यै स निर्दिष्टवान्। सव्रीडं दोलायमानमानसामेतां साग्रहं समार्दवं चाभाषिष्ट, 'बाले, प्रविश्यतां कुटीरमिदं निर्भयमाप्रातश्च विश्रान्तिसुखं सेव्यतामि'ति। तत्कारुण्येन प्रफुल्लहृदया तरुणी प्राविशत् कुटीम्, विस्तृत्य चास्तरणं भूमौ सपदि गाढनिद्रया गृहीताभूदानिशीथम्। ततश्च गवाक्षान्तर्निविष्टसुधाकरकरचुम्बितानना जागरितेयं शय्यां विसृज्य कुटीराद्बाहिः स्थित्वा कौमुदीदुग्धप्रवाहपूरधवलितं काननमालोकयन्ती विधातुः सृष्टिचमत्कारेण परवशीभूतासीत्। कुट्याः स्वामी योगीन्द्रः पूर्ववच्चिनारपादपस्याधो भगवद्गतेन मनसा विस्मृतदेह इव चन्द्रालोकसौन्दर्यं कदाप्यनवलोकयन्निव विगतचेतन इव निमीलितलोचनः समवस्थितः। तस्य समाधिविच्छेदो मा भूदिति मन्दंमन्दं कानिचित्पदानि गत्वा कस्यचि-द्विशालवृक्षस्याधः शिलायामुपविश्येयं कतिपयघटिका यापयामास। बृहत्तमप्रत्यन्तपर्वतानां हिममयशृङ्गाणि काश्मीरवर्णकान्त्या हिमांशो रजतरश्मिभिश्च देदीप्यमानानि शुशुभिरे। मरकतनीलेस्मिञ् शेषनागसरोवरे रजन्या ध्यानपरा वृत्तिः प्रतिबिम्बितासीत्। आलोकस्यात्यद्भुत्तरमणीय-त्वपराधीनायास्तस्या विचारसरण्यां समापतत् स्मरणं

चिराद्व्यतीतानां वर्षाणाम्, स्वभर्तुसनाथीकृतस्वगेहस्य आत्मीयस्वल्पकालस्थायिवैवाहिकजीवनयात्रायाः अब्दपञ्चकतः पूर्वं संवृत्तस्याम्बुजस्य प्रस्थानस्य मन्दिरात्। तत्तश्च जन्मान्त-रानुभवारूढेवाभासमयतापद्यमानेव तस्याः स्मृतिर्मुहूर्तं ग्लानीमभजत्। अपारविलक्षणचिन्तार्णवोर्मिलोडितमभून्मनस्तस्याः। व्यचिन्तयच्च–यदि तस्यां प्रचण्डदर्यामम्बुजः सरभसं चिरात्प्रलीनः स्यात्ततः किम्? इत्याकलयन्त्याः पक्ष्मपङ्क्तियुगलं बाष्पोद्धारेण सिक्तमिव, शरीरं च रोमाञ्चकण्टकितमिवाभूत्। करुणासागरकल्लोलैराकृष्टाया मनस्तस्या विषादगण्डशैले न्यस्यत। अकल्पयच्चाकाण्डं सा यच्छ्रीनगरनिवासिनो भविष्यज्ञस्याकृतिः स्वदृक्पथे निपत्य क्षणाद्देवदारुद्रुमाणां पृष्ठतः समुत्प्लुत्य झटिति पाण्डुवर्णविभावर्याश्छायायां क्षणं दृश्यमाना पलाशिनां मण्डलेषु विलीनेति। दूरस्थाधित्यकातस्तस्य स्वरप्रतिध्वनिरश्रावीति च सा व्यभावयत्। भावनेयं तु क्षणिकस्वप्न इव विनष्टाऽभूत्पुनश्च गाढनिःशब्दता शर्वर्याः सर्वतः प्रासरत्। शीतशीतोषःकाले योगीन्द्रं पूर्वेद्युरिव ध्यानावस्थितमद्राक्षीत् सा। संध्यायामस्यान्तरायो मा भूदिति यावत्सा पुरश्चलितुं प्रवर्तते तावन्मुनेर्नयनयुगमुन्मीलितं वलिनानने चास्य किञ्चिन्मन्दस्मितमाविरभूत्। कृतज्ञताभरपुरस्सरमापृच्छमानां युवतिं मुनीन्द्रोऽभिषिष्ट–'वत्से, याहि पुरः। शश्वत्स्थास्यति तव पुण्यम्। भूयाच्छिवं ते। आशीर्वचो वितरन्तु ते देवाः।' इत्युदीर्य भानूदयं प्रति समुन्नमिते तस्य क्षीणक्षीणानने पूर्णशान्तता व्यराजत। न चिरात्पिहितलोचनस्य तस्य मुखमण्डलं समीक्षमाणा सादरं करपल्लवौ संपुटीकृत्य शीतमरुत्सुखमनुभवन्ती हिमा सोत्साहं पुरः प्राचलत्।

अथ द्वित्रदिवसोत्तरं मार्तण्डमण्डले निम्लोचति समासदद्युवतिरभीष्टस्थलम्। अपर्याप्ताशनतया पाण्डुवदना कम्पमानाङ्गयष्टिः श्रमेण मृतप्राया च तुङ्गतुङ्गतुहिनसञ्चितशृङ्गं तुहिनगिरेः शनैः शनैरसृपत्। प्रकाशे दिनमणेर्हीरकमणिमालानामिव देदीप्यमानानां शिखरमालानामत्युज्ज्वलतेजसा दृष्टिस्तस्याः प्रत्यहन्यत। पर्यन्ते नानाविधविलक्षणभावनाभङ्गिप्रवाह– पूरप्लावितान्तरा श्रीमदमरनाथस्य

गुहान्तिकं संप्राप। आसीद्विशालस्थल्यां कन्दराद्बहिर्यात्रिकजनार्णवः क्वचिच्छतशः परिणतवयस्काः कुघटिताङ्गयष्ट्यः क्वचित्परस्सहस्राणां ब्राह्मणानां समूह इतस्ततो यात्रिकेभ्यो धनाशया साहाय्यं चिकीर्षुः क्वचित्परश्शतानामन्धपङ्गुमूकबधिरादिभिक्षुकाणां व्रातो जीर्णचीवरवेष्टिताङ्गः कम्पमानः, क्वचित्परश्शतानां परदेशीयानां समुदायो निवर्तमानः श्रीनगरम्, क्वचिदर्धनग्नाः शिशवः स्वस्वमातृनितम्बलग्नाः। हिमा च यातायातसंक्षुब्धजनतामहार्णवाभ्यन्तरे संघर्षिता निपीडिताङ्गी च सर्वेषां पार्श्वतः कथं कथमप्यचलत्, यावत्सा प्राप पवित्रगुहाम्। प्रविष्टा च तत्राद्राक्षीत् दूरवर्तिनि कोणे गोलार्धाकृतींस्तुषारराशीन्। मध्यभागे च गुहाया व्यराजत् शशाङ्कमौलेस्तीर्थम्। अदृश्यत देवतायाः पुरो विशालहिममयशिलामधि भगवद्रतान्तरङ्गः साष्टाङ्गपातं नतो भक्तानां समूहः। केचिदन्येऽत्यन्ताभिविनिष्टाः सोत्कटं गायन्तो दिव्यं स्तवम्। परमात्मैकपरायणं तं जनकदम्बं दर्शं दर्शं हिमा पुलकिताङ्गी व्यतिष्ठत विस्मयातिशयाकुला। न चिरादुपासनां विधाय यात्रिकाः सोत्कर्षभावप्रोत्साहिता उच्चोच्चैरगायन् साङ्गवेदपदक्रमोपनिषद्गतानि दिव्यपदानि। बधिरीकृन्निनादभयाक्रान्तं तत्क्षणं युगपत्प्रायोऽनेकरन्ध्रेभ्यो निर्गत्य कपोतवृन्दं समुड्डिड्ये बहिः कन्दरात्। द्विजावलोकनात्प्रहृष्टान्तरङ्गा यात्रिका द्विजवराश्च ससंभ्रमं बहिर्निर्गत्याक्रोशन्–प्रसन्नोऽस्ति भगवानमरनाथ इति। अखण्डपुण्यसम्पादनसमाश्वासी जनसंमर्दः शनैः शनैर्विकीर्णोऽभूत्। तेषु केचित्तपोधना अतिक्लेशमयवर्त्मनाऽवारुहन्नन्ये च श्रीलाः सुगमेन पथा प्राचलन् बहवश्च पृष्ठतश्चिरायिता अवस्थिताः। वेपमाना हिमा भगवतो मूर्तेरन्तिकमुपेत्य निपातितजानु चोपविश्य शिलायां बद्धाञ्जलिः सप्रश्रयं सौत्सुक्यं सोत्कण्ठाभिलाषमपि प्रार्थयत। ज्वलद्धूपसौरभजातं म्लानगात्रीं तां पुनरुदजीवयदिव। न चिरात् सा पटान्तेन सबाष्पनयने प्रमृज्य यावत्समुत्तिष्ठति तावतपृष्ठतः सा चकितचकितेव प्राचलत्। तस्थौ हि तत्पार्श्वे बद्धनिष्ठां तां सकौतुकं निरीक्षमाणः प्रवया योगीन्द्रो येन स्वकुटीरे कतिपयदिनेभ्यः पूर्वं प्रदत्ताश्रयासीत् सा। कथमसौ समायात इहेति नितरां विस्मितां बद्धवाचं

तां प्रसन्नवलिनवदनप्रदर्शितसिद्धान्तप्रोत्साहो मुनीन्द्रोऽभाषिष्ट – 'वत्से, अवलोकितासि मयात्राऽऽयान्ती सुदुष्करेणाध्वना विगणय्य सर्वसह्यक्लेशजातम्। धन्या ते धर्मनिष्ठा। हन्त, धन्यस्ते भक्तेः प्रभावः। भगवानमरनाथस्तवाभीष्टं सफलीकुर्यात्। भूयात्तव पुण्यानुरूपा सन्ततिः।'' इति समर्पिताशीर्वचनेयं निरुद्धक्रन्दनाऽऽत्मानं कथमपि संयम्याधोमुखी तस्थौ। भूयात्ते पुण्यसंचयस्त्वद्वंशजानां शिवंकरोऽपीति योगिनो मृदुलमुदीरितं वचः समाकर्ण्य युवतिः सविषादं विधूय शिरो हस्तौ निपीडयन्ती निरुत्तरा वितस्थे।

योगीन्द्रः – बाले, कोऽस्ति ते विपद्भारः। किमर्थं खिद्यसे। कथय सर्वं वृत्तं सविस्तरम्।

इति सानुकम्पं प्रोत्साहितायास्तस्याः समुन्नमितशिरसो विहितबहुलसाधुवादस्य योगिनो दयोल्लसितमुखमण्डले बद्धदृष्ट्या नयनयुग्मं कामपि विलक्षणसंमोहकतां भेजे। तत्करुणापूरद्विगुणोद्वेल्लितबाष्पासौ निःशब्दं रुदित्वा शनैः शनैः स्खलिताक्षरैः स्वीयमितिवृत्तं तस्मै न्यवेदयत् – चिरादन्तर्हितस्य भर्तुर्वार्ताम्, तद्वियोगवेदनाजन्यं दुःखम्, निजं पर्यटनाभिषङ्गं च। अथेदानीं वरं मरणमपीति निराशाकुलाऽऽयतं न्यश्वसीत्। दीर्घस्मृति– जातोद्भवान्तरङ्गप्रतिध्वनिरिव वदनकुहरोद्गतं तदीयवचनं मुनीन्द्रस्य हृदयं गाढमस्पृशत्। स च क्षणं विमृश्य ततो विधूय शिरः प्राह मन्दं मन्दम्। वत्से, बहुतिथं कालमद्यापि जीविष्यसि। देवा हि तरुणजीवनध्वंसनमवलोकयितुं नोत्सहन्ते खलु। अनुसर मां तावत्। स्वयमेव हि द्रक्ष्यसि मत्प्रतिपादनस्य तथ्यताम्। इत्युक्त्वा गुहायाः समीपवर्तिष्वनेककुहरेष्वेकं प्रति प्राचलत्। सा च जोषं तमन्वसरत्। क्षणोत्तरं प्रविश्य तत्र शवपीठिकाकारां बृहत्तमामेकां हिमशिलां समुपेतवन्तावुभौ। ततस्तुषारराशिमङ्गुल्या निर्दिश्य प्राह प्रवयाः – 'वत्से, पश्य पश्येममि'ति। अधश्च सा विलोक्य सद्यो विस्फारितलोचना स्थगितेव क्षणं जडीभूतेव तस्थौ। ततश्च व्यलपत् – 'अहह मम दयित!' मम दयित! इति अवसन्नगात्री मुक्तकण्ठमरोदीद् विलोक्य हि हिमशिलयोरभ्यन्तरे निवेशितं कस्यचित्तरुणस्य पञ्चविंशतिवर्षीयस्य कलेवरम्। पञ्चभ्योऽब्देभ्यः पूर्वं

गृहात् प्रस्थितोऽम्बुजो यथालोक्यत तथैव किञ्चित्स्मेराननः प्रेतोऽपि ददृशे। झटिति सा ललाटमण्डनायमानं सौभाग्याङ्कं कुंकुमं कमलोदरसोदरकरेण प्रमृज्य ग्रीवायाश्च मङ्गलसूत्रमालापनीय पारदर्शकहिमशिलां च सूक्ष्मं निरूप्य प्रेतस्य हेमाच्छादनपटोपरि तां व्यधात्। अहह हृदयेश्वर! हृदयेश्वर!! इति परिदेवमाना शोकपारावारकल्लोलनिक्षिप्तेव सा भूमौन्यपतत्। साक्षान्निराशाया मूर्तिरिव विह्वलविवर्णानना हिमवत्पाण्डुवर्णा समभवत्सा। क्षणाच्च तद्बाहुपल्लवौ निर्जीवोपाङ्गमिवालम्बेतां निःसत्त्वौ। वत्से! वत्से!! प्राणिनां जीवनं जलबुद्बुदस्य भंगुरत्वमनुकरोति। अलं चिन्तया मृतस्य। भगवतो ध्यानं कुरु निर्वाणं चान्विष्य। इति सहस्ताक्षेपं सर्वं प्रापञ्चिकचिन्तानिकरं विस्मृतिसिन्धौ निरस्यन्निव पलितशिरा योगिवरो युवतिं सान्त्वयामास। ततश्च समार्दवं सकुरुणं क्रन्दन्तीमबलां बालां समुत्थापयामास। सा च कृतनिश्चयेव किञ्चिन्निर्णयावसरदेहल्यामात्मानमाकलयन्तीव मुहूर्तं जोषं वितस्थे। क्रमेण तदीयानने शान्तित्यागादिभावाः प्रादुरभवन्। ततश्च जानुभ्यामवनीं गत्वा बद्धाञ्जलिः सप्रश्रयं साऽभाणीत् तात, अहमप्यत्रैव स्थित्वा गिरिजाशङ्कराभ्यां देहं समर्प्य जपध्यानतपोभिर्जीवनयात्रां यापयिष्यामि। इति वैराग्यशंसिना स्वरेण कर्णे जल्पित्वा बाष्परहिता जडीभूतेव नतमुखी तस्थौ। तपोनिधिस्तावदिं- गितेनैवानुमतिं दत्वा तां कुहरस्य प्रवेशद्वारं प्रत्यनैषीत्।

अथ यावच्छीतलहैमसमाधिकुहरादुभौ निर्गच्छतस्तावदद्राष्टां तौ श्यामश्मश्रुलं चर्मकञ्चुकधारिणं धृतलोमशशिरस्कं दीर्घदुष्करपर्यटनश्रान्तं धूलीरुषिताननं च त्रिंशद्वर्षदेशीयं पान्थमेकं समायान्तम्। अथ मिथोऽवलोकितमात्रौ तरुणीतरुणौ क्षणं सम्भ्रान्तौ स्थितौ। पथिकः सहसा पृष्ठतश्चलितस्ततः क्षणमात्रं साशङ्कमान्दोल्यमानचित्तः समाह्वयद्युवतिं 'हिमे! हिमे!!' इति। इत्थं सम्बोधिताध्वगस्यानने दृष्टिं स्थिरयन्ती स्थगितेव स्वचक्षुषोरविश्वसतीव च हिमा तस्थौ भूलग्नेव। स च स्वजीर्णपोट्टलिकां भुवि निक्षिप्य सरोमाञ्चं सविस्मयमवाप्तपरमप्रमोदसन्दोहो झटिति सोज्झम्पं हिमायाः पार्श्वमासाद्य तां सरभसमुद्धृत्य गाढमाश्लिष्यत्। अवगन्तुमक्षमा

विलक्षणमिमं व्यतिकरं युवतिर्भ्रान्तभ्रान्ताभूत्। स च तामुदासीनावस्थितां क्रियासमभिहारेण सम्बोधयन्प्राह – 'प्रेयसि, अपि नाभिज्ञातस्त्वयाहमम्बुजस्तव भर्ता।' इति तेनानुयुक्ता सा शून्यदृष्ट्या तं सूक्ष्मं निरैक्षत। ततश्च शिरसा संज्ञां दत्त्वा तस्मै, परावृत्य च समाधिकुहरं पुनः प्राविशत्। पान्थश्चयोगीन्द्रद्वितीयः सकुतूहलं तामन्वगमत्। उपेतशवपीठिका सा क्षणं जोषं स्थित्वा प्रश्नपूर्वकमिङ्गितेनैव पथिकाय हिमशिलामधिशयानं तरुणस्य समाधिं निरदिशत्। स च प्रेतमालोक्य विस्फारितनेत्रः क्षणं निरुप्य विवस्वरमाक्रन्दत् – ''अहो, इमे मे तातपादाः। प्रेयसि, व्यतीतानि पञ्च वर्षाणि पितुरन्वेषणैकपरायणस्य परिभ्रमतो मे। सर्वेऽपि प्रयत्ना मोघीभूताः। परं हन्त त्वयाद्य तत्कार्य सफलत्वं नीतमिति धन्यासि खलु। अहो, दैवघटनाया विचित्रता। इत्युदीर्य स निपातितजानुः शिलायामुपविश्य करौ संपुटीकृत्य साष्टाङ्गं पतितः। ततश्च मुहूर्तं विललास प्रकामं शान्तिः। हिमा योगीन्द्रश्च नतविग्रहं पथिकं सविस्मयमवैक्षेताम्। अथ समुत्थिते तस्मिन् मुनिरङ्गुल्या हिमशिलानिवेशितं प्रेतं निर्दिश्य व्याचख्यौ.... अहो विधातुः सृष्टेरयमेकतमोऽद्भुतचमत्कारः। त्रिंशतमब्दान् हि तरुणस्यास्य हिमशय्यायामस्यां कृतपदस्य निरन्तरप्रस्वापसुखमनुभवत इव कालहस्तेनास्पृष्टं कलेवरं स्थितम्। इत्युक्त्वा हिमशिलोपरि निहितां मङ्गलसूत्रस्रजमादाय पुनरब्रवीदम्बुजम् बधानैतां मालिकां ग्रीवायां ते प्रेयस्याः। त्वदन्वेषणपरया साध्व्यानया पुरुषेणापि दुर्गम्येन वर्त्मना पादचारिण्या श्रीमदमरनाथकन्दरारोहणं साधितमिति दिष्ट्याभिवर्धत एषा। समागमोऽयं युवयोरस्यास्तपसां परिणामः। इत्युदीर्य हिमाम्बुजौ प्रमोदपारावारप्रवाहपूरप्लावितौ विसृज्य कुहरान्निर्ययौ योगीन्द्रः।



# ७. मायाजालम्

अस्ति किल कस्मिंश्चिद्रमणीयोत्तुङ्गशैलशिखरे लोकलोचनानन्दप्रदं गुर्जरावनिमण्डले विराजमानमाबुनाम पर्वतावृतं ग्रीष्मविहारस्थानम्। व्यराजत तत्र गोवर्धनोद्धारिणो दारुणदानवविदारणो भगवतः सृष्टिसुन्दरी-चूडायमानातिसुन्दरशिखरमण्डनं मन्दिरम्। परितो देवागारं व्यलसन् नानाविधा विटपिनः सुगन्धपुष्पाढ्याः। सुरालयस्यैकस्मिन् विवक्तकोणे बधिरमूकः कश्चिद् दैवज्ञो नित्यमुपाविशत्। विलक्षणान्तर्बोधसम्पन्नस्यास्य सविधे नानादिग्भ्यो बालस्त्रीपुरुषाणां समूहाः स्वस्वदैवगतिजिज्ञासया समाययुः। नैसर्गिके वैक्लव्ये सत्यपि मूकाभिनयेनैवात्मेङ्गितं जनाय बोधयामास ज्योतिषिकोऽसौ विचक्षणः।

स सत्यगवेषी ध्यानजपादिसाधनैर्भगवन्तमाराधयन् स्वाश्रितजनैरुपास्यत। अथैकदात्र चतस्रः प्रमदाः काश्चन गवेषमाणस्यात्मनः प्रियजनस्य नामधेयं प्रसूनैश्चित्रयितुं दैवज्ञेन मूकबधिरेणादिष्टाः। अतो देवमन्दिरस्या-ङ्गणमनवरतनिपतद्बकुलकुसुमकदम्बसुरभीकृतमवारुह्य लेखार्थं स्वस्वदयितनाम्नः पर्याप्तानि प्रसूनानि संचित्य प्रदोषस्य सुवासित-पवनमासेवमाना विटपिनामभ्यन्तरे शब्दायमानं मरुत्सूत्कारं श्रुण्वत्यो विश्रान्तिसुखमुपाभुञ्जत। देवायतनात् पुरोहितनामादौ स्तोत्रगायनं ततश्च घण्टातालभेरीमृदङ्गवीणादीनामाकर्णितो मन्द्रतरोऽपि श्रोत्रहरो निनादः।

अथाङ्गनासु चतसृषु संजातपरस्परालापस्वेकतमा ज्येष्ठा दयानाम्नी निजगाद – एकैकयास्मासु यथाक्रममात्मीयकथा निवेद्यतामिति। तासु कनिष्ठा मुग्धानाम्न्यभ्यधात्–भवतु, रम्यतमायां राकाशर्वर्यामस्यां परस्परवार्ताश्रवणेन प्रायोऽस्मदीयव्यथा शिथिलीभवेत् सर्वासामस्माकं किञ्चित्परिसान्त्वमपि भवितेति। तत्प्रारभ्यतां कनिष्ठया भवत्या स्वकथेत्यन्यार्थिर्युगपदभ्यर्थिता मुग्धा स्वचरिताख्यानमुपाक्रमत।

मुग्धा–गुर्जरदेशे क्वचित्पयोनिधेस्तटवर्तिनि दुमसनामनि ग्रामे मम पितृपादा न्यवसन्। ते च यथासंप्रदायं वंशपरम्परया प्रतीता अभूवन् यदुद्वाह

एव प्रयोजनं प्रमदाया जीवनस्येति। पठनलेखनाभ्यामन्तरोच्चशिक्षणं स्त्रीणां नावश्यकमिति तैर्दृढं प्रत्यपद्यत । अतोऽनाक्रान्तशैशवाया एव मे कुमारं कश्चिदनाथाश्रमा- दवृण्वंस्तातचरणा मत्पाणिग्रहणोद्देशात् षोडशवर्षदेशीयेनानेन सार्धं युवकेन यथाविधि विवाहवाङ्निश्चयं व्यधुश्च। दिवं गतायां मे मातरि क्वचित्क्व चित्कुमारकोऽयमस्मदुपवने निभृतं माममिलत्। अस्मद्भवनम भितस्तथाभूतमुद्यानं रमणीयं तथा च व्यलसन्निजसौन्दर्येण निर्जितनन्दनवनं यथा तापसस्य विषयव्यावृत्तस्यापि चित्तमभिनन्दयेत्। उद्यानेऽस्मिन् नानाविधाः शाखिनः कदलीनारिकेलाम्रदडिमीनारङ्गाञ्जीरपनसादयो व्यराजन्त। पुरातनवटपादपानामधो विश्रान्तिसुखोपभोगार्थं वेद्यः कल्पिता आसन्। सर्वतः कुसुमलतिकाः समुल्लसिता अनुत्तमामोदं प्रास्तारयंश्च।

अथैकदा सायमावामुपवनेऽस्मिन् पिककूजननिनादिते निभृतं परस्परसमागमामन्दानन्दसुखमुपभोक्तुं मिलितावास्व। धवलयति वसुधातलं धवलकरे निशाकरे करैः सुधाधवलैर्बकुलमल्लिकादिसुमनस्सु सौरभमातन्वत्सु मन्दं मन्दं वाति गन्धवाहे यामिन्यां सौन्दर्यशालिन्यां वृद्धिं गतः प्रमोद आवयोः परां कोटिमारुक्षत्। व्यस्मरं साकल्येनाहं पितुः शासनमुपदेशं धात्रीदेव्या निद्रितायाश्च। चुम्बनं प्रथमं वल्लभस्य मे राकायां मनोहारिण्यां तस्यां पुलकिताङ्गयष्टिं मां व्यामोहयत्तराम्। नैकवर्षेषुव्यतीतेष्वपि तत्स्मरणम-वर्णनीयभावं मय्युत्पाद्येदानीमपि रोमाञ्चयति मे शरीरम्।

समाप्ताध्ययनः कुमारोऽयमष्टादशवर्षदेशीयस्तातपादैर्मे पाश्चात्य-देशमुच्चशिक्षणोपलब्धये प्रेषितः। संपाद्य कार्यं निवर्तिष्ये स्वदेशमिति प्रतिश्रुत्य परदेशं प्रति स प्रतस्थे। अलेखीत् सोत्साहं तरुणोऽसौ प्रणयपत्राणि, परं न चिरादेव पत्रव्यवहाराद्व्यरंसीत्। अत्यन्तचिन्ताकुलस्तस्मै जनकदेवो मे तन्त्रीसंदेशान् प्रेषितवान्, परं नोपलभ्योत्तरं चिराय नैराश्यात्तत्पुनर्दर्शनाशामपि व्यजहात्। कियत्यसह्या व्यथा सोढा मया तस्मिन् समय इति वर्णयितुं न प्रभवेत् कोऽपि जनः। प्रियकरस्य पुनर्दशनसुखमाशु मे भवेदित्येकयैवाशया गृहीतान्तरात्मा

स्थितास्मि। तदारभ्य च गतभर्तृकेव जीवनयात्रा नीतासीन्मया परं स पुनर्मत्सविधं ध्रुवमायास्यतीति बद्धाशयावास्थिषि चिरात्। परं च दैवज्ञोऽयं बधिरमूकोऽपि तथ्यं बोधयिष्यति मामिति समुपस्थिताहमत्रेति।

समाप्तात्मकथाया युवत्याः स्वरध्वनिर्मन्दीभूय यवनपुरोहितस्य सायन्तनिकस्य भक्ताह्वानस्य प्रतिध्वनिपर्यवसानमिव सस्वने।

अथ तिसृष्वन्यतमाङ्गना कृशाङ्गी श्यामवर्णापि प्रियदर्शना सामिपिहितमन्दाक्ष्यमन्दशोकाकुलमन्दस्वरा मन्दानाम्नी न्यगदत्।

मन्दा – अयि सखि तव प्रेमवल्लरी सौन्दर्यामोदविषये लज्जितनन्दन–दिव्यलता स्वप्ने दृष्टेवादृश्यतां गता विना दंशं तद्गुल्मान्तर्गतशोकभुजङ्गिन्याः किल।

इत्युक्तवती मन्दाऽन्याभिस्तिसृभिर्नोदिता निजवार्तां निवेदयितुमारप्सीत्।

मन्दा – महानगर्यां मोहमय्यां चिरात्कृतवासाभ्यां पितृभ्यां साकं न्यवसम्। प्राक्तनरूढ्यनुसारं संवर्धिता ताभ्यां बाल्ये प्राथमिकपाठशालायां केवलं कृताध्ययनाऽऽसम्। उच्चशिक्षणविरोधी जनको मेऽब्रवीदनिष्टमेव स्त्रीणामत्यभ्यासाज्जायत इति। तादृशविचारपरिणामतो हन्ताज्ञप्रायाहमस्थाम्। निखिलाहनि बन्दीकृताया इव सदने कांश्चन बान्धवान् विना न कोऽपि मे दृष्टिगोचरोऽभूत्। अथ सामाजिकमण्डले कस्मिंश्चिन्ममाग्रजानां सह सुदर्शनेन केनचित्तरुणेन यदृच्छया परिचयोऽभूत्। कृतार्धमहीपर्यटनोऽयं युवा वर्णेन गौरो विशालनयनः शिष्टाचारेऽधिगतपाश्चात्यसंस्कारः स्वदेशाचारविद्वेषी विदेशानभिज्ञान्मे बन्धून् भृशमाचकर्ष। पाश्चात्यविविधदेशेषु वाणिज्यव्यवहारे समधिगतदीर्घानुभवेन मया वाणिज्यनियोगोऽन्विष्यत इति ममाग्र–जेभ्योऽकथयदसौ। तदा सहकारिणं व्यवहारदक्षं कञ्चिन्मार्गयन्तो जनकचरणा मे कुमारमिमं स्वकार्यालये द्रुतं न्ययुञ्जत। अथ गच्छति काले सम्प्राप्तपरिणयवयसि मयि योग्यवरान्वेषणपरावभूतां पितरौ परं मदीयकुरूपताकारणान्न कोऽपि मामुद्वोढुमुद्यतोऽभूत्। पर्यन्ते चिन्ताकुलो

मे जनिता सहकारिणोऽस्य सविधे मद्विवाहविषयमधिकृत्य व्याजहार। दैववशान्न चिरात्तरुणोऽयमदृष्टपूर्वां मां परिणेतुमुद्यत आसीत्। विस्मयस्य परां कोटिमारूढः प्राप्तस्वर्गद्वारमिवात्मानममन्यत जनको मे। हर्षोद्रेकपूरप्लवितः सुमहतीं संपत्तिभागिनीं मां विधाय युवानमेकमेव विधायकं व्यवास्थापयत्। अहं च नितान्तपरितुष्टा वशंवदा मदीयभाविपतिं तोषयितुमयतेतरां प्रत्यहम्।

अथ निवर्तिते विवाहे यथाविधि वरो मां वीक्ष्य प्रथमतः शयनागारे न बभौ भग्नाशो नातिबीभत्सितो वा। पादयोस्तस्य प्रणिपत्याहमनुरागनिर्झरेण प्लावितात्मा प्रमोदाश्रुपूरेण तावप्लावयम्। स च किमप्यनुक्त्वा समुत्थापयामास माम्, चिरं च निशायां तूष्णीमवास्थिष्वहि। अपाङ्गदृशा लावण्यजितमारं कुमारं दर्शं दर्शं पुलकिताङ्गयष्टिर्विस्मयसागरे न्यमज्जम्। क्व मदनभिज्ञता, क्व च तस्य वैचक्षण्यम्, क्व मत्कुरूपता, क्व च तस्य सुरूपातिशय इति ध्यायं ध्यायं गाढं तमालिङ्गितुमुत्कण्ठिताभवम्। परं मत्तः स जुगुप्सितः स्यादिति भिया कम्पमानाऽवतिष्ठे नतानना निःशब्दापि।

इत्थमुक्त्वा सहसेयं सगद्गदितस्वरा व्यरमत्। अथान्याभिर्युवतीभिः पुनः प्रणोदिता पुनरुपाक्रमत निवेदयितुमवशिष्टवृत्तान्तम्।

मन्दा–अथ मोहमय्यामेव पयोधेस्तटे दयितेन साकमत्यल्पनिलये न्यवसमहम्। प्रारम्भे भृशं सम्भाविताऽऽसं तेन। वसनाभरणा–ङ्गरागादिप्रसाधनसाधनानि परिधानोचितोपानत्पादुकाश्चाक्रीणत् स स्वयं मदर्थम्। अहं च सहर्षं सगौरवं सर्वमेव तेन क्रीतमुरर्यकरवम्। परदेशीयो–पानहोपरिचितपूर्वाया मे पादौ संपीडितौ भृशमास्ताम्, परं नाथं प्रीणयितुकामया सर्वा वेदना असह्यन्त मया। प्रत्यहं सामाजिकक्रीडामण्डलं स मामनैषीत्। विवाहात्पूर्वं गृहाद्बहिर्निर्गमनानभ्यासवशात् समाजव्यवहारान– भिज्ञामाधुनिकशिष्टाचारं मामशिक्षयत्। पाश्चात्यदेशानुकारिणोऽस्य साम्प्रतिकरीतिमतादिभिर्वशीकृताऽऽ–समचिरात्। अथ काले प्रसूताहं शिशुवर्धनादिकार्यबाहुल्याद्विहराय सह तेन बहिर्गमनं परित्यज्याखिलाहो मन्दिरेऽवास्थिषि। क्रमेण मदवस्थितिमपि गृहे पतिर्मे न केवलमवागणयत् किन्तु डिम्भमपि नौ कृत्स्नश उपैक्षत। दिवा

कार्यालये व्यापृतः सन्न न्यवर्ततालयमामध्यरात्रम्। कुतो विलम्बः क्रियते प्रतिदिनं गृहं प्रत्यागम इति क्वचित्पृष्टो मया तिरस्कारात्तूष्णीं स्थितवान्। अथैकदा सूर्यास्तमनात्प्रागेव गेहं प्रत्यागत्य ससंभ्रममभ्यधात्,–''इतः सत्वरमेव गन्तव्यं मया। मदीयपितृपादा हि मरणोन्मुखा' इति समुपलब्धवृत्तान्तस्तत्सविधं विना विलम्बं यास्यामि। पितृगेहं समापन्नमात्रस्त्वां पत्रं लेखिष्यामीति मुहुर्मुहुः प्रतिश्रुत्य सदनं व्यसृजत्प्राणेश्वरः। न कदापि पूर्वं निजपितरमधिकृत्याक्षरमपि प्रोक्तमासीत्तेन। अतः पितृहीनः स्यादेष इति तर्कितमद्यावधि मया। अथ प्रत्यहं तत्पत्रं प्रतीक्षमाणा सोत्कण्ठं सोत्साहमस्थामहम्। परं नासीन्नैराश्यं विना फलं प्रतीक्षाया मे। तस्य वृत्तविशेषोपलब्धये मम पितृचरणैर्यथाशक्ति प्रयेते किन्तु नैष्फल्यमेव प्रापुः प्रयत्नास्तेषाम्। व्यतीता इदानीं पञ्चषाः संवत्सरास्तस्य निर्गतस्य गेहात्। विना परेशं च न कोऽपि मनुजो जानाति क्व वर्ततेऽसौ किं संवृत्तं तस्य वेति। दैवेन च प्रेरिताहमत्र समायातास्मि दैवज्ञोऽत्र तथ्यं कथयेदिति। ओम्।

समीरविधूतसुरुनामकशाखिविशेषस्य मन्दरुतमिव मन्दायाः स्वरो मन्दमन्दो भूत्वा श्रवणपथस्यागोचरतां ययौ। क्षणमात्रं यावदत्र विलक्षणनिःशब्दता विराजते तावत्सर्वासु तासु मनोहारिणी मोहिनी नाम्नी तृतीयाङ्गना लावण्यतिरस्कृतानङ्गजाया सरोजनयना सुललिताङ्गयष्टिः सुवर्णवर्णा व्याहरत्। अयि युवामुभे अपि दैवेन प्रतारिते स्थः खलु मदीयविषये त्वहमेव दोषास्पदीभूताऽस्मि। कस्यचिच्छ्रेष्ठिनो महानगर्यां निवासिनः कुलेऽहं प्राप्तसम्भवाऽऽसम्। पितृभ्यामतीव लालितां प्राप्तयौवनां बहवो युवानो मामुद्वोढुमहमहमिकयाभ्यार्थयन्त मदीयजनकम्। परं धनिकस्यात्मजां धनिकायैव देयेति कृतनिश्चयौ नवयौवनचुम्बितमात्रां मां पितरौ मध्यवयस्केन केनचिद्धनाढ्येन मौक्तिकवणिजा सह पर्यणाययेताम्। वाणिज्यव्यवहाराय भर्ता मे मुहूर्मुहुर्भूतलेन्द्रभवनायितं रमणीयतमं प्यारिसनगरं गच्छति स्म। एकदा च सह तेन तन्नगरमद्भुतमगमम्। नगरीयममरावतीसौन्दर्याधरीकारिणी, वसुधातलनिखिलनगरीललामभूता, बुवादबुलोयन्–तुलरीनामक –

विविधरम्यतमोपवनजितनन्दनवन–रामणीयकशोभिता, कुजन्नानाविध–सुन्दराण्ड जविलसन्नीलोत्पलजलाशयसुषमानिधेर्देवता, आर्कदत्रियोम्फनामकविशालाष्टपथसंगमभूषिता, शान्झलीझ–नामकदेदीप्यमानविस्तीर्ण–राजमार्गविराजमाना, निखिलमहीतल–देशीयाश्रयभूता, नाट्यसंगीतनृत्यचित्रशिल्पादि–कलापधाम, असंख्यबुलेवाडाख्यमहावीथिजनगुञ्जिता, नोत्रदाममाद्लसन–साक्रेकराद्यद्वितीयदेवतालयपवित्रीकृता, शिल्पसौन्दर्य–समलंकृता, विपणीवातायनरचितरुचिराम्बररजतहैमपात्ररत्नखचितालङ्का– रादिभूषिता मां नितान्तं व्यमोहयत्। विद्यते कश्चिद् विख्यातो मार्गो नगर्यामस्यां रुद्लापेनामा बहूत्कृष्टाहारगृहसंपन्नः। एकस्मिन्नेतेषां प्रतिरात्रमाहारमुपभुज्य निवासं निवर्तमानयोरावयोः पतिर्मे द्रुतं मां विसृज्याप्रातर्बहिरेवास्त। दैनिकक्रमोऽयं विलक्षणः प्रावर्तत बहुतिथं कालम्। पर्यन्ते चिराचरितदुराचा–रमतर्कयमेतम्।

अथैकदा भोजनावसरे कश्चित्पत्रवाहकः पत्रमेकमानीय हस्ते मम पत्युः समर्पितवान्। पठित्वाशु तद् विवर्णवदनः सहसासनादुत्थाय प्रतीक्षस्व क्षणं तावच्छीघ्रमेव निवर्तिष्य इति प्रतिश्रुत्यैकाकिनीं मां तत्र विसृज्य ससंभ्रमं भोजनालयान्निर्ययौ। तमहमेकां होरां प्रतीक्षमाणा तत्रैवोपविष्टाऽऽसम्। न तु प्रत्यागमद्वञ्चकोऽयम्। अत्रान्तरे यथा यथा बुभुक्षवो जना अधिकाधिका आययुस्तथा तथा मत्पतेरनागमादुद्विग्नाऽभवम्। अस्मत्परिसेवितभोजनस्य क्रयमूल्यस्य प्रदित्सया धनकोशमात्मनो यावदपावृणोमि तावत्सेवकाय पारितोषिकप्रदानायापि पर्याप्तं धनं न विलोकयामीति नितान्तं लज्जिताभवम्। आसीद्दिष्ट्या भारतीयस्तरुणः कश्चिन्मत्समीपवर्तिभोजनफलकान्तरसविधं भुञ्जान उपविष्टः। सोऽयं समानदेशी प्रत्यहमदर्शि मयात्र। प्रसङ्गेऽस्मिन् विलोक्य संभ्रान्तां मां शीघ्रं स मदन्तिकमुपेत्य साहाय्यं चिकीर्षुर्ममानुज्ञामयाचत। उपकृतास्मि भवतेत्युक्तं मया नतशिरा भोजनमूल्यं प्रदाय गृहस्वामिने मन्निवासं सादरं मामनैषीत्। तदारभ्य दर्शनीयशरीराकृतिर्दृढाङ्गो गौरवर्णो युवासौ प्रतिदिनमादौ भोजनालये तदनु विहारभूमौ उपवने वा माममिलत्। ततश्च

परस्परसंगतिसुखमावामन्वभवाव। न चिराच्च परिचयश्चावयोवृद्धिं गतः। मिथः संभाषणसहवासविनोदक्रीडादिना प्रेमबंधो नौ सलीलमधिकाधिकगाढोऽभूत्। अथ मासान्तरे यद्यदासीन्मत्सविधे तत्सर्वमपि संगृह्य प्रणयिना सार्धमीजिप्तदेशं प्रति निभृतपलायनमकरवम्। प्राप्य तत्र कस्यांचित् समुद्र-तटवर्तिन्यामविख्यातग्रामटिकाया-मावाममन्दानन्दतुन्दिलौ मासषट्कं न्यवसाव। सोद्दीपं सोत्कटं स मां चकमेतराम्। अमितप्रेम वल्लभस्य मे क्वचिन्मयि भयमजीजनत्। तथा हि प्रेमशङ्का तस्य तत्प्रेमापेक्षयापि बलीयसी बभूव। प्रेमशङ्काशीलः स क्वचिदकारयदात्मानमेतावद् हास्यास्पदं यत्तमुपहासार्थमेव पीडयितुमसकृदक्रीडि मया। अथैकदाम्बुनिधेस्तीरे स्नानार्थं याते तस्मिन् सुहृदा सह केनचित्कैरोनामिकां राजधानीं प्रति यामीति संदेशं पत्रे लिखित्वा मन्दिरान्निरगमम्। सर्वमिदं विनोदार्थमेव चेष्टितमासीन्मया। परेद्युः प्रेमनिलयं नौ निवृत्ता तमनाथीभूतमवलोकयम्। अस्मदरबस्थानदेशीयसेवको मदतर्कितनिर्गमजन्यविप्रलम्भाभिभूतस्य वल्लभस्य मे नैराश्याग्निज्वालामज्जनं न्यवेदयत्। अथानुतापानलसंतप्तया मया सर्वतस्तमन्वेषयन्त्या न नैराश्यं विना फलमुपालभ्यत। पर्यन्ते गतिमन्यामपश्यन्ती स्वदेशं पुनरागमम्। मदागमात्प्रागेव हन्त पितरौ मेऽपरिमितसंपत्तिभागिनीं मां विधाय दिवं गतौ। परं धनसम्पन्नाया अपि मे सुखलेशमपि न विद्यते। विनानुरागं हि प्रणयिनः प्रमदाया जीवनं व्यर्थमेव खलु। सर्वतः शून्यतेव प्रतिभाति मे। वार्धक्यं चासन्नप्रायम्। इति कथयन्त्यास्तस्या वचो यत्स्फुटचरमासीत्तदिनानीं शिथिलीभूय शनैराकाशे विलीनतामयासीत्।

अथ ज्येष्ठा तासु योषित्सु दयानाम्नी व्याहरत – 'अयि, कथं वृद्धा स्यास्त्वम्। वयसाहं त्वत्तो ज्यायस्यपि प्राणनाथस्य मे संदर्शनपिपासया व्यथितास्मि।'' इत्याख्यायाङ्गणस्य समीपवर्तिनः स्तम्भस्य पृष्ठभागे विलीय पुनर्दृश्यतां यदागतासीत्तदा प्राप्तरूपान्तरा सा बभौ। तदीयसान्द्रमेचककेशकलापस्य स्थाने धूसरवर्णविरलविरलकेशतन्तव एवासञ्शिरसि तस्याः। तदाननाकारो निम्नभागनिमग्नः सद्यो विमृष्टकज्जलं

निस्तेजश्च तन्नेत्रयुगलम्। तदीयसहचर्यस्तस्यां बद्धदृष्ट्यः काष्ठविग्रहा इव चित्रलिखिता इव संवृत्ताः। क्षणोत्तरं निजकथानिवेदनमुपाक्रमत दया।

दया – कस्याश्चित् संगीतकुशलाया गणिकायाः कुले गृहीतजन्माहम्। गायनशिक्षकमेकं प्रवयसमन्तरा न केनापि पुरुषेण सह परिचयमनुमेने प्रसूर्मे। षोडशवर्षकल्पाऽभवं यदा तदा मदीयाम्बा बहुभिस्तरुणैर्धनाढ्यैः सार्धं कुभोगार्थं मत्समर्पणसन्धानं कर्तुं समुद्यताऽभवत् परं गणिकाजीवनमसहमाना नैसर्गिकबीभत्सया तन्मनोरथानुवर्तनात् पराङ्मुखी सनिश्चयमास्थाम्। तथापि मत्सङ्कल्पमविगणय्य केनचिद्धनिना क्षेत्रपतिना सार्धं मद्देहविक्रयव्यवहारः सम्पाद्यत तया। अथावयोः प्रथमसंगमात्प्रागेव मातुरालयान्निभृतं पलायिताऽहम्। ततश्च पुरात्पुरमटन्त्या दीनदीनाया मे वार्तां श्रुत्वा दयालुः कश्चित्पुरोहितो भृशमार्द्रीभूय स्वगृहे प्रदाय संश्रयं मे, क्रमेण मां पुत्रीकृतवान्। दशवर्षाणि महानुभावेन करुणानिधिना तेन स्वकन्यानिर्विशेषं पाल्यमाना लालिताऽध्यापिता कोङ्कणावनिमण्डले ग्रामटिकायां कस्याश्चित्पयोनिधेस्तटवर्तिनि गृहे सुखं न्यवसम्। मामन्तरा नासीदन्यः कोऽपि तमन्वासितुम्। यतः प्रसूतिसमये तद्गेहिनी विंशतिवर्षीया सार्भका कालवशं गतासीत्। न चान्यमुपायंसीद् भूसुरवरोऽयम्। अथ गच्छति काले समारूढनिर्भरयौवनां मां परिणाययितुं सुतरां प्रायतन्त पितृपादाः परमाकर्ण्य कर्णपरम्परया संभवं मे न कोऽपि तरुणो मत्पाणिग्रहणं प्रत्यपद्यत। विव्यथेतरां पूज्यतमजनकदेवस्य हृदयं दर्शं दर्शं मामनूढां प्रतिवर्षं वर्धमानां च वयसा। सर्वापेक्षया बलीयस्याशेति मद्विवाहविषये सप्रत्याशोऽवतस्थे स आजीवम्। अतिक्रान्तषड्विंशतिवर्षीयायां मयि पितृपादा दिवं गता विसृज्य मे सर्वमेव स्वार्जितं वित्तमालयं च। ततः परं विनष्टैकावलम्बनाहं चिरं पितृदेवानां मृत्युं विलपन्ती नामशेषाणां तेषां स्मृतिं पूजनीयां निरन्तरं दधाना हृदि तन्मन्दिरे न्यवसमेकाकिन्यहम्।

अथैकदा सायं समुद्रतटे शतपदीं कुर्वाणा गण्डशैले शायितं कश्चिन्मूर्च्छाभिभूतं युवानमद्राक्षमहम्। सोऽयं गौरवर्ण आयतललाटे दीर्घबाहुस्तरुणस्त्रिंशद्वर्षदेशीयो दृढकायो म्लानमुखो मन्दं

मन्दमश्वसीत्। यथा यथा तदीयगण्डस्थलमस्पृशं तथा तथाऽपूर्वविविधमिश्रभावनातरङ्गाभिभूताऽहम्। चिराद्विनष्टोपलब्धबालका प्रसूरिव परितोषस्य परां कोटिमरुक्षम्। यौवनचुम्बिताननमालोकयन्त्यास्तस्य मे वक्षःस्थलं सरभसमस्पन्दत। अथ स केषाञ्चित्मत्स्यजीविनां साहाय्येनानीयत मद्गेहम्। झञ्झावातेन प्रोच्चकैराक्षिप्तः कल्लोलमालिकाभिः प्रहतः पोतः क्वचित्सागरस्याम्भस्यमज्जत्। दैवगत्या तु तरुणोऽयं प्रभाते तीरभूमिमगमदिति तैर्निवेदिताऽऽसमहम्। द्वित्रघटिकोत्तरं लब्धसंज्ञस्य तस्य स्मितमविस्मरणीयं मे न्यवेदयत्प्रभूतं वस्तुजातम्। तदनु स कियतो दिवसान् सामिमूर्च्छादशायामवतस्थे। क्रमेण च प्रकृतिमापन्नोऽभाषताल्पमेव। साम्रेडमनुयुक्तोऽपि स्वपूर्ववृत्तान्तनिवेदनेन मत्कुतूहलं परिपूरयितुं स्मृतिभ्रंशान्न स प्राभवत्। अहं च तत्पारतन्त्र्यादधिकाधिकं तस्मिन् स्नेहबद्धाभवम्। कदाचित्संभ्रान्तमनाः प्रच्छन्नाधिं स्मृतिफलकात् परिमार्ष्टुं यतते स्म। अथ गच्छत्सु मासेषु मामवधातुमारप्सीदसौ। मदीयवसनाभरणनयनाञ्जनपाणिरूहरागादिकलापः क्रमेणतद्दृष्टिविषयोऽभूत्। ततस्तस्मिन् प्रेमाङ्कुरोदयलक्षणान्यपश्यम् तदवलोकनेन सुतरां मनसिजशरविद्धेव रोमाञ्चिताङ्गी स्वान्तर्भावविकारमगोपयमहं सप्रयत्नं ततः। सोपि पृथग्भावमाश्रित्य चिन्तापरो नित्यमास्त। अथैकदा सायमुद्याने विहरतोरावयोरवादीत्स युवा 'गन्तव्यमिदानीमितो मये'ति। वचस्तस्याकर्ण्य सुतरामवदीर्णहृदयेव विषण्णान्तरात्माऽवोचम्। क्व प्रस्थास्यते त्वयेति। यत्र कुत्रापि, 'अलं चिन्तया मदर्थमि'ति सविशिथिलवचनविन्यासं सशोकं च स प्रत्युवाच। इत्थं ब्रुवाणमेनं परिसान्त्वयितुमालिङ्गितुं च भृशमैच्छम् परं लज्जया तदप्रसादभिया चावरुद्धा क्षणं जोषं स्थित्वाऽऽप्राक्षमहम् किमितो निर्गन्तुमुद्यतोऽसि। अपि नास्ति क्षेमं तवात्रेति पृष्टः कृतज्ञतासूचकं हस्तनिक्षेपं कुर्वाणो निरुत्तरोऽवतस्थे स युवा। अपि स्ववृत्तिं पुनर्ग्रहीतुमिच्छसि प्रायः किं निकटबान्धवानाहोस्विदिददृक्षुरसीति मयानुयुक्तः प्रत्युत्तरमदत्त्वा सकन्धरकम्पं तूष्णीं स्थितवान्।

अत्रान्तरे धवलयति वसुधातलं धवलकरैर्धवलरश्मौ

धवलोज्ज्वलताप्लावितमुद्यानमिदम्। चरणपथेषूपलखण्डानि देदीप्यमानान्यग्न्युनुपलानीव विलक्षणभोवोत्सेकं मय्यजीवनन्। स एव क्षणो निश्चायको मज्जीवनस्येति प्रतीताभवम्। शनैः सभयं तत्करमादाय समार्दवं परामृशम्। निजपारतन्त्र्यमाविष्कुर्वन् सविश्वासं सविनयं चान्वमंसि तेन मद्धस्तग्रहणमात्मनः। क्वचिदुत्कण्ठिता क्वचिसंभ्रान्ता क्वचित्कम्पमाना क्वचित्संत्रस्ताहं कियन्ति क्षणानि जोषमास्थाम्। अब्रवीच्च स तावत् – 'अहो भवत्परमसौजन्यभारेणाभिभूतोऽस्मि किल। न तु भवत्याः प्रेमपात्रं भवितुमर्हति जनोऽयम्'। वचनं तन्निशम्य मदीयकरो निःसत्त्व इवागलत्तदीयहस्तात् अभाणि च कथमपि मया – ''भवन्तं परिषेवमानामन्दानन्दतुन्दिलास्मि। एकाकिन्येवास्मि मन्दिरेऽस्मिन्। सदैव भवतां पदाब्जयुगसमुपासितुमनुद्यतां जनोऽयम्। अस्ति पर्याप्तं धनं मत्सविधे उभयोरावयो पोषणाय।'' इत्युक्त्वा रुद्धकण्ठा व्यरमम्। स च मां सदयमालोकयन्मत्करं परामृशत् समार्दवम्। निजपूर्वकथास्मरणाग्निना तप्यमान इव स प्रत्यभात्। कयापि निर्दययाङ्गनया क्वचित्प्राग्वञ्चितः स्यादिति व्यतर्कि मया। परं नाक्षरेणपि तेन किञ्चिदपि व्यक्तीकृतम्। मौनमस्य तावन्मां किञ्चिदाश्वासयामास। चिरं च पतत्रिकुलकूजितं दविष्ठजलाशयनिर्झरध्वनिं श्रावं श्रावं चन्द्रिकाया रामणीयकेन प्रहृष्टान्तरङ्गैः कुन्दकुसुमैः सुवासिते लतामण्डपे जोषमवास्थितष्वह्यनिशीथम्।

परेद्युः प्रातस्तरां यदा जागरिताऽसं तदा हृदयवल्लभस्य शय्यागारं रिक्तमलोकि मया। दुग्धापूपादिकप्रातराशं परिवेषयितुं तस्मै गृहतलं यावदवारोहं तावन्मुखशालायां मध्यस्थफलकोपरि स्थापितं तद्धस्तलिखितं पत्रमेकमद्राक्षम्। सवेपथुरवसन्नगात्री सचकितं सभयं पत्रं तदपठं यथा – 'भवत्याः सौहार्दातिशयभारेण सुतरां निर्जितोऽस्मीति वचनं पुनरुक्तिरेव स्यात्खलु। अयोग्यस्तु जनोऽयं भवत्या विस्मरणीयः। सन्ति मदपेक्षया परश्शता जना भवत्सौजन्यार्हाः। अज्ञातक्षुद्रजनस्यास्यानेकनतिततयोऽङ्गीक्रियन्तामिति प्रार्थये! स्वस्ति भवत्यै।'इति स्वल्पसंदेशं हृदयेश्वरस्येमं पठित्वा निश्चला चिरमवतिष्ठेऽहम्। निखिलाहनि सर्वतस्तं गवेषयामासुर्ग्रामवासिनः परं हन्त न केनापि

विलोकितोऽसावाप्रभातादासूर्यास्तमनम्। ततश्च तन्त्रीद्वारा संदेशाः प्रेषिता मया समीपवर्तिनगररक्षाधिकारिभ्यस्तरुणस्योदन्तोपलब्धये। महार्हपारितोषिकप्रदाने शोधकाय प्रतिश्रुतेऽपि नैष्फल्यमन्तरेण नान्यत्फलमुपानतं गवेषणस्य। अहं च पातालतलमवतीर्णेव क्वागमं किमकरवं क्वास्वपं किं भुक्तं किं पीतं केन सेवितेति न किंचिदप्यज्ञासिषम्। अनेकापत्सहिष्णोर्मम कस्यापि जन्मान्तरोपात्तस्य कर्मणः फलेनानेन भाव्यम्। आदौ हि कामवराको मामपारानन्दपयोनिधौ विनिमज्ज्य ततो हृदयेश्वरसमागमसुखनगशिखरात्तद्विरहान्धकूपे न्यपातयत्।

इत्युक्त्वा दीना रुद्धकण्ठा शिथिलवचनविन्यासा विललाप सकरुणं दया। निशम्य च दयाया दयनीयकथां स्वस्वदयितार्थिन्योऽङ्गनास्तिस्रताः सदयाम्बुनयना बभूवुः। न चिरात्सर्वा इमाश्चतस्रः स्वस्वकल्पितस्थानं गन्तुं बकुलकुसुमगुच्छहस्ता देवमन्दिरं प्राविशन्। दैवज्ञस्यादेशानुरूपं स्वस्वहृदयेश्वरस्य नामाक्षररेखाः पुष्पैरालिख्य परेद्युस्तत्र पुनरागमननिश्चितास्ततो निर्ययुः। अथ प्रातस्तरां दैवज्ञेनालोकितेषु नामाक्षरकुसुमालेख्येषु तत्तस्थलं सममार्जि। तदन्वेकैनैव पद्येनालंकृतान्यासन् सर्वाणि स्थानानि। सन्देशोऽस्याभूद्यथा –

पतङ्गो रसमास्वाद्य चतुस्सुमनसां पृथक्।
मायाजाले गृहीतः सन् विमुक्तोऽपि तिरोभवत्।।

परेद्युर्भानूदये चतुष्टयं योषितां स्वस्वलेखस्थानं पुनरुपेत्य मूकबधिरस्य पद्यमयसंदेशमपठत्परं तद्गूढार्थमवगन्तुं नैकापि प्राभवत्। पश्चादैवज्ञो मायाजालसदृशं जीवनं संग्रथ्नन्त्येव प्राणिन इति हस्तचेष्टया योषिद्भ्यो निवेदयितुं प्रायतत। तास्तु सम्भ्रान्ता अधिकाधिकं भग्नमनोरथाश्च सुरागारान्निर्ययुः। परं नाज्ञासत ता यत्ताभिश्चतसृभिरप्यन्विष्यमाणो रमण एक एवासीद्युवा।



# ८. स्वाप्निकव्यामोहः

अकस्मादुत्थितो झञ्झावातः प्रचण्डः। मृदुलधवलवालुकापटलेनापह्नुतः सर्वतो दृष्टिगतप्रदेशः। प्रभञ्जनवात्योद्धताभिः रेणुकाभिः शुष्कशीर्णप्त्रनिकरैः पुनरेष द्वैगुण्यं प्राप्य कुटिलाकाशे धूसरपीतवर्णसमुच्चयः सरभसं विदूरमम्बरान्तः सहसावपत्याधश्च घूर्णयन्मानवाननविवराणि सर्वाणि पर्यपूरयन्नय नयुग्ममन्धीचकार, उच्छ्वासं च प्रत्यरुणत्। सायन्तनोऽन्धकारस्ततोऽपि द्विगुणितो मेघमालाभिः। अध्वनः सूक्ष्मरेखा भीषणनिर्जलमरुस्थल्यां सर्पन्ती शून्यशिखरश्रेणीतः शिखरश्रेणीम् अरण्यादरण्यानि प्रचण्डोष्णसिकतास्वकाण्डे खण्डिताभूत। नास्ति सरलो मार्गो नाविषमा भूमिर्वा नावलोक्यते पन्थाः कोऽपि वा? यस्मिन् विलक्षणमिदं प्रयाणं मयाङ्गीकृतमासीत्सोऽपि महासार्थः क्रमेण क्षीणक्षीणोऽभूत्। मामन्तरा च सार्थवाहेन सह सर्वेऽपि यात्रिका एकैकशस्तिरोऽभवन्। अतिश्रान्तः पिपासाकुलो दाशेर एवावशिष्टो मे सहायः। अत्यल्पान्नसामग्रीभाक् परिमितान्नं भोजं भोजं पर्यवसितनिखिलान्नांशः प्रतिघटिकं जलबिन्दुभिः स्वल्पैरात्मानं परितोषयन् न चिरात्क्षीणक्षीण–गात्रस्ततश्चावसन्नसत्त्वः समभवम्। असहायः सन् गात्रचालनाक्षमः क्रमेण जडतां नीतोऽहम्। रेणुरुषितरोमकुहरो झञ्झावाता स्फालितमृत्ताडितोऽसह्य वेदाना–मर्दितमस्तकः प्रमथनत्पिपासाकुलीभूतो मृतप्रायः स्थितवानहमेकाकी। परं दृढसङ्कल्पोऽहमभीष्टस्थलाभिगमनान्न व्यरमम्। अथानवरतं वालुकाघनराशिभिः प्रहतः प्रचण्डवातार्धशीर्णपटकुटीरे गतिमन्यामपश्यन्नशयिषि जोषमधोमुखः। तदारभ्य किमकरवं क्वासं किमुपनतं मे केनावलोकितः कियन्तं वा कालं नष्टसंज्ञः स्थितोऽहमिति न मनागपि किमपि मत्स्मृतिसरणिमायाति सम्प्रति। अद्वितीयः पटकुटीरे शयित एकविषयमात्रमधिकृत्य ध्यायं ध्यायं युगकल्पं कालमवास्थिषि।

अभूत्प्रस्तुतमुद्दिश्य किञ्चित्पुरातनगिरिकन्दरं साद्भुतेतिहाससमुच्चयम्। यच्चिरात्सैकतमरुप्रदेश

इयत्कष्टकरप्रवाससाहसाय मां व्यलोभयद्यच्चा-द्भुतेतिहासश्रवणरोमञ्चिताङ्गं मां तथेह समाह्वयद्यथा वार्धकागमाद्दीर्घप्रयाणस्य कष्टं सोढुमक्षमो भवेयमिति प्रागेव तदद्रष्टुं समुत्कण्ठोऽभवम्। परमिदानीं नैकतिथं कालं प्रचण्डोष्मदन्दह्यमानशरीरः पर्यटच्य विजने प्रदेशे स्वाशय- निष्पत्तेरसम्भवभावनया भग्नमनोरथो विमनस्कश्चाभवम्। तत्प्रथितगुहामाहात्म्यं यन्मया पुनः पुनः मनोदृष्टिविषयीकृतमासीदिदानीं काल्पनिकमेव मे प्रत्यभात्। मदभीष्टस्थानसन्दर्शनमसाध्यं मन्वानो निराशया विदीर्णहृदयोऽभवम्। दुरापाशयस्यास्य रहस्यं यन्मां पूर्वं बद्धाशं व्यधात् तदिदानीं प्रखरातपतप्तसिकतासु शयानं मां व्यडम्बयत्। पर्यन्ते मदीया क्लेशमयी विचारसरणिः सहसा खण्डितासीत्प्रशान्तता च सद्यो व्यराजत। सर्वतः शून्यशून्यता। निःशेषतः स्मृतिलोपोऽपि।

अथान्धीकुर्वतः सिकतासमुच्चयादाविरभूत्कश्चिद्विशीर्णगात्रः प्रवयाः प्राचीनतममनुजमेथूसेलाख्यसमवयस्क इव। हिमाचलहैमशिखरसहोदरसा-न्द्रजटादिमुनिवेषधाययं तापसोऽङ्गारप्रतिनयनो महातेजा मन्दपदेन मामुपेत्य गभीरदृशा निरीक्ष्य मां क्षणं तूर्ष्णीं स्थितवान्। विनष्टासोः पुनः पुनः समाप्त-जीवितस्य कस्यचिन् मनुष्यस्यालोकनेनेव क्वचिदप्रत्ययं क्वचिद्विस्मयं सूचयता विशालनयनयुग्मेन मामनिमिषं न्यरूपयत्। तस्य वलिनग्रीवाया अवलम्बमाना रुद्राक्षमालातिदीर्घोपयोगादिव जीर्णप्राया तत्तुहिनश्वेतकूर्चश्च प्रतिक्षणविगलत्कचतन्तुः कृशतां भेजे। तथापि प्राप्तेदृगवसादचिह्नस्य वलिनभूतस्यानने तस्य प्रत्यभादात्मसंयमप्रशान्तताभक्तिवैराग्यादीनां किमपि निदर्शनं तेजो विस्मयकारकम्। सूक्ष्मं निरीक्षमाणायां दृशि तस्य व्यराजत स्थैर्यानुकम्पौदार्यादिगुणरत्नसन्दोहः। अथ मुहूर्तं मरुस्थली विलक्षणं परिवर्तनमवाप। सर्वमप्यस्फुटं स्पर्शागोचरमिव ददृशे। श्वेतसिकतावर्तो मज्जीर्णकुटीरमास्फालयंस्तदसंख्यविवरान्तर्लब्धप्रवेशः सवेगं पर्यभ्राम्यदभितः। पुञ्जीभूतवालुकासन्दोहेन क्षणार्धमन्धीकृतः सम्भ्रान्तचेता निश्चलश्चा-हमवास्थिषि। पलितशिरा

गलितवयस्कोऽयमध्वगः पितृवनादुत्थित इव प्रत्यभान्मे। नेदिष्ठतामुपेतस्य तस्याकारः काल्पनिक इव बभौ। अविश्वासोत्क्षिप्तं स्मृतिलोपाभिभूतं प्रचण्डालापात्पिपासार्दितकण्ठं स्थविरस्यास्य पृच्छासूचकं निरीक्षणं मामसंवादिनमकरोत्। क्वाद्यतनसमये गन्तुमुद्यतोऽसीति पप्रच्छैष आयताक्षियुगलेन तूलशुभ्रमसृणभ्रूलताच्छादितेनाविरतं निरूपयन्माम्। सुवर्णमयीं नगरीमिति कथमपि समुदीरिते मया स नितम्बनिहितकरो लोलश्वेतकूर्चो दयार्द्रस्मितास्यः प्रवया इङ्गितेनैव सुवर्णनगरीं प्रति मत्कल्पितां यात्रामभ्यनन्दत्। ततश्च मधुरया गम्भीरया च गिरा प्रोक्तवान्। आः! सुवर्णपुरीम्? अद्भुतनगरीम्? यात्रेयं पवित्रीकरिष्यति तवात्मानम्। अप्यस्ति ते विश्वासोऽद्भुतचमत्कारे सुवर्णनगर्यास्तस्याः पवित्रगिरिकन्दरे च। इति स्वप्रतिपादनस्य साक्षात्कारादिव मां वशीकर्तुमिवाप्राक्षीत्सः। अपाठि मया तन्माहात्म्यस्य वर्णनमित्य-स्पष्टमवोचम्। अपि जातुचित्पृष्टस्त्वयात्मा किमिति सुवर्णपुरी जीवनाखिलसुखोपपन्ना स्यादिति, किमिति, सा व्याधिदुर्भिक्षविप्लवविमुक्तेति च पुनः स प्रवया मामन्वयुङ्क्त। शिरो यावद्विधूयते मया तावत् स्ववचसोच्चैरुच्चैः समुद्धत इव तत्स्मृतिसौन्दर्योर्ध्वपदमारूढ इव प्रत्यभात्। क्षणोत्तरं च सुवर्णपुरेति-हासमाख्यातुमुपाक्रमतातिगम्भीरया गिरा – ''अहो सुवर्णनगरी बभूवैकदा निरानन्दा मरुस्थलीव यावन्न पवित्रीकृतासीत्केनापि दिव्यशक्तिना सिद्धात्मना। सततमुदासीनानामपि प्रतनुप्रभावाणां सान्निध्यात् तपस्विनां दुःसहं दुःखमपनीयते, किमुतेदृशानां सन्तोषामृततृप्तानां सिद्धिमार्गोपदेष्टृणां महात्मनाम्। विपद्ग्रस्तामबलामभ्यरक्षदात्मानं निर्माष्टुं धरातलमागतः साक्षाद्विष्णुरिव स पुण्यात्मा।'' इत्युक्त्वा क्षणार्धं स व्यरमत्साकल्येन स्ववृत्तान्तं मच्चेतसि दृढं निवेशयितुमिव। ततोऽभ्यधात्पुनः। ''दिव्यपुरुषोऽयं नूनं सत्याय धर्माय च स्वप्राणानुपाहरत्। मद्वचसि श्रद्दधासि चेन्मामनुव्रज, अहं सुवर्णनगरीं दिव्यकन्दरं च नयेयं त्वाम्।'' इति साग्रहं निर्दिष्टवति तस्मिन् सद्यः समुत्थाय तमेतं मरुप्रदेशं प्रत्यन्वसरम्। देशं तं सम्प्राप्य, किञ्चित्पर्यटनं च कृत्वा पश्चिमोत्तरदिशि शुष्कविजनवनस्पतिविरहितस्य पर्वतस्याधो विशालां नगरीमेकामद्राक्षम्।

तन्मन्दिराणां सुवर्णशिखराण्यभ्रितप्रदोषे देदीप्यमानानि दूरात्सन्तप्तचामीकरमिव चकासिरे। आवयोः पुरो वर्त्मनोर्द्वयोरेकतरो दीर्घश्वेतरक्तः सुवर्णनगरीमध्यगच्छदन्यश्च विपिनगुल्मावृतः प्रति कन्दरम्। मदीयमार्गदर्शकोऽत्र क्षणं प्रतीक्षाग्रवर्तिनं विस्तीर्णप्रदेशं निरूपयन् गिरिगह्वरगामिनमध्वानमगृह्णात्। दुग्धधारयेव धवलितो ज्योत्स्नया पन्था दिवाकरप्रचण्डतापतप्तः शनैः शनैः शैत्यमभजत्। प्रदेशस्यास्य प्रशान्तता न चिरात्प्रवयसो मुखाच्छ्रोष्यमाणेतिहासात्सवैलक्षण्यं प्रागेवासूचयत्स्फुटम्। यथा यथा विशालशाखिसङ्कुलं दुस्तरारण्यमगाहिष्वहि तथा तथा स्वप्नदृष्टस्थलस्य प्रत्यक्षदर्शनेनेव विस्मयादिभावनाभिः काभिरभिभूतोऽहम्। अथानतिदूरं गत्वा कन्दरस्योपगूढं शिखरं गन्धसारसुरभितं समासादितमावाभ्याम्। पूण्यगर्भागारे प्रवेशात्प्राक् पादुके अपनय चेतसश्च सर्वप्राकृतविचारान् निष्कासयेति दक्षिणकरतर्जन्यङ्गुष्ठाभ्यां कूर्चं परामृशन् गम्भीरस्वरेण मामादिशत् तापसः। मयाप्यनुष्ठिता झटिति तदाज्ञा। अथ यावद् गुहायास्तमोमयीं शैवालाच्छादितां दृषत्सोपानपङ्क्तिमवारोहाव तावत्तस्याः समाधिसदृश्या निःशब्दतया निष्प्रभत्वेन गाम्भीर्येण च महाविस्मयाकुलोऽभवम्। अहो परःशतवर्षीयकालात्ययेनानवगाह्यं शाश्वतं च स्यात् पुनर्गर्भागारमेतदित्यतर्कि मया साश्चर्यम्। मदीयमार्गदर्शकस्य पदमनुचरन्महापरिणाहमणिशिलामयीं पुरुषस्य मूर्तिं शुभाशिषो वितरन्तीमिव सामिप्रकाशितमध्यभागे गुहाया अद्राक्षमहम्। प्रतिमाया अस्या विशालद्रुमकाण्डसदृशं बाहुयुगलप्रकाण्डं तत्पादयोर्निपातितां विपद्गतां शरणार्थिनीं काममपि वनितां परित्रातुमिवोन्नमितमासीत्। प्रतिकृतिमेतामालोक्य जीवनचक्रविमुक्तान्निर्वाणेप्सूननुयायिनः स्वश्रेष्ठतत्त्वचतुष्टयमुपदिशतः प्रथितयशसो भगवतो बुद्धस्याजण्टाख्यायां गुहायां स्थिता नैपुण्यातिशयेन घटिता प्रतिमा मत्स्मरणसरणीमारुक्षत्। अंशसन्मे कमपि बालभावमानन्दोल्लासिनी नयने मूर्तेस्तस्या उन्नतमंसयुगलं, सुदीर्घबाहू, दाक्षिण्यगाम्भीर्यबुद्धिमत्ताद्योतकं विशालं ललाटम्, शान्ततया स्नातं च शरीरम्। भ्रूमध्यस्थापिताचलदृष्टिः समाधिस्थितेव

परब्रह्मविचारवशा ददृशे प्रतिमा। तपः–सन्त्रासस्वार्थत्यागाद्युदात्तभावा भासन्ते स्म स्फुटं प्रतिमामुखे। अथ मूर्तेः पादयोः पुरो निपत्य कृताञ्जलिः साष्टाङ्गप्रणिपातं कुरु परस्तादेतदीयां पावनकथां ते निवेदयिष्य इत्यवोचत स्थविरोऽध्वगः। प्रतिध्वनद्गुहावितानाभोगे तस्य स्वरो दीर्घतामुपेतः प्रत्यभाद् वेतालध्वनिरिव भीषणः। तदादेशं निःशब्दमनुसरते पुनश्च समुत्थाय मे तमोमयं कोणमेकं प्रत्यात्मानमनुयातुं संज्ञां प्रददौ स यथा प्रभवेयं स्फुटतरं प्रतिमां तां पूज्यतमामालोकयितुम्। कन्दरान्तरच्चित्रविचित्रच्छायापटले स्थविराख्यायि–कास्य प्रत्यभादमानुष इव शरीराकारः। तदीयं पाण्डुराननं गम्भीरं च नयनयुगलं मामवर्णनीयमोहावस्थाकुलं वितेनाते। निरन्तरधृतप्राण आयुःशृङ्खलागाढसंलग्न इवादृश्यत प्रवयाः, अकथयदाख्यायिकां च तामद्भुतां यथा–

व्यतीतं खलु संवत्सराणां शतद्वयं मदागमस्य प्रथमतोऽत्र। नातिदूरवर्तिनी नगरीयं सर्वत्र दुर्भिक्षरोगादिकारणकलापान्मृत्युच्छायान्धकारावृतासीत्। चत्वारि वर्षाणि वर्षाभावान्मक्षिका इव प्रजा अवसेदुः प्रतिक्षणम्। नृपतिः करणसिंहो नगरीमिमां प्रशासत् स्वप्रजानिर्विशेषं प्रजां दुःखार्णवनिमग्नां दर्शं दर्शं शोकाग्निना दन्दह्यमानः प्रतिपत्तिमूढोऽवतस्थे। नगरीयं विध्वस्तप्राया यावत्तिष्ठति तावदस्मादेव गिरेरवारुक्षत्कोऽपि दिव्यपुरुषः विदितनगरविपज्जालो दीनदुःखदावदहनोद्विग्नस्तत्परिहारविचक्षणः प्रचण्डग्रीष्मतापे दिवा तमिस्रायां च कृतैर्जपतपोध्यानादिभिर्भगवद्भक्तिनिष्ठो दीर्घदीर्घं कालमयापयद् दुःखितप्रजायाश्च संरक्षणाय परमात्मानभ्यर्थयामास। ततः कतिपयमासाभ्यन्तरे वृष्टिमहौघेनादृष्टपूर्वेण प्लाविता नगरी प्रवाहैर्जनानां विस्मयातिशयोद्गारैश्च पर्यपूर्यत।''

अत्र प्रवयाः क्षणमात्रं वृत्तान्तस्य पौर्वापर्यस्मरणपराधीना इव किञ्चिद् व्यरमत्। ततश्च जोषं प्रतिमायाः पादयोरन्तिकनिहिताङ्गारपात्रे धूपगन्धसारखण्डानि जपन् किमपि युगपत्प्रक्षिप्य मन्दतरस्वरेण निवेदयितुं पुनरुपाक्रमत –

'धाराधिपः करणसिंहो गर्वोच्छूनाधरः श्रेष्ठपुरुषस्यास्याद्भुतकृतिमपूर्वामाकर्ण्य तमेतं स्वप्रासादमलङ्कर्तुं न्यमन्त्रयत। परं शुद्धात्मना तदनुग्रहे नोररीकृते भूपेन्द्रोऽभिमानी तमभिनन्दयितुं स्वयं तदन्तिकमुपेतवान्। अथ व्यतीतेषु बहुषु वत्सरेषु गृहीतमानवाकृतिर्दिव्यपुरुषोऽयं स्वधर्म- रक्षणसक्षणःसत्यतासमर्थनाय कदाचित्तिरोभविष्यति ध्रुवमिति जनतायां वार्ता प्रथितासीत्। प्रचण्डातपवर्षासु स्वरुचिदेहयष्टिमिन्द्रियसंयमेन क्लेशयमानस्यानवरतप्रजागरेण ज्ञानयोगाच्छ्रेष्ठपदमीप्सोस्तस्य दर्शनामृतेन स्वान्तरङ्गं सन्तोषयितुं तदन्तिकं बालस्त्रीपुरुषवृन्दं परःशतशः प्रतिदिनं समाययौ। यात्रिका नानाविधोपहारानानीय तदीयपादयोः समीपं निदधुः। आमाध्या- ह्नादामाध्याह्नं ध्यायतस्तस्य वृक्षशकुन्तकास्तदङ्कोपरि समुत्प्लुत्य खर्जुरिका आस्वादयन्, नीलवर्णकपोताश्च शालीतुण्डकणान्नुपाभुञ्जत। योगिरऽयं शताधिकवर्षदेशीयोऽपि नवयौवनभूषित इव बभौ। अहो प्रभावोऽयं खलु तस्यामरभावस्य। तस्याननस्य देदीप्यमानच्छविं रुचिरताजितमारां शरीराकृतिं तद्दिव्यप्रभावशंसि विशाललल्लाटं दर्शं दर्शं वृद्धा युवतयश्च क्षणमनिमेषा विस्मृतात्मदेहास्तस्थुस्ततश्चात्यन्तं तं चकमिरे। तास्वासीत्करणसिंहराजस्य दुहिता भारतीनाम्नी कुन्दकुड्मलसुकुमाराङ्गयष्टिः कमललोचना बालार्कपेलवकान्तिः पीयूषमधुरवचना विनयशीला च। ''निशम्यैतत्सविस्मयमपृच्छं किं नृपात्मजापि काषायाम्बरधारिणि तापसे बद्धानुरागा संवृत्ते'' ति। वृद्धो मामाश्वासयितुमुदतरत्, तथैव खलु। परं स्वप्रेम्णः सिद्धिरसाध्येति विजानत्यापि यौवनोपयुक्त- भोगान्निखिलानुत्सृज्य तं पुण्यात्मानं स्वहृदयेश्वरं दृढमाकलयन्ती तस्यैव ध्यानमनवरतमकरोत् सा। निराहारा निरानन्दा च राजकन्येयं क्रमेण हास्यवर्जिता बभूव। तदीयां शरीरयष्टिं प्रतिदिनमधिकाधिककृशां दर्शं दर्शं सन्त्रस्तौ तत्पितरौ तामपृष्टैव सह केनचिद्राजकुमारेण तस्या विवाहनिश्चयं कृतवन्तौ। विदित्वैतद् भारती नैराश्यभुजङ्गेन दष्टेव भयविह्वला मृतप्रायाऽवतस्थे। अथो गत्यन्तराभावादुद्वाहस्य पूर्वस्मिन् दिने तपस्विनीयमबला सूर्यास्तमनात्प्रागलक्षिता

दौवारिकैर्विचारभारविरुद्धगतिरपि हृदयेश्वरमुपतिष्ठासुः शङ्कातङ्कमपास्य पितुः प्रासादात्पलायनमकरोत्। हेमन्तक्षणिकसन्ध्यासामयिकनीललोहितच्छायाव्याप्ते प्रदोषे सुरभिसुमनःस्रजमादाय हस्ते शनैः शनैर्गिरिकन्दराभिमुखमेव कथमप्येकला प्रातिष्ठत। अत्र पर्वतश्रेणीतः पर्वतश्रेणीमटव्या अटवीमधित्यकातोऽधित्यकामन्तरा नासीत्कोऽपि पन्थाः सरलः। ततश्च श्वासनिरोधादतिसम्भ्रान्ता भ्रष्टाध्वा क्षणं यावन् निश्चला तिष्ठति तावदकस्मादतिभीषणा सकडकडाशब्दं सौदामिनी समदीप्यत। यावच्चास्ते चकिता कम्पमाना सखडखडाशब्दायमानदन्ततितिस्तावत् सतडतडाशब्दं गुटिकास्थूलैर्धाराबिन्दुभिर्वर्षितुमारब्ध मघवा। किंकर्तव्यतामूढात्र यावन्निराशयाश्रुपूर्णाक्षी पलायमाना सक्रन्दं ध्यायति तावद्दैवयोगात् कश्चित्मेषपालस्य बटुराजानुधूलिधूसरितचरणयुगलः पटच्चीवरार्धाच्छादितशरीरोऽपर्याप्ताशनपाण्डुवदनो दीर्घदण्डकृशकरस्तत्सविधे समाययौ। अयि किमिति रोदिषीति पृष्टा माणवकेन तेन भारती तस्मै स्वमभीष्टं न्यवेदयत्। एहि तावन्मया सहेति तदीयहस्तमादाय दारकस्तां शनैः शनैर्वनमार्गेण गिरिकन्दरमनैषीत्। राजकन्या चातिश्रान्ता स्विन्नाङ्गयष्टिर्विवर्णवदना दुःखदन्दह्यमानहृदया बटुना सार्धं समहायासं कतिपयघटिकाभिर्गिरिशिखरं प्राप्य गुहां पवित्रां प्रविश्य च पुण्यात्मानं सिद्धपुरुषं गाढध्याननिमग्नमालोकयत्। अथ बद्धाञ्जलिपुटा सकम्पं ससाध्वसं निरुच्छ्वासं च तमुपाययौ मन्दं मन्दं भारती। मेषपालस्य पुत्रस्तमोमयकोणे गह्वरस्यैकस्मिन् पातितोभयजानु समुपविश्य विलक्षणालोकमिमं व्यलोकयत। संक्षुब्धं मानसमात्मनो निग्रहीतुं बलवत्प्रयतमाना राजकन्या चिरादनभिनन्दितपानभोजना केतकीव पाण्डुरच्छविव्रीडाभरमन्थरा ग्रीवां नमयन्ती स्वपादाग्रमेवावलोकयन्ती क्षणं तावत्तूष्णीं तस्थौ। ततश्च सिद्धात्मानमभ्यार्थयत 'भगवन्, स्वीक्रियतां क्षुद्रजनोऽयमि' ति। स च तदाकर्ण्य नयनयुगलमीषदुन्मील्य मन्दहासवदनो जोषमास्त। पुनस्तया प्रार्थितो विधूय शिरो निरुत्तर एव स्थितवान्।' प्रसीद भगवन्। अङ्गीक्रियतां तव किङ्करीयम्, निरस्ता पुण्यपादाभ्यां चेद्विनङ्क्ष्यति सा खलु'। भगवत्पादपंकजयोः समर्पयतु सा जीवनमात्मीयमिति प्रह्वं पुनःपुनरभ्यथर्य जीवनाख्यानमात्मनः शुद्धात्मनस्तस्य

श्रुतिद्वन्द्वस्यातिथीकृतवती। तद्यथा। अहो भगवतः प्रथमदर्शनात्प्रभृत्येव भगवति बद्धादरा समभवम्। ततश्च भगवतो दिव्यप्रभावचमत्कारपरम्परया कुसुमशरशरजातविद्धचित्ता मनसिजावे- शजनितानवरताभिलाषा सलज्जं कथमपि कतिपयमासान् प्राणानधारयम्। प्रतिनक्तं स्वप्ने भगवत्पुण्यदर्शनब्रह्मानन्दं विन्दन्ती जाग्रती च भगवत्चित्रं मानसभित्तिकायामालिखन्ती कथमपि जीवनयात्रामयापयम्। नैराश्याच्च दिने दिने कृशीभूतां मां वीक्ष्य पितृचरणैः केनापि राजपुत्रेण सह मम विवाहे निश्चिते सति मर्मण्यभिहतेवोत्कीलितप्राणेव च समभवम्। पर्यन्ते गत्यन्तरमपश्यन्त्यनभीष्टोद्वाहादात्मानमभिरक्षितुं पितुर्गेहान्निभृतं पलायमाना भगवतश्चरणाब्जयोः समीपमागतवती परमसङ्कटादस्मात्परिरक्षेद्भगवानि'ति। एवं विलपन्त्या तयोपयाचितो भूपतेः कन्यया सिद्धात्मा प्रत्युवाच मृदुगिरा। 'वत्से विरक्तः प्रपञ्चासुखोपभोगाच्च विमुक्तोऽस्मि खलु। अतोऽन्विष्यतामन्यः कोऽप्यनरूपस्तरुण' इति। अनेन तस्य वचसा तद्वचनसुधारसपिपासुभ्यामिव कर्णाभ्यामेकतानताजडीकृताभ्यामिव नयनाभ्यां चित्रार्पितेवाभवद्भारती। किञ्चिद्भितेव किञ्चित्स्तब्धेव किञ्चित्खिन्नेव किञ्चित्क्षुब्धेव च सा समतिष्ठत। सस्वान पुण्यात्मनस्तस्य वाक् तमोमयकोणे विलीनस्य माणवकस्य श्रुतावमानुषीव। अथ यावद्भारती क्षणं स्तिमिता तावदश्रावि दूरात्सघडघडं प्रतिध्वनिर्घोटकखुराघातध्वनेर्ब- धिरीकृतक्रोशार्धान्तरालवर्तिप्राणिवर्गस्य प्रशान्तप्रदोषेऽस्मिन् क्रमेण ध्वनिरुच्चादुच्चतरः समजनि। मेषपालकस्यात्मजः शीघ्रमुत्थाय कन्दरायाः सोपानपङ्क्तिं जवेनारोहत्। कम्पमानहृदया तपस्विनी भारती तरलदृष्टिर्व्याधभयाभिभूतेव कुरङ्गी दुःखपारावारे मज्जतीवानन्यगतिका केशकलापमाकर्षन्ती निराशान्धकारे नष्टेव समाक्रोशन्मुक्तकण्ठम्। 'हा हा हतास्मि'ति। विजनस्थलेऽस्मिन्नागमनेनातिक्रान्तविनयं क्षुण्णस्वाभिमानमात्मानं मेने। ततश्च विवर्णवदना स्वेदबिंदुस्नातललाटा च राजपुत्री बाष्पौघनिग्रहे प्रयतमाना करौ सम्पुटीकृत्य भूतलमाविलं चकार नयनजलधारया। तुरङ्गखुरध्वनिः प्रतिक्षणमेघमानो गिरिकन्दरस्याधिकाधिकं नेदीयान् दम्भोलिवद्भीषणतां भेजे। ''भगवन्,

त्रायस्व मां त्रायस्वे' ति भारती महात्मनः पादारविन्दयोर्निपत्य विततबाहुपल्लवा क्वणद्दन्तततिर्म्लानपुष्पशिथिलितसुकुमाराङ्गयष्टिः सकरुणमभ्यार्थयत। तत्क्षणं माणवकः कन्दरसोपानमूर्ध्नो 'भूपतिर्भूपतिरि'– त्युच्चैराक्रोशन् सन्त्रासविवर्णास्यः सवेगमवरुह्य प्राविशत् गुहाम्। अभिरक्षणाय च गुप्तस्थानमन्विष्यन् एहि तत्राभ्यन्तरकोणेऽन्तर्हितौ भविष्याव' इति कम्पमानां राजकन्यामसूचयत्। विधूते शिरसि तया वेपमानयाऽऽपादमस्तकं बटुरन्धकारे परामृशंस्तमोवृतकोणे निरुच्छ्वासो विलीनो यावत्तिष्ठति तावद्भारती करपल्लवौ प्रसभं समपीडयन्नैराश्येन। 'हा हा ध्रुवमेव मे विनाशोऽद्य। ध्रुवमेव पतनम्। ध्रुवमेव च मे पशुमारं मारणम्। आशाङ्कुरप्रफुल्लितहृदया समायाताहमत्र सद्यस्तु वराकी मन्दभागा जन्मान्तरदुष्कृतफलभागिनी निराशापिशाचेन ग्रस्तेदानीम्'। इति विभावयन्ती तपस्विनी मुहुर्मुहुर्भगवांस्त्रायस्व मां त्रायस्वेति कातरेण कम्पमानेन च स्वरेण दृढतरबद्धाञ्जलिः कण्ठबाष्पकीलितवाक् कथं कथमप्यवादीत् तदीयकरुणोद्गारप्रवाहेणे पर्यपूर्यत गुहा। तदीयकर्णमर्मभेदि दीनप्रार्थनं पुण्यात्मनः श्रुतौ रक्षककरगृहीतस्य शिशोश्चाटुवचनमिव न्यपतन्न तु वामाया विमोहकानुनय इव''। अत्राख्यायकः क्षणमात्रं व्यरमत्। परमभक्त्या प्रतिमां विशालां निरीक्षमाणः स्मारं स्मारं पूर्वसंवृत्तं पुनर्मृदुस्वरेणाख्यातुमुपाक्रमत – ''अथोन्मीलितनेत्राब्जः शनैरासनादुत्थाय जोषं विततबाहुयुगल एधमानमहौदार्यो विलक्षणविचक्षणः सत्यधर्मरक्षणसक्षणोऽभिरिरक्षिषयेव नतशरीरः कन्यकाया ललाटमध्यमुपाजिघ्रदतिकारुण्यनिर्झरेण च तां क्षालितवान्। ब्रह्मानन्दसुधापूरप्लावितान्तरङ्गायास्तस्याः समुदचितरोमाञ्चायाः शङ्काकर्दमः सपदि विद्रावितस्तस्याश्च विततमस्तकाया निमीलितनयनायाः पुरतश्चादृष्टपूर्वप्रमोदः लुलोके। ततश्च किञ्चिद्दारुणरूपान्तराभिभूतेव क्षणं निश्चलाभूत् स्वान्तःप्रेरितेव कथमपि व्यजानात्सा यत्स्वहृदयेश्वरस्य किमप्यवर्णनीयं परिवर्तनं समवर्ततेति। सकातर्यं सकम्पं च यावदुन्नमयति सा शिरस्तावदतिदीनतामयं क्रन्दनं तन्मुखान्निःसरति स्म। अकाण्डे संप्राप्तरूपान्तरा पावितान्तरात्मा निमीलितलोचनयुगला

स्मितविकसितानना भगवद्ध्याननिमग्नेव समुपजातहर्षेव नतशीर्षा वाजिनां कण्टकझणत्कारमप्यश्रुण्वतीव समतिष्ठत। न चिराद्विविधाभरणप्रबलचाकचक्यः सुवर्णपटाम्बरधरो रोषघूर्णितलोचनो धाराधिपः करणसिंहः सानुगः कन्दरं सवेगं प्रविश्य, क्वास्ति निर्लज्जा कुलकलङ्किनी'ति। सगात्रविक्षेपं चुक्रोश कोपहलाहलवक्रीभूतास्यः। ततः पुरः समुपसृत्य तारस्वरेण पुनः सजगर्ज 'क्वास्ति दूषको दूरात्मे' ति। भारती यावच्छिलावन्मौनमालम्ब्य तिष्ठति तावद्भूपती रोषपावकातिरेकेण ज्वलन् बाहुमात्मनः स्फुरद्धातुकासिधरमुन्नयन् क्व क्व भारतीत्युदीर्योच्चैस्तां प्रत्यधावत्सरभसम्। अश्रावि च तत्क्षणं क्वचिद् ध्वनिः सहसा। 'प्रतीक्षस्व, प्रतीक्षस्व। पश्य पश्य पुर' इति। उदीरितमात्रे वचनेऽस्मिन् कन्दरगर्भतः क्षणिकदीप्तिर्घनान्धकारेऽत्र यावद् देदीप्यते तावत्काचिन्मणिशिलामयप्रतिमा भूपतेर्दृष्टिगोचरा भवति, पुण्यात्मा दिव्यपुरुषस्तिरोभूय तत्स्थाने विशालाऽचेतनापि परमसुखदायिनी कृत्रिमाकृतिर्ददृशे। योगसमाधिनिमग्नस्येव ध्यानपावितस्येव सत्याधिपत्यातिनिष्ठैधमानप्रभावस्येव सिद्धात्मनः केनापि सद्यः प्रतिकृतिरियं निपुणमालिखितास्ति। तमालोकमलौकिकमालोकमालोकं करणसिंहस्तेनादृष्टपूर्वचमत्कारेण चकितचकितो विस्फारितलोचनः सरोमोद्गमः क्षणं भूलग्न इव समतिष्ठत। तस्योज्वलद्रोषाग्निज्वाला झटिति निर्वापिताभूत्तावत्कुतूहलाङ्गारशेषमन्दार्चिरेवावशिष्टाऽऽसीत्। तदानन-निर्घृणरूपलेखा क्षणान्मृदुतामापेदे। प्रतिमायाः पुरः सम्पुटीकृतकरां जानुनतोपविष्टां बकुलपुष्पकोमलाङ्गयष्टिं स्वात्मजां साश्चर्यं निरीक्षमाणो महीपतिः क्षणं जोषं स्थितवान्। ततः पृष्ठतः परिवृत्य स्वानुजान् सम्बोध्योद्गिरद् धन्येयं किल मे नन्दिनी परमात्मनः प्रतिमायाः पुरो ध्यायतां भक्तानामग्रिमभूता पाविता च स्वनिष्ठया। जन्मान्तरे कृतावदातकर्मा दिव्यात्मनोऽनुग्रहभाजनभूतेह जन्मनि खलु।''

अत्र प्रवयाः कथको मन्दीभूतस्वरः स्मृतिनिष्प्रभोदरे सुचिरा-दवस्थितपुरातनधूलिधूसरपौर्वापर्यसंवृत्तजातसंस्कारोद्बोधपराधीन इव कथानकनिवेदनाद् व्यरमत्। ताम्रवर्णप्रदोषस्यैधमानान्धकारस्य पारं निरूपयन्निव क्षणं तूष्णीं स्थितवान्। ततश्च चिरान्मृतां स्वहृदयेश्वरीं सविषादं

चिन्तयन्निव मन्दं मन्दं निःशब्दं च समुत्थाय प्रतिमां प्रति समुपेत्य तत्पुरः साष्टाङ्गनमस्कृति सप्रश्रयं न्यपतत्।

अथ जागरितोऽहम्। उन्मीलितनयनेऽभितो दृष्टिं क्षिपन् विजनपर्वतसमीपवर्तिनो गृहस्य कस्यचिच्छयनागारे शिबिरोचित-खट्वामधिशयानमात्मानमपश्यम्। कश्चित्स्थविरभिषङ् मदीयनाडीं परीक्षमाणो मदन्तिकं नतशरीरस्तस्थौ। अहं तु मासद्वयात्प्राक् शयनं परित्यक्तुं सैन्यदलं च पुनः संगन्तुं नाशकम्।



## ९. नजमदिलेल:

कश्मीरालङ्कारभूतां रत्नखचितमेखलामिव भुवो, मरकतोपत्यकेति रसिकैरन्वर्थं वर्णितरमणीयतां सुवर्णमयीं श्रीनगरीमध्यवसं सोदरद्वितीयोऽहमेकदा मित्रस्यावयोः कासिमनाम्नो नौकागृहम् । अथैकदा स निखिलजगत्प्रसिद्धतहीरकस्वामिनं कंचिदरबदेशीयमहानुभावमधिकृत्य विलक्षणं कथानकमेकं कथयामास। श्रीनगरस्य गग्रिलबलाख्योद्देशस्य विवक्तकोणे एकस्मिन्संस्थापितं आसीदयं महाविलासपूर्णो नौकालयः । अथास्यां शारदशर्वर्यां शर्वरीसार्वभौमकिरणसमुल्लसितायां मोगलविशेषोपस्करोत्पादितस्वादुभोजनोत्तरं काफीति पानीयविशेषं पातुं नौकाग्रं समारुह्य मञ्चिकासु सुखमुपविष्टास्त्रयो वयम्। कालाद्बहुतिथात्-प्राक् पाठशालायामभीक्ष्णं कांश्चिद्वदून्मोहमन्त्रमोहितान्स्वेच्छानुकूलमचीकरत्कासीमः एकदानुपस्थितमपि कञ्चिन्माणवकमात्मने पत्रमलेखयत्सः। अयं बटुः कासिममद्वेडिति विदिततमासीत्सर्वेषामतो भृशं विस्मयं प्रापुः सर्वे । परवशीकरणस्वाभीष्टसाधन आत्मनः प्रभावस्य प्रत्ययं स्वसहचराणां चित्तेषु दृढं स्थापितवान् कासिमः । वादविवादप्रायोऽयं सिद्धान्तमप्यप्रमाणीकृत्य बहुधाऽकाण्डेऽस्मान् पर्यन्ते व्यस्मापयत । तथापि कथानिवेदनक्रमे श्रोतुन्सन्देहसम्भ्रान्तानालोकयन् मोमुद्यते स्म सः । आङ्ग्लदेशे कस्याश्चित्पाठशालायामावयोः स कासिमेन परिचयोऽभूत् । आध्यात्मिक- पारलौकिकाद्याभासमयकल्पनासु विश्वस्तमभून्मित्रमावयोः। विविध- भावनामयचित्तोऽयं क्वचिदिति मुखरः क्वचित्सनिर्बन्धं मौनी स्थितवान् । विचित्रप्रकृतेर्विचक्षणस्यास्येतरकुमारेभ्यो वैशिष्ट्यं किमप्यासीत् । यत्र यत्र च पर्याटयत्तत्र तत्र रत्नसञ्चयमकार्षीत् सः । दिष्ट्या समृद्धकुलोद्भवस्यास्य वित्तस्य गणना नासीत् ।

अथाद्य विभावर्याः सौन्दर्यातिशयमोहिताः परःशतपुण्डरीकपरिलसितं दलाख्यसरोवरं हिमाच्छादितहिमांशुचुम्बिहिमाचल शिखराणि च

निरीक्षमाणा ग्रीष्मे सुखावहानां वातानां स्पर्शसुखमनुभवन्तः पयःफेनजित्वरया ज्योत्स्नया द्विगुणितोत्साहाः प्रस्फुरच्चन्द्रकलोत्कण्ठितभ्रमद्भ्रमरझङ्कारस्वरं श्रुण्वन्तश्च वयं कश्चित्समयं सुखमयापयामास । अत्रान्तरे सुवर्णमयं तमाखुपात्रं कासिमः समुद्दीप्य सगडगडशब्दं तमाखुधूमं मुखान्मेघमालामिवोदगिरत् । क्वचित्क्वचिन्ममानुजेनापि तस्मात्तमाखुपात्राद्धूम्रपानसुखं निरवेशि । मया तु तमाखुभोगानाभिज्ञेनैव भाव्यम् । पुरतः पुरातनाचारामूल्यरत्नमन्त्रित-कवचपिशाचविमोहनविद्यादिविषयजातमधिकृत्य संलापमकुर्म वयम् । समयेऽस्मिन् कासिमोऽत्युल्लसितचित्तः पुरोनिहिताक्षोडह्रस्वफलकमवलम्ब्य चञ्चच्चन्द्रचमत्कारेण द्विगुणितोत्साह इव वक्तुमारभत ।

'अहो ! अत्यल्पो जनोऽद्य विश्वसिति खलु विमोहनविद्यायाम् । परमतिविलक्षणोऽनुभवो मया प्राप्तः किलैकदा' इति जगाद कासिमः प्रोच्चैरसकृत् प्रहसन् । तदीयो विलक्षणहासः कुतूहलमावयोः सपदि समुपादयत् ।

'न विद्यते जगति विमोहनविद्या कापि । क्वचिद् भावनायाः क्वचित्संत्रासादपि संभ्रान्तान् मूढमतीन् विमोहनविद्याकोविदमात्मानं मन्यमानश्छाद्मिको विमोहयति इति प्रत्यवादीन्ममानुजः सनिर्बन्धः वादविवाद- प्रोत्साहित इव ।

'तथापि कश्चिदूर्जस्विनं सुघटितशरीरं पुरुषं मदिच्छावशीभूत-मिवालोकितवानहमेकदा' इत्युक्त्वा सहसा व्यरमत्कासिमः ।

'अपि त्वया वस्तुतः साक्षीकृतश्चित्तविकारोऽस्य' इत्यविश्वासशं-सिस्वरेणापृच्छम् ।

कासिमस्तु प्रत्युत्तरमदत्वा समाधिस्थित इव क्षणं तूष्णीमास्त । तदीयतमाखुपात्रान्तर्गतमुदकमेवानवरतं सगडगडाशब्दमकार्षीत् । कासिमो विदूरस्थहिमावृतहरिपर्वतोपरि बद्धदृष्टिर्धूमपटलाच्छादिताननः सविचारः स्थितवान् ।

'अपि त्वया विमोहनविद्यामोहितो जनोऽयं प्रत्यक्षीकृतः' इति

पुनरनुयुक्तो मया कासिमोऽवदत् ।

'अथ किम् ! वस्तुतः साक्षीकृतो मया पुरुषस्यैकस्य मोहविकारः इति किञ्चित्स्खलितवाचा स्वप्नादुद्बोबिधत इव न्यगदत्कासिमः । ततश्च कञ्चुककोशे हस्तवस्त्रमादातुं हस्तं न्यवेशयत् सः । विलक्षणकथाख्यानस्य प्रस्तावनासूचकमस्य चेष्टितमिदमित्यजानीव खलु ।

'मदीयकथामाकर्ण्य किं वक्ष्यते युवाभ्यामिति पूर्वमेव वेद्मि' इति सगूढार्थमब्रवीत्कासिमः ।

'किमुद्दिश्यास्ति ते निवेदनम्' इति पृष्टवानहम् । कासिमस्तु सचिन्तं तमाखुपात्रं सवेगमाध्मातुमुपाक्रमत ।

'निवेद्यतां कथा नोचेत्तव सिद्धान्ते न मनागपि विश्वसिष्यावः' इति ममानुजेनाभियुक्त इव कासिमः पुनः सशङ्कमब्रवीत् ।

'कथावसाने किं वक्ष्यथो युवामिति विदितमेव मे । परमनुभस्त्वयमपूर्वः खलु । अन्यः कोऽपि जनो व्यवहारज्ञोऽपि धीरोऽपि तादृशानुभवेन मुहूर्तमात्रमपि सन्त्रासितोऽभिविष्यत्' इत्युदीर्य रजनीकरनिकरेण देदीप्यमानानि हीरकखण्डनीव दलाख्यसरसो जलानि निपुणं निरीक्षमाणः कथां कथयितुमारब्धवान् ।

'अतिरमणीयरजन्यामस्यां नन्दनवनसदृशे स्थलेऽस्मिन् विचित्रकथाख्यानं नानुरूपं किल । सुराङ्गनानामितिहासाख्यानं शोभते तावत् । कथानकमिदं कुमारक्रीडामण्डलस्य श्रवणानुरूपं खलु । तथापि युवयोः कुतूहलपूर्त्यै कथयिष्य एव ।'

'श्रुतो भवद्भ्यां नजमदिलेलनाम्नो प्रथितकीर्तेर्नक्तनक्षत्रमित्यन्वर्थ-नाम्नोऽद्भुतहीरकस्य सौन्दर्यातिशयः। अथ वत्सरदशकात्प्राक् सिरियाबाबिलोनफारसीस्थानचिनादिदेशेषु कृतपर्यटनेन मोहमयीमासादितवता मया हीरकमुकूटमिदमालोकि ।

अत्राख्यानकोऽकाण्डे लघुफलकस्थं ताम्बूलखण्डनिकरं हस्तपल्लवेनामार्क्षीत । ततश्च विदूरोद्देशबद्धदृष्टिर्गाढचिन्तनसन्तानमग्न इव तूष्णीमस्थात् । 'अप्येष विचिन्तयति कञ्चिदभिजातं चीनदेशीयं मन्दारिण

इति तद्देशीयैर्व्यपदिष्टमि' इत्याकलितं मया । प्राहुर्जना हि यच्चीनदेशीयस्य तस्य महानुभावस्य महार्हमरकतविडम्बीनि हरितवर्णानि रत्नानि कासिमेन तस्माद्विमोहनाविधिना मोहितादात्मसात्कृतान्यासन्निति । अतः कुतूहलपरवशो रुद्धनिश्वासश्चीनाभिजातस्य वार्ता श्रोतुकामः सानुज औसुक्यभागवस्थितोऽहम् । क्षणोत्तरं कासिमोऽपि निवेदितुमाक्रमत ।

''अथ दिक्पर्यटनोत्तरं प्रत्यागतेन मया पितृव्यमुखात् सकलभुवनविख्यातस्य नजमदिलेलनाम्नो हीरकस्य वृत्तं समाकर्णि । मणिश्रेष्ठस्य वर्णनं श्रावं श्रावं सञ्जातकुतूहलोऽहं तममूल्यमणिं हस्तगतं कृतवतोऽरबदेशीयस्य शेखमहानुभावस्य निवासं मां प्रापयेति पितृव्यमभ्यर्थये। परं बगदादनगरं तस्यां रात्रौ प्रस्थास्यमानोऽसौ मुस्ताफाख्यो ममाभ्यर्थनां सफलीकर्तुं नापरयत् । तथापि तेन शेख महोदयस्य वासस्थाने निर्दिष्टे स्वयमेव तत्सन्दर्शनाय तस्मिन्नेव दिने गतवानहम् । अरबदेशीयोऽयमब्दुलरहमानाभिधेयः पयोधेस्तटे मोहमय्युपकण्ठे बर्लीनामोद्देशे विविक्तं किञ्चिन्निरानन्दमपि सुन्दरं मन्दिरमध्युवास । तास्मिन्वासरे नागपञ्चमीमहोत्सवनिमित्तेन शेखमहोदय-स्यालयस्य पृष्टभागे समुद्रोपकण्ठस्थे महाञ्जनसमूहः क्षीरसंभृतपात्रहस्तो नागसन्तर्पणविधये सममीमिलत् । स्त्रीपुरुषबालानां प्रमुदितानां कलकलध्वनिना प्रत्यध्वनद्विशालं सिकतामयं जलधेस्तटम् । पटहगोमुखादीनां निनादः कर्कशोऽनवरतमश्रावि । अन्तरान्तरा महीसुराणां मन्त्रपठनमप्यश्रूयत । अथ प्रासादस्य प्रवेशमहाद्वारं प्रविष्टो गृहस्वामिनं निजाऽबिसिनीदेशजेन सेवकेनानुगम्यमानं नानासुगन्धसुमसमुल्लसितपुष्पवाटिकायां गतागतं कुर्वन्तमद्राक्षम् । अभूत्सन्नद्धगात्र उन्नतांसो दीर्घबाहुः सान्द्रश्मश्रुर्दाक्षिण्यदर्शि विशाललाटोऽङ्गारप्रतिमनयनो महानुभावोऽयम् ।''

अत्र कासिमस्तमाखुपात्रं निर्वापितं पुनरुद्दीपयितुं क्षणं व्यरमत् । ततश्च धूमपटलं मुखादुद्गिरन्नयनयुगलं च मुहूर्तं निमील्य भूयो वक्तुमुपाक्रमत ।

''शेख अब्दुलरहमानः स्वदेशाचारानुरूपेण परमातिथ्येन

चिरपरिचितामिव मां भूरि संभाव्य मद्दर्शनेन प्रमुदितान्तरङ्गमिवात्मानं प्रादर्शयत् । मत्पितृव्यस्य मुखेन समादृष्टपूर्वस्यापि सम्बन्धि वृत्तं विदितमासीत्तस्येति स्फुटमभूत् । नमस्ततिप्रस्तावनाद्युत्तरमुद्यानस्थमतिरम्यं पुष्पकुजं प्रति मां महाभागोऽयमनयत् । तदीयसेवको कोकनदच्छवितुरुष्कोष्णीषशीर्षः शोणश्मश्रुर्निजस्वामिनो निकटेऽन्वगात् ।

'अथ गृहस्वामिना सह चलतो मे पादः समुज्ज्वलमेकं दुग्धपूरितं पित्तलपात्रं मार्गवृक्षपङ्क्तिस्थस्य प्राचीनस्य समीपे निहितमस्प्राक्षीत् । किमेतदिति क्षमायाचनाशंसिकरनिक्षेपमनुयुक्तो मया प्रत्युवाच गृहपतिः। नागपञ्चमी–महोत्सवनिमित्तेनोपहारीकृतमेतदस्मदीयमालाकारेण । मङ्गल–दिनेऽस्मिन्विपन्निवारणाय प्रायेण हिन्दुजनो नागान् गृहरक्षकान्मन्वानः क्षीरोपहारेण प्रसादयती' ति शान्तवृत्तिना शेखमहोदयेन गम्भीरस्वरेण निवेदितम्' पुरातनाचारे बद्धादरोऽप्यहं किञ्चित्सम्भ्रान्त इवास्मैषि । अथासनमधिष्ठिते मयि मन्दं मन्दमान्दोल्यमानस्तु व्रततिषु संवादमावयोः शुश्रुषुरिव मौनमाकलयत्सु परागकुलेषु जातिपुष्पविकासहर्षप्रकाशमुखरेषु द्विरेफेषु दक्षिणकरपल्लवेन श्मश्रुं परामृशन् साम्रेडं सोत्साहञ्चं 'अपि भवद्भिर्महार्हमणीनां सम्प्रति नूतनगवेषणमकारी' ति मृदुवचसोर्दुभाषया गृहपतिर्मामपृच्छत् । इत्यनुयुक्तो मत्कोशगतं हरिन्मणिजातं तस्मै सगौरवं प्रादर्शयम् । स च रत्ननिकरमिमं सूक्ष्मं निरीक्ष्य तद्गुणाभिज्ञो मां नितरामभ्यनन्दत् । न चिरादातिथ्यनियमाचारमनुसरन् शिराझदेशोत्पादितं स्वादु शर्बतं नाम पेयविशेषं समानीय प्रादादावाभ्यां सेवकः कुञ्जस्यैकस्यकोणे च मां ससंशयं निरीक्षमाणो जोषं स्थितवान् । 'अपि श्रीमद्भिरालोकि विडाम्बितनक्षत्रपतिप्रभोन्वर्थनामा मदीयहीरकम–णिर्नजमदिलेलाभिधेयः' इत्यनुयुक्तवान्मां गृहस्वामी मयि च कम्पितशिरसि सेवकमात्मनस्तमानेतुमिङ्गितेनैव निरदिशत् । कतिपयक्षणोत्तरं कौषेयमञ्जूषाकरः सेवकः पुष्पकुञ्जं परावृत्य स्वामिनः पुरस्तात्तां निधाय क्षणं तत्रैव विलम्ब्यानिच्छयेव ततोऽपासरत् । पेटिकामेनामुद्घाट्य शेखमहोदयेन शतत्रयमाषतोलस्य देदीप्यमानस्य

हीरकमणेर्दर्शनेन ममाक्षियुगलं साफल्यं नीतम्। स्वप्रभाधर्षितसकलजगन्मणिजातः स्वदीप्त्याऽऽकर्षन्निव विश्वेषां मनसि सपद्येव मां हीरकतल्लजोऽयं व्यमोहयत् । अवलोकितमात्रमेतद्वितीयामूल्योपलं स्वकीयं कर्तुमुत्कण्ठाधीनोऽभवम् । 'एवं क्रेतुमिच्छामि श्रीमतः' इति सादरमाभाषितो मया 'महीपतेर्धनप्राप्त्या अपि नैतं विक्रेष्ये' इति प्रोच्य स तस्यामूल्योपलस्य वृत्तं मे न्यवेदयद्यथा । रत्नस्यास्योदारगाथा परम्परया विमोहिता मोगलधराधिपा अकबरजहांगिरादय इत्यैतिहासिकाः प्राहुः किल । मोगलसार्वभौमस्य राज्ञः प्राणनिर्विशेषप्रियायाः सुराङ्गनाजित्वराया नूरजहानाख्यायाः प्रथितलावण्यकीर्तेः केशकलापं भूषयामासायमिति । अथ रत्नमिदं निपुणं निरूपयन्पुरातनमोगलसाम्राज्येतिहासः साकल्येन तस्य देदीप्यमानरश्मिषु प्रतिबिम्बित इवेत्याकलयम् । क्षणं च विमोहार्णवे निमग्न इव स्थितोऽहम् । शेखमहोदयस्य तु सेवको मां सशंङ्कं सरोषं च निरीक्षमाण आस्त ।

''अथ मार्तण्डमण्डले निम्लोचति नेदिष्ठमस्जिदतो यवनपुरोहितस्य भक्तानां प्रथमाह्वाने समाकर्णितमात्रे सेवकोऽयं मन्दिरादिराणदेशनिर्मितं प्रार्थनाकौशेयास्तरणमानीय भूतले व्यसृणोत् सन्ध्योपासनासमयेऽयमित्यहमपि सद्यः समुदतिष्ठं निर्यातुम् । आप्रवेशद्वारं शेखमहोदयो मया सहाचलत् । ततश्च बकुलतरोरेकस्याधः क्षणमात्रमावां स्थितवन्तौ । चञ्चलनेत्रमबिसिनदेशीयं तस्य भृत्यमवलोकयितुं परितो दृष्टिमक्षिपं परं न क्वापि स व्यलोकि । निर्गमात्पूर्वं क्षणं शेखमहोदयं दीर्घं निरीक्ष्य पुनर्दर्शनलाभो भवतो मे न चिरात् भूयादित्याशां व्यक्तीकृत्य तदनुमोदनपुरःसरं प्रत्युत्तरं मुहूर्तं प्रतीक्षमाणे मयि स्मिताननः स न्यगदत् 'खुदा आफिस' इति । निर्गमिष्यता मया नयनयोस्तस्य कापि ग्लानिः समलक्ष्यत ।

''अथ नजमदिलेलहीरकोपलमणेरनवरतचिन्तनैकतानमानसोऽहं केनापि सन्धानेन तमात्मसात्कर्तुं निरचिनवम् । चिरं तत्स्वामिनं गाढं व्यचिन्तयम् । न जाने किमकरोन्महानुभावोऽयं तदा परं कथमपि गतदिन इवाद्यापि तत्सानिध्यं व्यभावयम् । रात्रौ च स्वप्ने निजहीरकं मे

ससौहार्दमुपनयन्तं तमपश्यम्। यावदुत्थाय तममूल्यं मणिमादातुं प्रसारयामि करद्वयं तावत्तिरोहितोऽभूदरबदेशीयमहाभागोऽयम् । प्रबुद्धश्चाहं भग्नमनोरथोऽपि रत्नामिदं कथमपि दैवयोगान्मद्धस्तगतं भवितैवेत्यकलयम् ।''

अथास्मत्सुहृन्मुहूर्तमत्र विरम्याकाण्डेऽवरुह्य च नौकागृहस्याधस्तलं सपदि कौशेयमञ्जूषाकरो न्यवर्तत। अथ तावत्पेटिकामुद्घाट्य बृहदाकारमत्युज्ज्वलं हीरकं नौ प्रादर्शयत् । किमेतत् ? किमेतत् ? नजमदिलेलहीरकमणिः किम् इति ससम्भ्रमं साश्चर्यं चाहमपृच्छम् । 'तस्य प्रतिकृतिरेवेयम् । इयं साधु साधिताऽनुकृतिस्तस्य हीरकस्येति प्रोच्य निश्चिन्तं च प्रहस्य कासिमस्तद्वृत्तं निवेदयितुमुपाक्रमत यथा–

''निखिलनिशायां च तस्यामुन्निद्रनेत्रेण यापितायां मया शेखमहोदयस्याकाण्डे संवृत्तं निधनमतिशोचनीयं तदीयहीरकस्य च गूढतिरोधानं वृत्तपत्रद्वाराऽबोधि प्रातस्तराम् ।''

'कथं कथम्'इति ममानुजः कासिमस्य शुष्कस्वरेण विस्मितो समुदैरयत् । अथ कथं त्वया प्रतिकृतिरियमधिगता' इत्यहमपि सहसाऽपृच्छम् । कासिमेऽथ सविलक्षणहस्तविक्षेपं तूष्णीं स्थिते ममानुजोऽहं च साशङ्कौ सम्भ्रमेण घूर्णितचेतसाविव परस्परमवालोकावहि । क्षणोत्तरं कासिमः पुनरुपन्यस्तुमारब्धवान् ।

''अथ माध्याह्ने शेखमहोदयस्य मुत्युविचारणासमितिस्तत्प्रासादे मेलिष्यतीति विज्ञापितोऽहमधिकारिभिः। तद्गूढनिधनात्प्राक्क्षणेऽहमस्यान्तिकवर्त्यासमित्याधिकारिणो मदीयसाक्ष्यममार्गन् । अतः समाप्तप्रातर्विधिः सत्वरं शेखहोदयानामालयं समासाद्य मृत्युमीमांसकानां समितीं मुखप्रकोष्ठे संमिलितामद्राक्षम् । दिवंगतस्य स्वामिनः संमिलिते परिवारे वृद्धोऽबिसिनीयः सेवको मद्दृष्टिगोचरोऽभूत् । प्रविशति मयि मुखशालां न्यक्षिपदयं सकोपं कटाक्षम् । अथ विचारणाप्रारम्भात्पूर्वं निजपार्श्वस्थे विष्टर इङ्गितेन सभाध्यक्षेण सूचितेऽहं जोषमुपाविशम् । अथ चञ्चललोचनः सेवकः साक्ष्यप्रदानायाज्ञापितः साशङ्क मामनवरतं

निरीक्षमाणो ह्यस्तनं वृत्तं कथयितुं सगद्गदमारब्धवान् ।

''अहो दीनरक्षकाः । परेद्युरासन्ध्योपासनं पूज्यपादानां मदीयस्वामिनाममूल्यप्राणवता शरीरेणालङ्कृतमसीदवनीतलम् ।'' अत्र क्षणं विरतवचनोऽङ्गुल्या सौद्धत्यं मामुद्दिश्य पुनरालपितुमुपाक्रमत । ''महाशया इमे समीपवर्तिनो मस्जिदस्य पुरोहितस्योपासकान् प्रति संध्योपासनार्थमाह्वानात्प्रागेव स्वामिनः संदर्शनाय समायाता मन्दिरमिदं किल । कृतसत्काराः स्वामिभिरमी कुसुमकुञ्जं समानीताः । अहं च नित्यनियमानुसारेण स्वामिनो निकटेऽनुगम्य तयोः पार्श्वे स्थितवान् । न चिरात्तममूल्यहीरकमणिं समानेतुमादिष्टः स्वामिभिः क्षणमात्रमेव तौ व्यसृजम् । ''

अत्र निरुद्धकण्ठः कञ्चुकनालिकप्रान्तेन नेत्रयुग्मं प्रमृज्योष्णं च निःश्वस्य विस्फारितनेत्राभ्यां मामवेक्ष्य समभाषत।

'न चिरोत्सन्ध्योपासनार्थं प्रार्थनाकौशेयास्तरणं भूतले विरचय्य वाटिकायाः पार्श्वभागे नेदिष्टे संध्यामुपासितुमपासरम् । समापितसंध्योपासनाक्रियो यावत् पुष्पकुञ्जं निवर्तेऽहं हन्त तावत्प्रार्थनास्तरणे गतासून्स्वामिनो विलोकयामि । समुद्घाटितपिधाना हीरकमजूषा रिक्ता तत्पार्श्वे स्थितोऽसीदि'ति ।

'इति निवेद्याधिकाधिकमन्दीभूतस्वरो द्विगुणितद्वेषो सभ्रूभङ्गं मां निरूप्य विरतवचनो वातायनात्पुष्पकुञ्जस्य दिशं प्रत्यालोक्य दीर्घं च निःश्वस्य पुनः समुपाविशत् । अत्रान्तरे वाटिकायां विरचिता विष्टराः शोकानुकम्पादर्शनाय समायातानां मित्रजातिबान्धवादीनां कृते तैः क्रमेण समपूर्यन्त । मुखशालायाः समीपवर्तिनि प्रकोष्ठे पुरोहितानामुत्तरक्रियामन्त्रान् पठतां शोकस्वरोऽनवरतं समाकर्णि । ततो मुहूर्तं यावत् परितो जनैः संशयोद्गारैः पर्यपूर्यत सभामण्डलं तावन्मां संबोध्य सभाध्यक्षः समभाषत ।

''शेखमहोदयानामाकस्मिकमृत्युकारणं नाद्य यावद्विदितमस्माकम् । अन्तिमदर्शनं तेषां भवद्भिरुपलब्धमिति भवत्साक्ष्यनिवेदने

कुतहलमस्माकम्। तद्धैर्यमवलम्ब्य कथ्यतां सर्वमेव । भवतामत्रागमनहेतुः । अपि चिरपरिचयाद्वा हीरकदर्शनकुतूहलाद्वा कुत आयाताः। किमुक्तं शेखमहोदयैः । कियन्तं कालमवस्थिता यूयं सदनेऽस्मिन् ह्यः । इत्यादि विशकलय्य निवेद्यताम् ।''

इत्याज्ञापितः सभाध्यक्षेण परिस्थित्याकुलोऽहं किंचिद्दोलायमानमानसः कतिपयक्षणाज्जोषमवस्थाय शेखाब्दुलमहोदयानां प्रथमदर्शनादारभ्यावयोः संलापो हीरकदर्शनमभिनन्दनं निर्गम इत्यादिं वृत्तान्तं सविस्तरं न्यवेदयम् । विरतवचसि मयि मुखशाला भयानकनिःशब्दतया मुहूर्तमावृताऽभूत । क्षणेऽस्मिन् संत्राससन्देहमिश्रितचिन्ताभिभूतचेता मनस्यकरवम् । 'प्रायेण शेखमहोदयानां घातुकं मां शङ्कते जनः । मां दण्डपाशवधस्तम्भं प्रेषयिष्यन्त्यधिकारिणः । निरपराधिनमात्मानं कथं नाम समर्थयेय । अव्यापारेषु व्यापार इव व्यधायि मया हीरकदिदृक्षुणा । हीरकलिप्सा मे निखिलदेशस्य सङ्ग्राहकाणां विदितैव । शेखमहानुभावानां सजीवानामन्तिमदर्शनं मे स्यादिति सभाजनस्य संशयस्तत्कटाक्षत एव सुव्यक्त इदानीम्।' इत्थं नानाविधचिन्तासन्तानाक्रान्तो विवर्णवदनः शुष्ककण्ठो वेपमानहृदयो यावदवास्थिषि तावत्पृष्टस्थं द्वारमुद्घाट्य मरणोत्तरदेहपरीक्षाफलमाख्यातुं भिषजौ द्वौ मुखशालां प्राविशताम् । सभाध्यक्षस्य पृच्छया प्रेरितोऽब्रवीदेकस्तयोर्यथा । 'बाह्यबलात्कारस्य चिह्नं गरलस्योग्रस्य वा लक्षणं न संलक्ष्यत आवाभ्याम् । अतो मृत्योः कारणत्वं न कस्मिन्नाप्यारोपयितुं शक्यत इति ।

''हा । अल्ला । अल्ला । इन्द्रजालस्य कोऽपि दारुणः प्रकारोऽयम्' इति स्थविरोऽबिसिनीदेशीयः स शेखमहोदयस्य सेवको मां सोल्बणविद्वेषं निरीक्षमाणः प्रोच्चैः समुदैरयत् । तदीयं वचो भुजगसूत्कार इवाध्वनत् प्रकोष्ठे सर्वतः । सभामण्डले च तावत्क्षणमविच्छिन्ना निःशब्दता व्यराजत। अहं तु विलक्षणचिन्ताभावभङ्ग्याकुलो कम्पितहृदयो भूतले बद्धदृष्टिः स्थितवान् ।

इत्युक्त्वा विरतनिवेदनो गतवृत्तचिन्तनपरो विलक्षणस्मितास्यः क्षणं

तूष्णीकामास्त कासिमः । अर्धसमाप्तां तस्य कथामाकर्ण्यावां चमत्कारितौ सम्भ्रान्तौ च साकूतं परस्परं व्यलोकयाव । प्रश्नपरम्पराऽऽवयोर्जिह्वाग्र उत्तस्थौ। ततः कासिमेन पुनरुपन्यस्तुमारब्धे निरुद्धनिश्वासा अश्रुणुव ।

'अथाचिरात्सभाध्यक्षो मामप्राक्षीत् । 'अपि चिरान्महार्घरत्नसंग्रहे व्यापृता भवन्तः 'इति ।

'श्रेष्ठमणिसञ्चयनमेव मे जीवनस्य प्रधानव्यवसाय आयौवनारम्भात् । तदर्थं च देशोद्देशं पर्यटनं मम । पितृधनस्य भूयिष्ठांशस्य व्ययश्च । शेखाबदुलमहानुभावकृतेन स्वहीरकस्य भृशं मयाभिलाषितस्य क्रयप्रत्याख्यानेन नितरां भग्नमनोरथो निराशाकुलश्चाभवं ह्यः।

''इति प्रत्युक्ते मया पुनर्गाढनिःशब्दताजनितनिष्प्रभत्वान्निरुत्साहित-मभूदधिकाधिकं सभामण्डलम् । सभाध्यक्षो भिषग्भ्यामुभाभ्यां कर्णसंलापमकरोत्। अहं च यावन्निःशब्दतया क्लिश्यमानो जोषमवस्थितस्तावद्भिषजोरेकमपृच्छत्सभाध्यक्षः ।

''अपि केनापि विमोहविद्याप्रयोगेण प्राणानपहर्तुं पार्यत'' इति ।

''प्रश्नेनानेन सभापतेः संत्रासाभिभूतः क्षणं निरुध्दश्वासो नतशिरा निश्चलश्च स्थितवानहम् । पुरातनचीनमन्दारिणस्य मरकतमणीनां च विषयो मत्स्मृतिसरणीं सरभसमगाहत।'' अत्र पुनर्विरतवचाः कासिमः।

विमोहविद्याभियोगाच्चीनदेशीयमहाजनस्य मरकतमणिप्राप्तये प्राणा अपहतास्त्वयेति किंवदन्तीं विचिन्तयसि किम्' पृष्टप्रायो मयेङ्गितमात्रेण पुनः सम्भाषितुमुपाक्रमत मित्रमावयोः ।

''अत्युग्राघात्केचन जना विगतासवो जाता इति श्रुतमस्ति मयेति भिषजा प्रत्युक्ते पुनरुभाभ्यामगंदकाराभ्यां कर्णालापमकरोदध्यक्षः । चिन्तापरश्चाहं महानर्थगर्तानिपतनोन्मुखमात्मानमवाबोधम् । ''

'कुतः? कथम् ?' इति सविक्षेपहस्तेनानुजेन मे समुदीरितम् ।

''यतो नजमदिलेलहीरकं क्रेतुमैच्छं शेखमहोदयैश्च मदन्यर्थना प्रत्याख्यातोति प्रतिपद्य दोषपात्रतां नीतवानहमात्मानम् । चीनमन्दारिणस्य

च भूतवृत्तं प्रायो विदितमासीद्विश्वेषाम् । क्षणेऽस्मिन् पैशाच्या छाययाऽऽवृतमात्मानमकलयम्। हीरकस्य रश्मिजातमालाम्बरेणान्धीकृत इव भ्रान्तमस्तकोऽभवम् । कल्पायमानायां निःशब्दाकालकलायां भिषग्भ्यां सभापतौ संमन्त्रयमाणे भयसन्देहक्रान्तो निरूढनिःश्वासः स्थितवानहम् । तेषा मन्त्रणस्यहमेव विषय इत्यत्र सन्देहलेशोऽपि नासीत्। अथ तावन्मान्दिरस्यान्ततः पुरोहितानां मन्त्रपठनमलिपटलस्य झणत्कारनाद इवाश्रावि तदेतत् क्वचिद् व्यरमत्क्षणं ततश्च पुनराधिकाधिकोच्चैः समाकर्णि। पर्यन्ते च मन्दरुदितमिवापाचीयत । किञ्चित्कालोत्तरं सहसा सदनस्य बहिर्भागे कस्यचिद् गुरुपादनिक्षेपः श्रुतिगोचरोऽभूत् । ततो विशालं प्रवेशद्वारमुद्घाट्य कश्चित्सुघटितशरीरो हस्ताकृतिर्निर्विकाराननः पुरुषो मुखशालां सहसा प्राविशत्। सोऽयं शेखमहोदयानां मालाकारः सभापतिं शनैः शनैरुपेत्य 'पुष्पवाटिकायामुपलब्धमिदं मये' ति सभागतानां न कमप्येकं विशिष्टमुद्दिश्य समितेः पुरः पङ्कलिप्तं वस्तु किञ्चिन्न्यधात् ।''

'किमासीद्वस्तु तद्' इत्यधीरमपृच्छम् ।

अभूत्किलैतन्नजमदिलेलहीरक एव । मालाकारेणासौ पुष्पकुञ्जान्नाति- दूरनिहितदुग्धपात्रस्य समीपमुपलब्धः ।' ततश्चेदिदमपि मयाधिगतं तत्रैवे'- त्यभिधाय फणिनो निर्मोकस्तेन प्रादर्शि । व्याहरच्च जानन्ति किल श्रीमन्तो परेद्युर्नागपञ्चमीमहोत्सवोऽभूदिति । तन्निमित्तमुपवनेऽत्र सर्वतो दुग्धपात्राणि निहितान्यासन् । भुजङ्गहतकश्च कोऽपि पीतदुग्धो घोरचेष्टितोत्तरमात्मनो निर्मोकेन रिक्तभाजनं सनाथीकृतवान् इति ।

''तद्वचनमाकर्ण्य क्षणं सर्वे सभाजनाश्चित्रितलिखिता इव नीरवाः संवृत्ताः। अहं च स्तब्धीभूतश्चक्षुषी स्थिरीकृत्य जोषं स्थितवान्। परितस्तावत्सभामण्डलस्य विस्मयोद्गारप्रवाहैः पर्यपूरत मुखशाला। सभापतिश्च कुतुकपरवशान् सभास्तारान् संबोध्य समभाषत। 'अहो सर्वमिदानीं शेखाब्दुलमहोदयानां निधनकारणं स्फुटमेवास्ति। न किञ्चिदप्यवशिष्यते निर्णयविषयस्य । कासिममहाशया अपि

संशयारोपान्मुक्ता इत्यभिनन्दनीयाः खलु' इति। कृतान्तमुखकुहरादिव निर्गतमात्मानं मन्यमानः क्षणं विस्मृतात्मेव स्थितवानहम्।''

अथ विरतवाक् कासिमो निमीलिताक्षः क्षणं तूष्णीमस्थात् । शेखाब्दुलमहोदयानामाकास्मिकमृत्योर्गूढताजालिकायामुद्ग्रथितायां कासिमं निपुणं निरूपयन् पन्नगस्यास्य गरलेनात्युग्रेण भाव्यामिति न्यगदम्।

**कासिमः –** अथ किम् । प्रोचुर्जना हि तदा यन्निर्मोक एव कस्यचित् करालनागविशेषस्यास्तीति । शेखमहोदया संध्योपासनामनुतिष्ठन्तो दष्टा निमिषमात्रेणं च प्रायोगतासवः स्युः ।

**मत्सहोदरः –** कथं नाम भिषग्भ्यां ताभ्यां गरलविकारो न समलक्ष्यत?

**कासिमः –** आः । विचित्रमेतत्खलु । परमतिविरलदृष्टोऽयं प्रसङ्गे । यद् गरलेन निरपराधे जने क्षणामात्रं दोषभारः समारोपितः।

अहम् – किमभवन्नजमदिलेलहीरकस्य?

**कासिमः –** शेखमहोदयेभ्यो हीरकस्यास्य मूल्यं यत्प्रदित्सुरासं तस्यार्धेनैव धनैव दिष्टया तं क्रेतुमपारयम् ।

**मत्सहोदरः–** परं भोः क्वास्ति ते विमोहनविद्यासिद्धान्तकथा? नायं सिद्धान्तः प्रमाणीकृतस्त्वयेह ।

**कासिमः–** वक्ष्यथो युवामेवामिती प्रागेव व्यतर्कि मया । इति सन्तोषशंसिहासेन प्रत्यपद्यत कासिमेन मोहनविद्यासिद्धान्तप्रामाण्याभावः।



# १०. विधवोद्वाहसङ्कटम्

आसीदेकदा धुल्लिकापुरे पार्वती नाम स्वदेवरनिकेतने दास्यकर्म कुर्वाणा काचिद्गतभर्तुका। बाल्योद्वाहनिरोधकसारडाविधानात् प्राग्बालामिमां सुवर्णसवर्णाङ्गीं कमललोचनां मृदुलवचनां केनचिद् बालवरेण परिणाय्य तत्पितरौ दिवं गतौ। अचिराद्विवाहोत्तरं स बालपतिरपि तावन्वगात्। ततः प्रभृति बालविधवेयं भर्तृबन्धुजनालये किङ्करीव दीनभावा प्रनष्टोत्साहा कथमपि जीवनयात्रामसाधयत्। अथ प्रौढवयः प्राप्तायां तस्यां यौवनं विपदावहं युवत्याः कुन्तलपाशश्च नाशकारीति मन्वानैस्तद्भर्तृबन्धुजनैर्मुण्डितशीर्षाऽपि नैसर्गिकलावण्यान्न व्ययुज्यत सा। श्वेतवासा हि सा कमनीयतमा विमला विंशतिवर्षदेशीया मधुराकृतिर्विरेजे।

अथाभानूदयादनिशं कूपाज्जलमाहरन्ती वस्त्रसंचयं धावन्ती गोमहिषादीन् रक्षन्ती पाकगृहे प्रयस्यन्ती सा क्षणमपि विश्रान्तिसुखं नोपलेभे। तद्देवरस्यात्मजः पञ्चवर्षीयो निर्व्याजमधुरालापो तस्या एकमेवालम्बनं बभूव। परं शिशुना तेन क्वचित् क्रीडन्ती पत्युर्बान्धवैर्नैर्घृण्यान्न्यषिध्यत। रात्रौ भोजनं परिवेष्य भाजनानि च प्रक्षाल्यातिश्रान्ताऽन्तःपुरस्य तमोमयकोणे बन्धुशापान्श्रावं श्रावं सकलमन्नं भोक्तुमसहमाना भूयिष्ठमंशं गोष्ठसंनिधौ चरते शुनेऽदात्तपस्विनी। निशीथे च बहिःस्थोपगेहस्य मलीमसे कोणे व्यथितसर्वाङ्गी जागरिता चिरमवतिष्ठमाना निशां नीतवती। सुप्ताऽपि क्वचित् स्वप्ने क्रुद्धान् बन्धूनाक्रोशतो दर्शं दर्शं सहसैव प्राबुध्यत। ततो वायुसूत्कृतिं निकटवर्तिगोष्ठस्थितगवां बालधिधूनिशब्दं च श्रुण्वत्युन्निद्रनेत्रा निशाशेषमगमयत्। अथवा प्रहासानन्दकारकं देवरस्य शिशुं ध्यायं ध्यायं किञ्चिन्निद्रासुखमलब्ध सा। प्रभाते च गोव्रजस्य हम्बारवेण प्रबोधिता दोहनाय गोष्ठमव्रजत्।

अथ गच्छत्सु वर्षेषु सूर्यांशुर्गिरिकन्दरमिव कश्चिद्युवा पार्वत्या हृदयमगाहत। लौकिकानामगोचरमान्तरसौन्दर्यं मृग्यन् कश्चित् प्रवासी पार्वतीं कूपसंनिधौ साक्षाद्दिवा पश्यन् रात्रौ च मनसा विचिन्तयन् मलिने पुरेऽस्मिन् व्यलम्बत। दीर्घिकासंनिधिस्थितास्वनेकवनितासु विधवापि

मनोहर्त्री पार्वत्येव तं चकर्ष। तस्या अपूर्वलावण्यं दर्शं दर्शं विमोहितोऽभूत्तरुणोऽधिकाधिकम्। विधवानां दीनत्वं तु न स व्यजानात्। तथा हि। धुल्लिकापुरनिवासिनः कृपणा अज्ञानधूलि- भिरन्धा धर्माधर्मौ नापश्यन्। तस्मात्पार्वत्या मनोवृत्तिरपि जनापवादभयाद् बन्धुसंत्रासाच्च परं संकुचितासीत्। तया सह चिराय वक्तुकामोऽपि प्रवासी तामुपैतुं नाधृष्णोत्। अन्ते दैववशात्स्वयमेवोपानमत्कालोऽनुकूलः। एकदा हि कूपाज्जलमुद्धृत्य जवाद् गृहं निवर्तमानायाः पार्वत्याः पङ्किलायां भूमौ पदमस्खलत् सहसा च सा भूमौ न्यपतत्। जलसंभृतो घटो भ्रंशित्वा रिक्ततामगमत्। स्थलमेतद्विजनमासीत्। वल्लभां बाष्पपूर्णनयनां पतितामालोक्यादूरस्थो युवा साहाय्यदानचिकीर्षया तत्सविधं सत्वरमुपेत्य शनैस्तामुदस्थापयत् ततश्च प्रह्वः कूपतो जलं पुनः स्वयमुद्धर्तुं तदनुज्ञामयाचत। आजन्मतः कदापि नाश्रावि तयेदृक् प्रियं वचः। व्यतिकरेणानेन चमत्कृता सा व्यचिन्तयत्। अपीदं कुटं बान्धवैः प्रयुक्तं स्यादिति। ततोऽर्धमार्गं भवत्या घटं नेष्यामीति याचमानं तं मृदुवचसा निवार्य गृहं प्रति ययौ युवतिः। तस्या वचसि तज्जीवनकथानिवेदकं किमप्यस्वनत्। नैसर्गिकबुद्ध्यैव तस्याश्चित्तमग्रहीत्स तरुणः। तमुदारचेतसं ध्यायं ध्यायं तस्या निरानन्दविविक्ततमोमयहृत्कन्दरे भास्वद्रश्मिजातमिव किमपि सुखदं प्राविशत्। मुहुर्मुहुरचिन्तयत्सा तस्याभिजातस्य दीर्घबाहोः प्रियदर्शनं, तस्यानल्पसौजन्यं च। कच्चित्सोऽपि मां ध्यायतीति विचारः क्रमेण वृद्धिं गत्वा तस्या विविक्तहृदयमचकासयत्। यत्तरुणेनानेनोपलक्षिता, यत् प्रथमत एव मज्जीवनयात्रायां मानुषीव संभावितेति ध्यायं ध्यायं रोमाञ्चिताऽभूत्पार्वती। महानुभावस्यास्य वापीतो निर्गमिष्यन्त्यां तस्यां बद्धदृष्टेः स्मेराननं तत्स्मृतिपथान्नापासरत्। ततश्च सहसा बान्धवानां कोपवात्यास्मरणमात्रेण कम्पितविग्रहा चिरं विनिद्राऽतिष्ठत्।

तदारभ्य स्वस्वगेहं गतास्वन्यासु प्रमदासु कूपान्नातिदूरे विजने स्थले प्रतिदिनं तौ परस्परसमागमसुखमन्वभूताम्। पार्वत्या जीवनयात्राक्लेशजातं नृशंसतां च बन्धूनामचिराद् वितर्क्य भृशं दुःखितोऽभूत्स तरुणः। तस्यानुकम्पासौजन्यसरलाचारादिसद्गुणा आदधुर्विश्वासं तस्याम्। तेनापि स्वपत्न्या आकस्मिकमृतेः कथा तस्यै निवेदिता। निशम्य च तामश्रुबिन्दुभिरनुकम्पां व्यञ्जयन्ती तस्य भूयसा प्रेमभाजनमभूत्सा।

अचिराच्च तयोः सौहार्दं वृद्धिमगात्। विवशा मृगीव सा भक्तिपराऽभूत्तस्मिन्। सोऽपि गरीयसाऽऽदरेण तां संभावयामास। चिरदुःखजं यद्दैन्यं पुरा तदानने स्फुटमासीत्तदिदानीं विलयं गतं प्रफुल्लतां च प्राप्तं तन्मुखाम्बुजम्। तस्या रूपान्तरं वीक्ष्यापि तामनादृत्य बान्धवास्तत्कारणं व्यचिन्तयन्। प्रेयसी मे यदा भूयः सुकेशी स्यात्तदा निरुपमा भवेदिति प्रतीतो युवा स्थलान्तरं तया सह यियासुर्निजमनोगतं जातुचित्तस्यै न्यवेदयत्। तन्निशम्य रोमाञ्चितर्जुभावादकम्पत पार्वती। अनिवार्यक्लेशदर्शिनी तस्याश्चिन्ताकुलां दृष्टिं विलोक्य मधुरोक्तिभिस्तां सान्त्वयन्नवादीद्युवा। 'प्रिये मा स्म भैषीः। कांचिन्नागरिकतोपेतं पुरं गन्तव्यमावाभ्याम्। तत्र त्वां धर्मतः परिणेष्यामि। न कदापि वियुक्तौ भविष्याव' इति। सा च कम्पमाना भाविनीं सुखदीपिकां प्रज्वलन्तीमपश्यन्मनोदृष्ट्या। सर्वं क्लेशमयं तमश्च सहसा व्यलीयत। क्षणान्तरे तु बन्धूनां स्मृतिस्तश्चेतसि भयमुग्रमजीजनत्। सगद्गदं च साऽवब्रवीत्।' मैवं मैवं। परतन्त्राऽस्मि खलु।' इति नतमुखी तस्थौ सा। 'अलं भिया दयिते। निभृतं खलु गमिष्याव।' इति सप्रेमोक्तं तेन। क्षणोत्तरं चोन्नमिताननाश्रुपूर्णनयनां तां निरैक्षत युवा। कटाक्षतो गाढानुरागं सूचयन्त्याः प्रियाया जोषं स्थितवत्या अनुमोदनं मया प्राप्तमिति मन्वानस्तरुणः प्रहर्षकोटिमारुरोह। तदनु संभ्रमानन्दतुन्दिलामपसर्पन्तीम–निमेषलोचनाभ्यां पिबन्निवाध्वन्येकाकी प्रदोषे मुहूर्तं स्थितवान्।

दैनिकक्रममनुसरन्ती सायं वापीं ययौ पार्वती। ततश्चालक्षितौ धूमयानस्थानकं त्वरितं प्राप्य प्रदोषे पुण्यपत्तनाय प्रस्थितौ। संप्राप्य तत्र प्रियां क्वापि स्थापयित्वा पुरोहितमन्वेषितुं नगर्यामभ्रमद्युवा। परं कृत्स्नं दिनमटतापि तेन न कोऽपि पुरोहितः समुपलब्धः विप्राननेकानुवाच तरुणः। 'विधवां युवतिं धर्मतो वोढुमिच्छामि। तदावयोः पाणिग्रहणं संपाद्यताम्।' इति प्रार्थितैस्तैर्विप्रैः प्रोक्तम्। 'गम्यतामितो न संपादयिष्यामो विवाहमिमम्। धर्मलोपो भविष्यति विधवायाः पुनर्विवाहादि' ति। केचिद्भूसुरास्तावुद्वाहयितुं प्रतिपन्नवन्तोऽपि तयोर्वर्गभिन्नतां ज्ञात्वा तदर्थनां प्रत्याचख्युः। 'युवां ब्राह्मणावपि सुतरां भिन्नवर्गौ। युवयोः संयोगो वामधर्मः खलु स्यादि' ति। पर्यन्ते लौकिकज्ञानविवर्जितोऽयं प्रणयी

विषण्णचेताः सम्भ्रान्तश्च व्यवहारज्ञमुपययौ। 'निजहिन्दुत्वं निगूढवतोर्युवयोर्विवाहो लेखपत्रेण साध्य' इतिनिवेदितं तेन। तदपि स्वीकृत्य प्रियां वोढुकामः स सत्वरं तत्संनिधौ जगाम। आह च। 'प्रिये क्षणादावयोर्विवाहः संपत्स्यते। केवलं व्यवहाराधिकृतस्य पुरुषस्य पुरत आवयोर्नामलेखनं कार्यमि' ति। न कदापि तयेदृशो विवाहः श्रुतपूर्वः। तस्मात्संभ्रान्ता सविस्मयमप्राक्षीत्सा वल्लभम्। 'अप्ययमुद्वाहविधिर्विधवानां कृते कल्पितोऽस्ति।' स प्रत्युवाच। 'प्रिये सवर्णयोः संयोगस्य धर्मसिद्ध्यर्थमेव विधिज्ञैर्विधिरेष कल्पित' इति। 'कोऽर्थो ननु लेख्योऽत्रे' ति सकम्पम– पृच्छत्पार्वती। आवयोर्हिन्दुत्वं निगुह्यमत्र किन्तु नास्ति मनागपि बाधा। न खलु भ्रष्टौ भवेवानेन। मा बिभीहि प्रिये इति तां स समाश्वासयत्। किन्तु धुल्लिपल्लिकेत–रजगदनभिज्ञत्वादाकुञ्चितमतिः पार्वती स्खलद्वाचाऽब्रवीत्। विवाहविधिरयं वार्धुषेर्लेखपत्रमिव भाति मे खलु। अनेन जातिबाह्यौ भवेवे'ति। अचिन्तयत्सा। अहो वंशपरम्परया ज्ञापितास्मि यद् भ्रष्टजातिर्हिन्दुर्नित्यमेव बहिष्कृतोऽवतिष्ठेत यावत् प्रायश्चित्या पुनः शुचिर्न भवेत्। सोढ्वा पर्याप्तं मानभङ्गमियन्तं कालं पुनः स्वजातिकोपपात्रं भवेयम्। तथापि सह वल्लभेन निवस्तुं पातालमप्यवरोढुं सज्जाऽस्मि। इति चिन्तासन्तानझञ्झावातेनोत्क्षिप्तेव चिरं जोषं स्थिता सा। तरुणः प्रत्यवादीत् 'प्रियतमे आबाल्यात्सर्वलोकैस्तिरस्कृतासि। मूर्खैस्तै रनुचितमेवाचरितं त्वयी' ति। पुनरभाषत पार्वती 'वल्लभ, जानासि यत्प्रायश्चित्तेन पूतो द्विजः स्वजात्या योज्यते। नोचेद्यावज्जीवं बहिष्कृतो भवतीति व्यवहारविचक्षणैः पूर्वजैराबाल्यादनुशिष्टाः स्मः। अतो बहिष्काराद् बिभेमि। त्वत्सहचरी भवितुं वह्निज्वालामपि प्रविशेयं परं ज्ञातिबहिष्कारात्कथमात्मानं रक्षेयमि' ति।

तरुणश्चिन्तावात्याभिहतां प्रेयसीं पुनः पुनः सान्त्वयामास। दीनदीना पार्वती तु वल्लभं सबाष्पं प्रेक्षमाणा शिरश्च कम्पयमाना सगद्गदमगदत्। 'प्राणेश प्राप्तामितसुखाया मम प्रतिकूलोऽस्ति विधिः। व्यवहारेऽस्मिन् संमतिं दातुं नोत्सहे किल। सुहृन्मणे क्षम्यतां हतभाग्योऽयं जन' इति। ततः पुनः पुनरनुनीता तरुणेन क्षणमात्रं प्रोत्साहितापि भूयः शङ्काविष्टाऽतिष्ठत् पार्वती। ततश्च तेनोपायान्तरं सूचयताऽभ्यर्थितम्। 'प्राणप्रिये मया सह निवस। धर्मपत्नीमिव त्वां संभावयिष्यामि। आजीवं त्वामभिरक्षिष्यामी'

ति। तस्यानुनयं निशम्य तस्या मनसि दोलायमाने मुहूर्तं सा चिन्ताकुला जोषमस्थात्। अथ तन्मौनेन किञ्चित् समुत्तेजितः पुनरपि वक्तुं दधर्ष सः। 'अन्योन्यप्रेमसर्वस्वौ न कोऽप्यावां ज्ञास्यति। अत्यन्तविजने ग्रामे निवसामि। मत्कर्मकरान् विना क्षेत्राद्बहिर्न कोऽपि मद्दृष्टिपथे याति।' इति तेन पुनः पुनः समाश्वासिता सा दीर्घं निश्वस्य सखेदं पुनः शिरः कम्पयमाना दैवापहतचेष्टितेव निरुत्तरा तस्थौ। क्षणोत्तरं किञ्चिद्वक्तुकामाया–स्तस्या वचः कण्ठ एव व्यलीयत। पर्यन्ते वल्लभात्स्वमनो निगृह्य मृदुवाचा साऽब्रवीत्। 'आर्याऽहमधोगतिं भवतो नेतुं नेच्छामि। मत्कृते स्वार्थो न त्याज्यो भवद्भिरि' ति। तया स्वनिश्चय इत्थं स्फुटं व्यक्तीकृते तरुणोऽयमत्यन्त–विषण्णचेता अभवत्।

ततः कुतश्चिद्भोज्यमानीतं तेन। अल्पमेवाहारं कृतवन्तौ तौ। निराशोद्विग्नः स प्रकोष्ठ इतस्ततस्तोऽचलद्युवा। पार्वती च मौनमाश्रित्य तस्थौ चिन्ताकुला। धुलिपल्लिकायां स्वकिङ्करीभावं बन्धुदौर्जन्यमित्यादिसंबद्धं विचारतरङ्गैः सङ्कुलमभूत्तस्याश्चेतः। अकथयच्चात्मने 'देवरस्य शिशुरेव ममैकमवलम्बनम्। कालेनातिक्रान्तशैशवः स मयि बद्धादरः स्निह्येत्। क्रमाच्च प्राप्तप्रौढवया मां प्रति वात्सल्येनाचरिष्यति। इत्यात्मानं समाश्वास्य सर्वमेव तत्कृते सहिष्ये' इति दृढनिश्चयं यावत्कृतवती तावत्स्वग्रामं प्रियां नेतुं चरमं प्रयत्नं कृतवानेष महाभागः। सोऽपि प्रयत्नो निष्फलतां गतः। क्षम्यतां क्षम्यतामिति बाष्पपूर्णनयना निगद्य पार्वती वल्लभस्य सङ्केतस्थानमप्यपृष्ट्वा ततोऽपासरत्। तां गच्छन्तीं दृष्ट्वा तरुणोऽवदत्।' तिष्ठ तावत् प्रिये। असांप्रतमेकलया त्वया गन्तुं धूमयानेनैतावता दीर्घमार्गेण। अहमागमिष्यामि त्वया सह। धुल्लिकां प्रापय्य त्वामहं गमिष्यामि यथेष्टमि' ति। ततः स द्वे अभिज्ञानपत्रे अक्रीणात्। आकस्मिकसङ्कट उपयोगार्थं तां साग्रहं ग्राहयामास दशरूप्यकपत्रं च।

परेद्युर्दिवसोऽवसितप्रायः। परिक्लान्ता क्षुधार्ता विमनाश्च धुल्लिपल्लिकां प्राप पार्वती। देवरस्यालयं प्रतियान्ती मार्गे सा कूपं यदा व्यतिचक्राम तदा काश्चिन्नार्यस्तत्र चिरायमाणाः पार्वतीं प्रवासमलिनाम्बरामालोक्य ग्रामजल्पैर्निर्भर्त्समाना तामुच्चोच्चैरुपाहसन्। उपेक्ष्य ताः सर्वा मन्दभागिनी नतमुखी प्रतिकूलप्रवातेन प्रहतेव देवरवासं समासदत्। गृहस्य प्राङ्गणं तमसा

लिप्तमालोक्य विजनमपराङ्गणं ययौ सा। गोष्ठद्वारे तयाऽपावृते तृणशय्यासु शयानो गोव्रजस्तां साभिज्ञं व्यलोकयत्। स्वैरचारी शुनकश्च योऽन्वहं गृहमायाति स्म सोऽद्य तस्याः करं प्रेम्णा लेढुमुपागमत्। तस्य शीर्षं लालयन्त्या तया सह प्रेम्णा संलाप कर्तुमिच्छन्निव शुनक उच्चैरभषत्। सबाष्पे प्रेमसंप्लुते तस्य नयने वीक्ष्यात्मानुकम्पया तस्या हृदयं व्यलीयतेव। 'भक्ष्यं ते दास्यामि तिष्ठ तावदि' ति तद्वचो निशम्य तदनुयायी भक्तिपरः शुनको जोषं स्थितवान्।

तदनु गृहस्य वेदिसोपानमारोहत्पार्वती। महानसे निविष्टया लघुदीपिकया गृहमर्धप्रकाशितमासीत्। तत्पादशब्दमाकर्ण्य देवरस्य शिशुर्हर्षनिर्भरमुग्धाननः प्रधावितो गृहाद्बहिः। यावत्स देहलीमतिक्राम्यति तावत्तद्गतिरन्तर्गृहोत्थितेन कर्कशध्वनिनावारुध्यत। बालकश्चायं मुखसंलग्नान्नकणः प्रेमामृताप्लुतैर्जल्पैः पार्वतीमाह्वयन्देहल्यां स्थितवान्। अर्भकं प्रति यावत्सा करौ प्रासारयत् तावत्तस्य माता क्रोधवक्रीकृतानना चुक्रोश। 'आर्यकुलकलङ्किनि कुतः पुनरागतासि दूषयितुतमस्मद्गृहमि' ति। तदलीकापवादेन वज्राहतेव पार्वती संस्तब्धाऽभूत्। मृत्युकालस्येव तीव्रया यातनयाऽऽविष्टा क्षणं भूलग्नेव तस्थौ। ततः शनैः पदद्वयमपासरत्। बालकश्च पुनः पुनस्तामाह्वयत् तां प्रति हस्तौ प्रासारयच्च। यावत्स डिम्भस्तां प्रत्युपसर्पति तावत्पुनराशाङ्कुरस्तस्या हृदि सहसा प्ररोहति। कङ्कणभाराढ्यो मातुः पाणिस्तु पुरः सर्पन्तं दारकं हठादरुणत्। तस्यास्तारस्वरश्चोच्चैरश्रूयत मा गच्छ बालैतस्याः सविधे। अस्पृश्यास्त्येषे' ति। 'कथमस्पृश्या मे मातुली' ति विचिन्तयन्विषण्णस्तस्थौ डिम्भः। तां दीनां दर्शं दर्शं निराशया रोदितुमारभत च। अथानाथ्यभावनोद्विग्ना तपस्विनीयं निष्कासितशुनीव दुःखभारेण सीदन्त्यात्मानं संधारयितुं स्वस्तिककरावृतस्तनी कम्पमाना क्षणं तत्रैव तस्थौ। ततश्च शनैः शनैर्वेदिसोपानतोऽवरुह्य प्राङ्गणान्निष्चक्राम।

क्व गन्तव्यं कश्च साहाय्य याचितव्य इति निराशाकुलाऽचिन्तयत्सा। 'अत्र धुल्लिकापुरे निवासोऽशक्यप्रायः खलु। वरं मरणं न मर्मच्छिन्दि दुर्वचांस्यज्ञानां दुर्जनानां चात्रत्यानाम्। आत्मघातश्चिरपरिचितायां वाप्याम्....नहि नहि। नास्ति पातकं घोरतरम्।

जन्मांतरकृतात्पातकात्परिणतमीदृशं जीवनमिह। अपि कुर्यां घोरं पातकमद्य येन जन्मजन्मान्तरेऽपि दुरवस्थायामेव पतिता भवेयम्? तद्दूरे कुत्रापि यास्यामि। पुण्यपुरे क्वापि शरणं लप्स्ये' इति निश्चितवती सा धूमयानस्थानकं प्रति प्रतस्थे।

कानिचित्पदानि चलितया, तया पृष्ठतः कस्यचिच्चरणपातध्वनिः शुश्रुवे। परिवृत्य साऽपश्यत्तरुणमात्मनो वल्लभं सत्वरमायान्तम्। निश्चलैव तस्थौ सा। तरुणेन संनिधा आयातेन पृष्टा सा 'कुत्र गम्यते प्रिय' इति सर्वं वृत्तान्तमकथयत्तस्मै। श्रुत्वा तं दुःखदमपि हृष्टोऽभूदनन्यगतिका प्रिया मेऽधुना मया सहायास्त्येवेति कल्पनया। प्रार्थयत च तां तथा। 'क्षमस्व वल्लभ क्षमस्व। शास्त्रोक्तविवाहविधिं विना त्वया सह वासः पापायैव। तत् कुत्रापि प्रायः पुण्यपत्तने किञ्चिदनाथगृहं भवेत्तत्रैव शरणार्थिन्युषित्वा जनसेवया जीवनं यापयिष्य' इति। भूयो भूयः प्रार्थयत सः। भूयो भूयः प्रत्याख्यात्सा वज्रनिश्चया। कालक्रमेणास्या अनाथाश्रमे निवसन्त्या आलेखमूलं विवाहविधिमन्तरेण मतपरिवर्तनं स्यात्, कदाचित् वैदिकविधवाविवाहं संपादयितुं पुरोहिता उद्यता भवेयुर्वेति संकल्प्य तरुणस्तया सह पुण्यपुरं गत्वाऽनाथाश्रमे कस्मैंश्चित् प्रत्यस्थापयत्ताम्। 'भवत्याऽविस्मरणीयोऽयं जनः। साहाय्येन प्रयोजनं स्यात्तदा पत्रद्वारा ज्ञापयितव्य'। इत्युक्त्वा खिन्नवदनोऽप्याशापूर्णहृदयस्तरुणो निर्गतः। पार्वती चोपकारोदधौ निमग्ना बाष्पाकुलनेत्रा दृष्टिगोचरं यावत्तं पश्यन्ती स्थित्वा शनैः शनैर्गृहान्तर्गता।



# ११. क्षणिकविभ्रमः

पुण्यपुरात्पञ्चक्रोषादूरस्थायां ग्रामटिकायामेकस्यां न कोऽपि प्रायेण वृत्तपत्रमपठत्। अतो भूयिष्ठा ग्रामवासिनः स्वग्रामाद्बहिर्वर्तमानस्य वृत्तस्यानभिज्ञा आसन्। परमभूदपि काचित्कुलाङ्गना स्वग्रामवृत्तमप्यजानती खलु सुनीतिनाम्नी। क्वचित्पठितत्यक्तायाः केसरीनामपत्रिकायाः केनापि प्रेषितायाः प्रतिलेखाः सुहृत्कश्चिद्रामदासाभिधस्तस्या उपकर्तुमुच्चस्वरेण पठति स्म। परं वृत्तजातमिदं व्यतीतनैकसप्ताहमनवमेवासीत्।

पञ्चविंशतेर्वत्सरेभ्यः प्राक् कश्चितरुणो हरिर्नाम त्रयोदशवर्षीयां शारदामिव विशारदामनसूयामिवानसूयामल्पवर्षीयामपि परिणतवयस्कामिव सुवर्णमिव सुवर्णां सुगृहीतनाम्नीं सुनीतिमिमां परिणीतवान्। अभूत्कस्याचित्पाठशालायां मुख्याध्यापको हरिः। वत्सरद्वयोत्तरं धनवैकल्यवशात्पाठशालायां पिहितायामपि स्वार्थत्यागी हरिः कथमपि विद्यालयमिमं व्ययीकृतसर्वस्वं स्वयमेव निरवाहयद्यावन्निष्फलितप्रयत्नो नैराश्यपरवशोऽनिच्छन्नपि परोपकारादस्माद् व्यरमत्। न चिराच्च धनसाधनाभावाज्जायापती दारिद्र्यपीडितौ क्षुधयासन्न-मरणाविव स्थितौ।

निर्वर्तितकन्योद्वाहौ पितरौ सुनीतेः कोङ्कणावनिमण्डलवर्तिन्यां कस्याचित्पल्लिकायां कृतावासौ पत्रलेखकस्य व्यवसायमधिगमिष्यावस्त्वत्कृत आगम्यतामिहेति जामातरं सभार्यं साग्रहमामन्त्रयामासतुः। परमसिद्धिं स्वयत्नस्योरीकर्तुमनिच्छता स्वाभिमानाद्धरिणा श्वशुरस्य निमन्त्रणं निराकृतम्। योगक्षेमाय तावन्न किञ्चिदप्यवशिष्टं द्रव्यं तयोः। अतो विवाहसमये यद्रजतहेमाभरणस्वल्पजातं सुनीत्यै तेन कृतोपहारमासीत्तस्मादेकैकं कुसीदिकेषु निक्षिप्य कथमपि सभार्यस्यात्मनो जठराग्निमुपशमितवान् हरिः। उपजीविकां प्रेप्सुस्तावन्नियोगपदं यदाऽभ्यार्थयत तदाऽतिक्रान्तानुरूपवयोवशा-त्तदयोग्यतावशाद्वा कार्याधिकारिभिः प्रतिवारं प्रत्याख्यातोऽभूत्।

अथैकदा व्यवसायान्वेषी संमन्त्रणार्थं नियोगाधिकारिभिः समाहूतो

नगरान्तरं प्रति प्रतस्थे हरिः। स्वल्पदिनोत्तरं चाकाण्डमकल्पितं च धूमयानाधिकारिभ्यो मुद्राणां शतत्रयं सुनितिः प्राप्तवती। धूमयाने मृतस्य भवत्या भर्तुर्घातकस्य कञ्चुककोशे द्रव्यमिदमुपलब्धमस्माभिरिति तैर्विज्ञापिता तपस्विनीयं शोकाग्निनावलीढापि कुत एतावद्द्रव्यं निर्धनेन दयितेन प्राप्तमिति परमविस्मयमगात् सुनीतिः। मासान्तरे पठितत्यक्तकेसरीपत्रिकाद्वारा धूमयाने संवृत्तो व्यतिकरोऽपाठि तत्पुरो रामदासेन। अनेन दैवोपहतो हरिर्धूमयाने केनापि दुष्टेन निहत इति विदितमभूद्विश्लेषाम्। परमस्य मृत्योः कारणीभूतं द्रव्यमिदं कथं तद्धस्तगतमभूदिति बहुधा चिन्तयन्त्यपि याथार्थ्यं नोपलब्धवती सा। घातकश्च हरे राजकुलेऽभियुक्तः प्राड्विवाकेन येरवडाप्रदेशस्ये कारालये विंशतिवर्षपर्यन्तं वासितं इति वृत्तपत्रादवागचछत्सुनीतिः। कतिपयदिवसोत्तरं च प्रासूत सा पुत्रमेकम्। अपत्यस्यास्य संवर्धनशिक्षणादि निर्वाहयितुं सीवनादिव्यवसायैः सुस्थितानां गृहेषु मोदकादिनिष्पत्तिकार्यैश्च कथं कथमपि धनं समुपार्जयत्सा।

अथ संजाताष्टादशवर्षीयस्तदात्मजः कस्यचित्कृपणस्य वणिजो विपण्यां नियोजितः सन् दशमुद्राङ्कितपत्रं मूषकैः सामिचूर्णितमपाहरदिति प्राड्विवाकस्यादेशादेकवर्षपर्यन्तमुपरिनिर्दिष्टे कारागारे न्यरोधि। सर्वमेतत्संवृत्तं नितरामसह्यमभूत्सुनीत्याः। व्यचिन्तयच्च सा। 'कलङ्कोऽयं मरणादप्यतिरिच्यते खलु। वरं यदि पुत्रो मेऽमरिष्यन्न सहे हि कुलदूषणमिदम्। अहो बटोर्जन्मतः प्रागेव तदीयपितृपादा दिवं गता इति महानुग्रहः खलु विधेरि' ति। भूयिष्ठा भारतीययोषित इव हि पत्यौ बद्धनिष्ठा पुत्रस्य पुरतः सत्यव्रतादर्शमन्यमानानां गुणगणाननवरतं प्रशंसन्ती सत्यदेवताया अपरिमितवैशिष्ट्यं बालहृदये दृढं निवेशयितुमहरहः प्रायतत साध्वी। परं हन्त प्रयत्ना इमे निष्फला एवासन्निति विगलितधैर्या समभूदियम्। तावत्सज्जनमहितं हरिं स्मारं स्मारं सुतं दिदृक्षुः सुनीतिरेकदा वैशाखमासे मार्तण्डस्य चण्डातपक्लान्ता कारालयं प्रति प्राचलत्। दीर्घाध्वनि स्खलत्पद्भ्यां शनैः शनैर्गच्छन्तीयं कथमपि बन्धनागारमासाद्य बहिर्बन्दिनामाप्तजनस्य तं तं द्रष्टुमौसुक्यभाजः सन्दोहमद्राक्षीत्। परतः

स्वात्मजमुद्याने भूमिं खनन्तं न्यशामयत्तं च कनिष्ठापराधिनिर्विशेषमेवाकलयत्सा। युवकस्तु निशितशूलाग्रेणेव विद्धहृदयामेतां समुपेत्य सोत्साहं सप्रेम च समालिङ्गन्।

**कुमारः** – अम्ब किमित्येतावान् विलम्बः कृतस्त्वया। दशनिमिषमात्रं स्थितिस्तेऽत्रानुमंस्यते।

इत्युक्त्वा सखेदं बटुर्गुरुखनित्रं भुवि निक्षिप्य विजनं कोणमुद्यानस्य जननीमनयत्। कुतश्चिरायितासीति पुनरनुयुक्ता सा संमृज्य स्वेदबिन्दुचिह्नितं ललाटं सकृच्छ्रश्वासमवादीत्सुनीतिर् 'ग्रामादितो दीर्घमार्गं शिथिलाङ्गया मया शीघ्रं चलितुं न पार्यते बाल।' इत्यभिधाय तरोरेकस्याधो विषमशिलायामुपविश्य पटच्चीवरसंपुटीकृतान् खाद्यखण्डान् सुताय प्रादात्। तिलशर्करामयाश्च– क्राकारान्मोदकानालोक्य, 'आ, अपि त्वयैव निष्पादिता एते' इति सहर्षं साभिलाषं निगद्य मातुश्चरणयोः सविधमुपविश्य च भूतले मिष्टखण्डान् निष्पेष्टुं दन्तैरारब्धवति माणवके सुनीतिरतिविषण्णहृदया जोषमतिष्ठत्।

कुमारः – अम्ब, वर्ततेऽत्र कश्चित्सौम्यो महानुभावो येन सह संलपितुमर्हसि। ममेहागमदिनादारभ्य चिरपरिचितः सुहृदिव मयि स्निह्यत्येषः। सर्वैरपि बन्दिभिः संभावितोऽसौ। प्रतिदिनमस्मान् विनोदयितुं रामायणं प्रोच्चैः पठत्येषः।

इत्युक्त्वा मिष्टपूरितमुखेन वक्तुमक्षमो व्यरमत्क्षणं बटुः। सुनितिस्तु पुरो बद्धदृष्टिः सबाष्पलोचना स्वजीवनस्य पूर्वापरशोचनीयसंवृत्तस्मृतिपरम्परां चिन्तयन्ती नतमुखी निश्चलैवावातिष्ठत। कुमारस्तावत्पुनर्मुखरीभूय संलपितुमुपाक्रमत।'' एतादृशः पुण्यात्मा कुतः कारायां वासित इति न वेद्मि किल। न कदापि भाषतेऽसौ ह्यात्मानमधिकृत्य।''

इति सुहृतस्तवनपटोर्बटोर्वचो विषादशून्यमानसायास्तस्याः कर्णशष्कुलीं नास्पृशत् खलु। सा हि बधिरप्राया पुत्रस्याधोगतिदर्शनाच्छोकातिशयेनाभिभूता तद्घुटिकबद्धशृङ्खलाझणत्कारेण

श्रवणकटुना तदीयरुक्षवसनावलोकनेन च 'भगवत्कृपया पूर्वजानां पुण्येनैव च पितास्य शोचनीयदशामेतां प्रत्यक्षीकर्तुं नाजीवदि' ति पुनः पुनर्धन्यवाद-कृतज्ञतापुरःसरं परमात्मानमध्यासीत्।

**कुमारः** – अम्ब! स्निह्यति मयि पुत्रनिर्विशेषं महाभागोऽयम्। मदम्बां द्रष्टुमर्हसीति मया प्रार्थितोऽयं किञ्चिद्दोलायमानचेता ह्रेपित इव तूष्णीमतिष्ठत्। न जाने क्वाद्य गतोऽस्ति। प्रायः पर्वतीशैलं यातः स्यात्।

**सुनीतिः** – पर्वतीदेवालयम्?

**कु.** – नहि, नहि,। पर्वतीशैले खण्डिताश्मराशिं संचेतुमेव।

संयमितबाष्पप्रवाहा यावदेषा तपस्विनी स्तम्भिता निःशब्दा मुहूर्तं तिष्ठति तावदभ्यागतानां ततो निर्गमद्योतको घण्टानादः प्रोच्चकैरध्वनत्प्रत्यध्वनच्च। तदाकर्ण्य सपद्यासनादुत्थितां तामभणन्माणवकः 'कदा पुनरायास्यसी' ति। शृङ्खलितपादस्यात्मजस्य दुरवस्थादर्शनमसहमाना सा प्रत्यवादीद् 'वत्स, पुनरागन्तुं न पार्यते मया। रामदासपितृव्यस्तु प्रतिसप्ताहमायास्यति त्वत्कुशलवृत्तोपलब्ध्यै। तेन साकं तवाभीष्टं खाद्यं प्रेषयिष्यामि इति सगद्गदं निगद्य तनजुस्य कुन्तलकलापपरिकलितमुत्तमाङ्गं परामृश्य निरयात्सुनीतिः। पुत्रदर्शनोत्कण्ठितयापि तपस्विन्या पुनर्नैव तद्दिशि दृष्टिक्षेपः कृतः।

तावत्कुलदेवतां भगवतीं शान्तादुर्गामर्चयन्ती प्रोच्चस्वरेण सुहृदा रामदासेन पठितां महाभारतकथां प्रतिसायं सावधानं शृण्वती क्वचिद्रात्रौ नेदिष्ठमंदिरपुरोहितेनानुष्ठितस्य हरिकीर्तनस्य श्रवणेनात्मान विशोधयन्ती, दिवा च सीवनादिकार्यैः स्वल्पद्रव्यं समर्जन्ती पत्युर्विनाशोत्तरं स्वजीवनं तृणाय मन्यमाना स्वपुत्रस्य कुशलमन्तरा विधूतेतरवासना पूतहृदया कथमपि कालमयापयत्साध्वीयम्।

अथाद्य सुतः कारालयान्मोच्यत इति श्रुत्वा सोत्कण्ठमाभानूदयात्तं, प्रतीक्षमाणा तस्य शय्यागारं प्रत्यग्रजलसिञ्चितं सुव्यवस्थितं च विधाय तस्याभीष्टमिष्टखाद्यं निष्पाद्य मुखशालायां भित्तिगतफलकेषु स्थापितानि ताम्रपात्राणि निपुणं निर्णिज्य, प्रवेशद्वाराग्रेऽवलम्ब्य

मङ्गलसूचकाशोकद्रुमदलमालामुपलिप्याजिरं, द्वारस्य बहिःकुट्टिमभूतले श्वेतरक्तपीतहरितचूर्णेन रुचिररुचिररेखाचित्रचयं विरचय्य, मुखशालाया निर्मलकोणे स्थापितायाः कुलदेवतायाः प्रतिमां नवदुकूलाम्बरेण परिधार्य रूपित्वा च तल्ललाटमुत्फुल्लकेतकीरजःपुञ्जपिञ्जरेण, मालतीसुममालया-लङ्कृत्य च तां, पराह्णे सूनोर्धौतधवलवस्त्रजातस्य संशोध्य च्छिद्राणि, पुनश्च तस्य निपुणं सपुटीकरणे सा व्यापृताभूत्। सुहृद्रामदासस्तावद्दैनिकनियममनुसृत्य श्रीमन्महाभारतं प्रोच्चैः पठंस्तस्य महाराष्ट्रीयभाषया सानुवादं प्रवचनमकार्षीत्। क्वचित्तावत् समीपवर्तिदेवमन्दिरादनवरतं सायंतनिकघण्टानिनादः, क्वचिन्नेदीयसो ग्रामाद् धान्यादिपूरितशकटपरम्परायाः क्वणितं पल्लिकराजमार्गे स्वनत्, क्वचिद् ग्रामस्यार्धनग्नानामर्भकाणां ग्रामचत्वरस्थे कच्चरराशौ धान्यकणान्मार्गयतामाक्रोशः, क्वचित्सोज्झम्पं परिक्रीडमानानामन्येषां बटूनां कलकलः श्रवणगोचरतामयात्।

**रामदासः** – अत्र समाप्तः शान्तिपर्वणि षड्विंशतितमोऽध्यायः।

**सु.** – (कृतज्ञतापूर्वकम्) सुदीर्घं पठितं भवद्भिरद्य। षड्वादनसमयोऽधुना। न चिरात्सूर्यास्तमनं भविष्यति। परं वत्सो नाद्यावधि समायातः।

**रामदासः** – समाश्वसिहि, भ्रातृजाये।

**सु.** – (सकातर्यम्।) अप्यन्यथा निश्चितं स्यादधिकारिभिः।

**रा.** – नहि, नहि,। न ब्रह्मापि सकृन्निश्चितमन्यथा कर्तुं पारयेत्। नास्ति धर्मालयः कारागारः खलु। भवत्याः सुतस्य बन्धनावधिः समाप्तिं गतोऽद्य। तदद्यैव निर्मोक्ष्यतेऽसौ।

**सु.** – कच्चिदर्पितास्मै भवद्भिर्वसनपोट्टलिका। (तथैवेति सकन्धरकम्पं सूचिते) कथमेष प्रत्यभात्?

**रा.** – काराया विमोचनं न तस्मै सुखयति। 'विषण्णोऽहं मत्सहवासिनं विस्रष्टुमि' त्यब्रवीदसौ ह्यः।

**सु.** – किं बन्दिना सह बद्धसख्योऽस्ति मम सूनुः? अहह! केयं

विधेर्घटना यत्कारावासिनि जने स्निह्यत्येषः।

**रा.** – भ्रातृजाये! चिराद्वासितोऽपि कारायामनिन्द्याचारः पुरुषोऽयमिति वदन्त्यधिकारिणः। भवत्याः पुत्रोऽस्य परमप्रीतिपात्रमिति श्रुतं मया।

**सु.** – (सविषादम्) किं भविता बटोर्मे। हन्त विश्वेषामपि विदितास्ति सा तस्य स्तेयवार्ता।

**रा.** – अलं शोकेन, भ्रातृजाये। सर्वमपि पर्यन्ते शुभमेव भविष्यति। कारावासेन वत्सः शुद्धाचारो भवितेति निश्चिनोमि।

अथ क्रमेण मन्दिरस्य घण्टानिनादेन समेधमानेन सह सुनीतेः पुत्रस्य पुनर्दशनोत्कण्ठापि घनीभूता।

**सु.** – (कम्पितशिराः सविषादम्।) सुदीर्घपरिश्रमस्य कीदृगशुभोदर्कोऽयम्।

रा.– अलमतिखेदेन। मङ्गलदिनेऽस्मिन् भवत्या विधूय सर्वशोकावहचिन्तनं प्रसन्नात्मना भाव्यम्। न चिरादायास्यति नन्दनो भवतीममन्दानन्दनयनजल– बिन्दुभिः स्नापयितुम्।

सु.–(मित्रस्य वचनमश्रुण्वतीव) नैकवर्षाण्येकैकजलबिन्दुवत्स्वल्पनाण–कानि प्रतिदिनं संरक्षितानि मया। देवमन्दिरनिर्माणेन दीर्घकालीनव्रतस्य निर्वृत्तिर्भवेदिति पुरोहितेनाभिहितम्।

रा. – विदितमेव सर्वमेतन्मे। परं कार्येऽस्मिन् सुमहान् व्ययो भविता।

सु. – अथ किम्। अन्यथा किमर्थमनल्पकष्टानि सोढ्वा धनं संचितं मया। इदानीं पर्याप्तमस्ति मत्सविधे वित्तं देवमन्दिरनिर्मित्यै।

गृहाद्बहिस्तावत्पादन्यासध्वनिमाकर्ण्य 'समायातो वत्स' इति ससंभ्रमं च द्वारं प्रति यास्यतीं क्षणं प्रतीक्ष्यतामहमेव यास्यामी ति निवार्य रामदासस्तां सत्वरं बहिरगात्। सुनीतिश्च तावत्सधडधडं स्फुरद्वक्ष उपशमयितुमिव महानसमसृपत्। तावद्रामदासेनानुगम्यमानः प्राविशन्मुखशालां विंशतिवर्षीयः प्रांशुरपि सरलाङ्गयष्टिः कृशाङ्गोऽपि चारुशरीरः प्रफुल्लाननः

सूनुः सुनीत्याः। 'कियन्नामाल्हादकं पुनरागमनमिह। क्वास्ति मदीयाम्बे'तीतस्ततो वीक्ष्य प्रमृज्य च कञ्चुकनालिकया स्वेदबिन्दुरुषितललाटमब्रवीद्युवकः। महानसं प्रत्यङ्गुल्या निर्दिश्य 'तव मित्रस्यागमनमत्र सावधानं समार्दवं निवेदनीयं भगवत्यै सुनीतिदेव्या'– इत्यादिशद्रामदासः।

**कुमारः** – कुतः? अपि मत्सहचरस्य प्रवेशस्तस्यामसंतोषं जनयेत्? स्वल्पकालमेवात्र स्थास्यत्येषः। प्रायः कतिपयघटिकोत्तरमपि निर्यास्यति।

**रा.** – वत्स, त्वां पुनरालोक्य त्वज्जननी किञ्चिसंभ्रान्ता भवेत्। क्वास्ति ते सखेदानीम्?

**कु.** – प्रतीक्षतेऽसौ चत्वरस्य कोणे। आवयोर्मातापुत्रयोः समागमसुखस्य विच्छेदो मा भूदिति 'गम्यतां तावत्। सोत्कण्ठं प्रतीक्षमाणा तव जननी पुनरागमनेन प्रहर्षबाष्पधाराभिः प्रक्षाल्यताम्। पश्चात् त्वामनुयास्यामी'ति सविवेकमुक्तं तेन।

इति वदति तरुणे प्रादुरभूत्सुनीतिर्मुखशालायाम्। आलोक्यैनामम्ब! अम्ब! इति सहर्षं संबोध्य तां प्रत्यधावत्कुमारः। सा च तं गाढं परिष्वज्य वत्स! वत्सेति निगद्य संयम्य रुदितं नयने च सद्यो वस्त्रप्रान्तेन प्रमृज्य कियान् क्षामः क्षामः संवृत्तोसीति पुत्रस्य ग्रीवां, पृष्ठं बाहू च समस्पृशत्पुत्रवत्सला सुनीतिः।

**कु.** – (प्रहस्य) अम्ब! पूर्वापेक्षया पीनाङ्गोऽस्म्यद्य।

इत्युक्त्वा मुखशालाया मध्यवर्तिन्यां दोलायां तामुपवेश्य स्वयं च तस्याः पादयोः सविधं भूतले समुपविश्य कुतो नागतासि पुनः कारामिति मातुर्हस्तपल्लवं भूयो भूयः परिचुम्ब्यापृच्छद्युवकस्ताम्।

**रा.** – वत्स! नास्ति समीपं कारागृहम्। देहदौर्बल्याद्दीर्घाध्वानं क्रमितुं कथं प्रभवेत्तवाम्बा।

**कु.** – वर्तते भवत्सविधे यानम्। किमिति नानीतेयं भवद्भिस्तेन।

**सु.** – वत्स! श्रृङ्खलितपादं त्वामालोकयितुं दुःसहमभून्मे।

**कु.** – अम्ब! मत्तो ह्रेपितासीत्त्वमिति न विस्मये। इतः परमाजीवं सदाचारनिष्ठः स्थास्यामि।

**सु.** – किं नाम वक्ष्यन्ति प्रतिवेशिन इति शङ्कतेतरां मच्चेतः।

**कु.** – अम्ब! मा स्म शुचः। नगरान्तरं यास्यामि। कियद् व्यथितोऽभवं बहुविधं कालमनुतापवेदनयेति परमात्मैव वेत्ति खलु। अनवरतं विचिन्तयन् स्वापराधं निशासु दीर्घमुन्निद्रचक्षुः स्थण्डिलेऽशयि।

**रा.** – नास्ति किमपि जगति पावनतरमनुतापात्।

**कु.** – भूतपूर्वो मदीयः स्वामी कृपणो गर्हणीयोऽत्र। आसूर्योदयादानक्तं परिश्राम्यतेऽपि मे तप्त मुद्रा एव स प्रायच्छत्। वेतनमिदं जठरपूर्तयेऽपि नालमासीत्। अथ वस्त्रादिकस्य का कथा? अम्ब! सुपोषितस्त्वयापि मिष्टाभिलाषुकोऽतितरामभवम्। परमद्यप्रभृति मद्दुष्कर्मजनितं कलङ्कं परिमार्ष्टुं प्राणव्ययेनापि प्रयतिष्ये।

**सु.** – हन्त। भग्नस्फटिकं प्रतिसमाहितमपि न जातु पूर्ववद्भवेत्।

**रा.** – अलमतिशोकेनाद्य। शुभप्रसङ्गेऽस्मिन्मार्गभ्रष्टोप्यात्मजो भवत्या भोज्यतां मिष्टान्नेन।

**कु.** – (सोत्साहम्) मिष्टभोजनम्? अम्ब! किं निष्पादितं त्वया? मिष्टापूपाः? (इङ्गितेन तथैवेति निवेदिते सुनीत्या) अम्ब, श्रुणु तावत्। आमन्त्रितो मया कश्चन महानुभावः। सज्जनोऽयं दुर्दैववशात्कारायां विंशतिं वर्षाणि वासितोऽभूत्। ख्यातपूर्वोऽयं ते मां द्रष्टुं कारालय आगतायै।

पुत्रस्य वचनेऽनवधानैवान्यमनस्का सुनीतिरवादीत्। 'वत्स वपनस्नानादिकमपेक्ष्यतेतरां त्वयाद्य। वर्तते विपुलं जलमङ्गणे। धावितं त्वद्वस्त्रजातमेतत्। तव शय्यागारं निपुणं विरचितमस्ति। त्वत्कृते नवीनकञ्चु–कोऽपि क्रीतो मया। एहि तावत्। भोजनात्पूर्वमादाय पुष्पमालां देवतामन्दिरं गन्तव्यं त्वया।'

**कु.** – (प्रहस्य) कुतः।

**सु.** – संध्योपासनार्थम्। असमाप्तसन्ध्येन त्वयाऽऽहारो नैव कर्तव्य

इति।

**कु**. परमम्ब मत्सहचरः सेवनीयो मया। सोऽप्यतिभीरुर्विनीतश्च। पितृव्येण प्रत्यक्षीकृतोऽस्ति सोऽसकृत्।

**सु**. – हा! वत्स! कीदृङ्नीचैरवस्थायां पतितोऽसि यद्बन्दिभिर्बद्धसख्योऽसि। किमवदिष्यन् पितृचरणास्तव दुर्दशामवलोक्य।

**कु**. – आत्मनोऽमितगुणगणेनाकृष्टानां तातपादानां ध्रुवं प्रेमपात्रम-भविष्यत्सुहृन्मे।

**सु**. – को विजानाति कोऽपराधोऽनेनाकरीति। प्रायस्तेन भार्याया व्यच्छेदि नासिका। कोऽपि मन्दभाग्यो वा विगतासुर्व्यधायि।

**रा**. – शान्तं पापम्। शान्तं पापम्।

**कृ**. – अम्ब! तादृशः पुण्यात्मा सकलग्रामेऽप्यस्मिन्नोपलभ्येत। पुरातनमहर्षीणामर्वाचीनानां श्रीतुकारामरामदासादीनां वा पुण्यात्मनां सदाचारमनुकरोत्येषः। न केवलं कारानिवासस्य किन्तु नरकवासस्यार्होऽहमिति भूयो भूयोऽभिहितमनेन।

**सु**. – तद् ध्रुवं कोऽपि दारुणोऽपराधः कृतः स्यादनेन।

**कु**. – (मातुर्वचनमवधीर्य) वाटिकायां परिश्राम्यन् स्वेदबिन्दुक्षालिताननः कारां प्रविष्टमात्रं मा चिरान्नष्टोपलब्धमिवाप्तजनं निरीक्षमाणः स्तब्ध इव स्थितवानसौ मुहूर्तम्।

**सु**. – प्रायो घातको निजसुतमस्मरत्। अलमिदानीं कारागारस्य वार्तया। सर्वमेतत्स्मृतिपटलात् प्रमाष्टुमीहे। वत्स! एहि तावन्नापितश्चिरात्त्वां प्रतीक्षते गोशालायाम्।

**कु**. – तिष्ठ, तिष्ठ क्षणमात्रम्। मित्रमुद्दश्य भूरि निवेदनमवशिष्यतेऽद्यापि।

**सु**. – (तत्कुन्तलकलापाभ्यन्तरे हस्तं निवेश्य) निपुणं संमार्जनमपेक्ष्यसे। एहि सत्वरं तावत्।

**कु**. – (निर्गन्तुमनिच्छन्) अम्ब प्रतिक्ष्यतां क्षणम्। अर्धमपि न

मयाभिहितम्।

समीपवर्तिनो देवालयस्य घण्टानादेन प्रवर्तितेव त्वरया सुतस्य करमादाय मुखशालाया निर्गमिष्यन्ती सुनीतिरब्रवीद् 'वत्स, याहि तावत्। स्नानादिविधिर्वि धीयतामाशु। व्यतीतप्रायः संध्यार्चनसमयः किन्न श्रुणोषि घण्टाघोषम्। त्वत्प्रायश्चित्तविधिं निर्वर्तयितुं पुरोहितेन प्रतीक्षमाणेन भाव्यम्। विलम्बः शुभोदर्कविघटक एव संभवेत्।'

**कु.** – अथ गम्यतां पुरः। अनुयास्यामि त्वां सह सहचरेण मे।

**सु.** – भवतु। तत्प्रतीक्षेऽहं क्षणमत्रम्। (इत्युक्त्वा दोलायाः समीपं तस्थौ सा।)

**कु.** – अम्ब! अकथयं यदा तस्मै मम स्तेयवार्तां तदा सानुकम्पं बाष्पबिन्दुभिराकुलितनयनोऽतिविषण्णोऽभूत् सः।

**सु.** – प्रायः स्वदुष्कृत्यस्य स्मरणं तदन्तरविध्यत्।

**कु.** – (मातुर्वचनं विगणय्य) प्रातस्तरां श्रीभगवद्गीतामपठच्चासौ प्रत्यहम्।

**सु.** – अहो, विडम्बनेयम्।

**कु.** – (किञ्चिद्दुर्मनायमानः) मा विडम्बय सुकृतिनमेतम्। (इति बद्धाञ्जलिर्जननीमभ्यार्थयत।) वत्सरमेकं शीघ्रं तथा व्यतीतं यथा प्रत्यासीदद् विमोचनक्षणं मामखिन्दत्तराम्। मित्रं विस्रष्टुमनिच्छतो मे निर्गमसमयं विलम्बयेयुरधिकारिण इत्यप्याकाङ्क्षितं मया।

**सु.** – (सविस्मयं सखेदं च) परमात्मन्। अहो वैलक्षण्यमाकाङ्क्षायाः स्नेहबन्धस्य च।

**रा.** – भगवति नेदं विस्मयावहम्। आपद्ग्रस्तयोः सहनिवासिनोः परस्परविरहोऽविदुःसह एव।

**कु.** – साधुवृत्तिरयं पुरुषः स्वविमोचनविषये नित्यं निरीहः स्थितवान्। अथ मध्याह्नेऽद्य कारातो निर्गमिष्यता मया तस्य नामघोषणाऽश्रावि सहसा। अम्ब! सोऽपि स्वतन्त्रोऽभूत। तद्विमोचनोदन्ते पुनः पुनरुद्घोषिते झटिति

तमुपेत्य सरभसं व्यचालयम्। स तु शून्यदृष्टिर्निश्चलो विनष्टवागिव तस्थौ।'सखे किमिति मौनमालम्ब्यते त्वये'ति पृष्टोऽपि नाम 'श्रेयो यदि मामधिकारिणो न मोचयेयुः। न कोऽपि मां जानाति जगत्यां, न कोऽपि वा मां प्रतीक्षते। मृतकल्पस्य मे किं स्वातन्त्र्येण।' इति पुनः पुनः सगद्गदमगदत्सः। आगम्यतां तावत्सह मयाऽस्मद्गेहमितितद्दैन्येनाकुलितोऽहमभ्यार्थये साग्रहं तम्।

**सु.** – (बीभत्सितेव) किम्। निमन्त्रितस्त्वया घातकोऽत्र? वत्स, वत्स किं वक्ष्यन्ति प्रतिवेशिनः? तत्प्रवेशोऽत्र नानुमन्यते मया। तादृशेन व्यवहारेण विप्रवंशावतंसैर्जनकचरणैः परमपूज्यैर्भूयोपि पङ्केनाङ्कित्तैर्भाव्यम्। मम च कुलदेवताया दीर्घोपासनानुष्ठानादिना नैष्फल्यतां गन्तव्यम्। एतादृशः पुरुषस्य प्रतिषेध्यः प्रवेश इह। विद्यन्ते धर्मशालाः पुण्यनगरे नातिदूरमितः। सर्वेपि समाश्रीयन्ते तत्र। दोषिणोऽपि।

**कु.** – हन्त! किमित्यनपराधो जनोऽन्यथा व्यपदिश्यते त्वया। यदि त्वमेतमवलोकयेस्तर्हि न कदाप्येवं ब्रूयाः। भवतु। यद्येनं सत्कर्तुं नेच्छसि तदहमपि सहानेन क्वापि यास्यामि।

**सु.** – (सविषादम्) बन्दिना सार्धं क्वयास्यासि बत?

**कु.** – अलं चिन्तया मद्विषये। अत्रापि धनार्जनं दुःसाध्यं मे भवेदेव।

**सु.** – (दीर्घं निश्वस्य।) तव पितुर्हंससितयशोऽवलम्ब्य तव भावि क्षेमं बलवदाशास्यते मया। परं बन्दिनां संसर्गेण सर्वथा तव विनाश एव भविता।

**रा.** – वत्स! अलं संत्रास्य मातरम्।

**कु.** – (साभिनिवेशम्।) परं निमन्त्रितोऽस्ति मयासौ। अम्ब! अनाश्रितपरिपालनं धर्मो साधूनामिति त्वयैव बहुधा मे कथितम्।

**सु.** – (सरभसम्।) भयावहः किल घातकस्य प्रवेशोऽत्र। कुमार्गे त्वां नयेत्। स विलुण्ठेदप्यस्मान्।

**रा.** – भ्रातृजाये, मा स्म वृथा भैषीः। वत्सस्योत्साहो न प्रतिहन्यव्यः।

**सु.** – हा, हा, कारासहवासिनमनवरतं ध्यायतोऽस्य चेतो द्वादश

मासान् नित्यबाष्पप्रवाहादंधीभूतकल्पाया मातुर्विचारविधुरं स्यादिति सुतरां शोचनीयं खलु। (इति संरुद्धकण्ठमुदीर्य ललाटतलमताडयत् सा।)

**कु.** – (समार्दवम्) अम्ब! मैवं मैवम्! (तस्याश्चरणं परिचुम्ब्य) वेत्सि यत्त्वय्येव स्निह्यामीति। प्रसीद तावत्। निराश्रयो मत्सुहृद्रात्रौ समाश्रीयताम्। न कोऽप्यनुतापस्ते भवितेति प्रतिजाने सशपथम्।

**सु.** – (अथ किञ्चिद्द्रुतान्तःकरणा) बाढम्। प्रदास्यतेऽस्मै भोजनम्। गोशालायां भुङ्क्ताम् तत्रैव च शेतां नक्तम्।

**कु.** – (सरोषम्।) अहह! गोशालायां बहिष्कृत इव? चाण्डाल इव? कुशुनक इव। भवतु तावत्। अहमपि तत्रैव स्वप्स्यामि भूतले, प्रदास्यामि चास्मै मत्खट्वाम्।

**सु.** – कुतः काराया विमुक्तामात्रो कलहायसे सह मया? किमिति दुर्भाग्यां मामाकुलयितुं प्रवृत्तोऽसि। देवालयं सत्वरमागच्छ। अहं तावत्प्रदक्षिणां देवतागारमभितो विधाय त्वां प्रतीक्षमाणा तत्रैव स्थास्यामि। श्रूयते घण्टाघोषः। गन्तव्यं मयेदानीम्।

इति व्याहृत्य द्वारं प्रति प्रथस्थे सुनीतिः। भग्नमनोरथं बटुमनुकम्पमानः–

**रा.** वत्स, मा स्म शुचः। निवसतु महानुभावोऽयं मद्गेहे। नववस्त्राण्यपेक्षतेऽसौ।

**सु.** – (सपदि परावृत्य) वत्स, त्वत्प्रकोष्ठेस्थापिता पेटिका मे सावधानं रक्ष्यताम्। तदभ्यन्तरे निहितं सर्वमेव मद्द्रव्यम्। (इति सरभसमादिश्य सत्वरं निरगात्।)

**कु.** – (सनैराश्यम्।) अहो कठोरता प्रकृत्याः शिरीषपुष्पकोमलहृदयाया जनन्या मे। सत्पथस्यादर्शभूतो मत्सखा नीचात्मेव परकीयधनमाहरेदिति कुत्सितो विचारस्तदन्तः प्रविष्ट इति चेखिद्यते मच्चेतः। (सतिरस्कारम्) पादाङ्गुष्ठेनापि न तत्स्पृशेत् सः।

**रा.** – वत्स! प्रायेण भूयिष्ठाः सदङ्गना बन्दिवर्गाद् बिभ्यति।

इत्युक्तमात्रे रामदासेन 'नाहमेतामुपालभे वा' इति द्विरुदीरितं वचोऽश्रावि सहसा। तत्क्षणं च व्यलोकि देहल्यामेकः पञ्चाशद्वर्षीयो

बन्दिवेषधार्यनावृतशिरा अनुपानत्कः श्मश्रुलः पुरुषः।

**कु.** – (सहर्षम्) आः! आगम्यताम्! आगम्यताम्! सखे कदाऽऽयातोऽसि? कुतः प्रविष्टोऽसि?

**गृहाभ्यागतः** – कारायास्तव निर्गमनोत्तरमिह न चिराच्चत्वरं संप्राप्य पृष्टद्वारेणालक्षितः प्राविशम्।

**कु.** – (रामदासस्य कर्णे) तदनेन संलापो नः श्रुतः स्यात्।

**गृह.** (तस्य पृष्ठे हस्तं विन्यस्यन्) वत्स! आस्तां तावत्। मा ग्लपयात्मानं वृथा।

**कु.** – आयासेनोपलब्धं स्यात् सदनमिदं त्वया। अपरिचितावसथोपलब्धौ निपुणोऽसि सखे।

**गृ.** – विंशतिवत्सरोत्तरमप्यवलोकितस्य स्वचित्रस्याभिज्ञाने किं नाम नैपुण्यं द्योतेत।

**कु.** – तत्परिचितं गृहमेतत्ते?

**गृ.** – यथात्मानं तथैवावैमि किलेदम्।

**कु.** – (विस्मितो रामदासं संबोध्य) कथमेतत्संभाव्यम्।

**रा.** – स्वयमेव तदाख्यास्यति महाभागः

**कु.** – अथ मदम्बापि परिचिता स्यादस्य।

**रा.** – अथ किम्।

**कु.** – (सखेदम्) तत्किं भवद्भिर्न विज्ञापिता सा?

**रा.** – यतस् 'त्वत्तादात्म्यरहस्यभेदं भगवत्याः सुनीतिदेव्याः पुरो न करिष्ये' इति तस्मै चिरात्प्रतिश्रुतवानहम्।

**कु.** – तत्तादात्म्यम्? (ससंभ्रममुभौ तौ निरीक्षमाणः) कुतस्तद्रिरक्षिषुस्त्वम्? कथय विशकलय्य सर्वम्।

**गु.** – वत्स! सर्वमेव वृत्तं ते कथयिष्ये। मद्दर्शनात्त्वन्माता संक्षुब्धा भवेदिति शङ्कयोपस्थातुमिह नैच्छम्। परं प्रतिश्रवस्य मे भङ्गो मा भूदिति

समायातोऽस्मि।

**कु.** – कुतः संक्षुब्धा भवेदम्बा? ऋजुस्वभावाऽन्वर्थनामा किल मत्प्रसवित्री।

**गृ.** – वत्स, साक्षादेषा भगवती क्षमादेवतेति विदितमेव। तव जन्मतः प्रागेव परिचितेयं मे।

**कु.** – (सविस्मयम्) मज्जन्मतः प्राक्?

**रा.** – तथैव।

**कु.** – (उभौ निपुणं निरीक्ष्य) क एषः? कस्त्वम्?

**रा.** – (मन्दमन्दम्) नास्त्येष तव जनकेतरः।

**कु.** – (प्रोच्चैः पुनः पुनः प्रहस्य) मज्जनकः? कुतो मां विप्रलब्धुं प्रवृत्तौ स्थः। अलं क्ष्वेलया।

**गृ.** – यदि सजीवोऽहमिति विश्वसिषि तत्तव पिताहमित्यपि विश्वसिहि।

**कु.**–कुतस्त्वया नोक्तं पूर्वमेतत्? किमेतद्गूढम्? आबाल्यान्मदीयतात–पादा धूमशकटे केनचन साध्वगेन निहता इति निवेदितोऽहमम्बया। (प्रहस्य पुनः पुनः) नहि, नहि, सखे नर्मप्रियः संजातोऽसि बन्धनविमोचनात्। त्वां जीवन्तं जानती चेन्मज्जननी विना त्वद्दर्शनं क्षणमपि न प्राणानधारयिष्यत्। न ह्येकोऽपि न दिवसो व्यतीतस्तमचिन्तयन्त्यास्तस्याः।

**हरिः** – (सखेदम्) हन्त, न व्यजानात्सा यदहं कारायां वासित इति।

**कु.** – परं प्रातरेवाद्य प्रोक्तं त्वया यन्निराश्रयं मां न कोऽपि प्रतीक्षत इति।

**गृ.** – वत्स, सत्यमेव तदपि। (मन्दस्वरेण) विंशतिं वर्षाणि मृतकल्पः स्थितोऽहम्।

**कु.** – अथ को निहतो धूमयाने। अपि त्वया....नहि, नहि।

उदयेद्दिवाकरः पश्चिमदिशि, निशापतिरपि गगनतलात्पुष्पवृष्टिं निपातयेत्परं पुण्यसञ्चयस्य प्रसवेन त्वया घोरमिदं कृत्यं व्यधायीति स्वप्नेऽपि न चिन्तयेयम्। तथापि कुतस्त्वामाजीवं कारायां न्यक्षिपन्नाधिकारिणः।

**हरिः** – वृत्तान्तानुमेयप्रमाणादेव। (ललाटं प्रमृज्य) हन्त, कथयिष्यामि क्रमेण सर्वं ते।

**रा.** – उपविशतु तावत्। दीर्घाध्वानं पादचारिणानेन श्रान्तेन भाव्यम्।

उपविश्यतामुपविश्यतामित्युक्त्वा करमादाय हरेः कुमारो दोलायां तं समुपवेश्य तद्वृत्तशुश्रूषोत्कण्ठितस्तत्पार्श्वे पर्याकुलो यावत्तिष्ठति तावत् पूर्ववृत्तं कथयितुमारभत हरिः।

**हरिः** – 'अपि तव जनन्या कदाचित्कथितं ते यत्त्वज्जन्मनः पूर्वमेकदा व्यवसायगवेषपरो धूमयानेन नगरान्तरं प्रस्थितः पुनश्च गेहं नायात इति। (तथेति कुमारेण प्रतिपन्ने) समयेऽस्मिंस्तपस्विन्यानया निजावशिष्टैकाभरणम् केयूरं विक्रीयानीता मत्प्रवासाय पर्याप्ता मुद्राः। ता आदाय प्रतस्थेऽहमितः। अथ प्रचलति सवेगं धूमयाने घोरदुश्चिन्तासन्तानेनसहसाऽऽक्रान्तोऽभवम्। येभ्यः कुसीदिकेभ्योऽस्मद्भृतये वैकल्यादेकमात्राहाराभ्यामावाभ्यां कथं कथमपि प्राणान् धारयद्भ्यामृणं गृहीतं तेऽमी वितीर्णधनं प्राप्तुं प्रत्यहमिह समुपजग्मुः। आसीदत्तदा तव जननी प्रसवोन्मुखी। इति चिन्ताग्निपरितापाभिभूतो धूमयाने उन्निद्रनेत्रः स्थितवाहनम्। व्यचिन्तयं च। अहो सहाध्यायिनो मे मदपेक्षया न्यूनाभ्यस्ता अपि स्वस्वव्यवसायेषु लब्धवर्णाः। परं दैवोपहतस्य मे चिरं कृतदीर्घायासस्य प्रयत्नाः सर्वेऽपि नैष्फल्यमेव प्रापुः। हन्त इदानीं भिक्षापात्रहस्तस्य द्वाराद्द्वारं पर्यटनसमयः मे समुपस्थितप्राय' इति।

अत्र रुद्धकण्ठेऽस्मिन् विरतवचसि 'गहना कर्मणो गति' रिति रामदासः सानुकम्पं दुःखग्रस्तं मित्रं सान्त्वयितुं भगवतः श्रीकृष्णस्य सूक्तिरत्नमुदैरयत्।

**हरिः** – ''व्यचिन्तयमहं जन्मान्तरे किं नाम घोरपापं व्यधायि मया

यस्य फलमनुभूयतेऽस्मिजन्मनि। ततश्च 'गुरुणामभिमतं तिरस्कुर्वाणान्मनुजान् कुलदेवता न हि क्षमत' इति सुनीत्या भूयो भूयः समुदीरितं वचोऽस्मरम्। विपज्जालमिदं ध्यायतो मदन्तर्लीना काऽपि वाक्सहसा मामवोचद्यथा–'यावत्तव दिवंगताया मातुः प्रतिज्ञा न त्वया निर्वर्तिता स्यात् तावदापत्परम्परामेव त्वमनुभविष्यसी' ति। क्रमेण तावत्कस्मिंश्चित् स्थानके धूमशकटान्तरं प्राविशम्। प्रकोष्ठेऽस्मिन्नेक एव गाढनिद्रितः सहाध्वगो व्यलोकि मया। धूमयाने महावेगेन सखडखडशब्दं धावति सरभसमनवरतं प्रकम्पितोऽपि मूर्छित इव पान्थोऽयमविच्छिन्ननिद्रः काष्ठपीठे शयित एव स्थितः। कतिपयक्षणोत्तरं कुसुमशबलमिव तारकितं वियदराजत। न चिराच्च कृष्णपक्षकलावानमृतदीधितिः पाण्डुरपिङ्गलद्युतिर्धृतकषायाम्बर इव संजातनिर्वेद इव विभावर्याः पराङ्मुख इवाध्यतिष्टदन्तरीक्षम्। क्रमेण विगलितोदयरागो द्विजराजोऽम्बरापगावगाहमानो धौतसिन्दूर इव धूमयानस्य गवाक्षतः स्वपाण्डुधाराभिः सुप्तस्य पथिकस्याननं प्राक्षालयत्। अहं तु सुप्तस्य निस्तेजो मुखं दीर्घं निरीक्षमाणः। संमुखीने विष्टरे स्थितवान्।''

अत्र क्षणं विरतवचसि हरौ 'क आसीत्पुरुषोऽयम्? भवतः कारावासस्य कः संबन्धोऽनेने' ति तद्वार्तायामविश्वसन्निव बटुरवादीदधीरम्।

**हरिः** – (निर्व्याजम्) वत्स, न खलु मिथ्यावार्ताजालं विरच्यते मया। निद्रिताध्वगस्य मृत्युकल्पेन वैवर्ण्येन तन्निश्चलत्वेन चाकृष्ट इव कुतूहलात्तमुपेत्य निपुणं तन्मुखं न्यरूपयम्। तावदुत्पादितो नादोऽपि मया चछत्राग्रेण। परं भग्नस्वापो नाभूदेषः। ततश्च सशङ्कं तदुपरि नत्वा निर्गतश्वासोऽयमित्यबोधि मया। कोऽयं नु पान्थः? कथमवसन्नदेहः समभूदिहेति कुतूहलपरवशस्तमचालयम्। परं दारुखण्ड इव निश्चल एवायमासीत्। पुनरपि सरभसमेतं यावद्विचालयामि तावत्तदुपबर्हादधश्चर्मनिर्मितं कोशमेकं न्यपतद् भुवि। कोडीकृतं तदन्तरे सावरणं पत्रमेकमपश्यम्। आवरणोपरि पान्थस्य नामधेयं वासस्थानं च लिखिते आस्ताम्।

**कु.** – क आसीदेषः?

**हरिः** – केनचिदविज्ञानेन क्षेत्रपतिना पश्चाम्बुदेशीयेन भाव्यमनेनेति तन्नामतस्तर्कितं मया। कोशेऽस्मिंस्त्रिंशतमुद्राङ्कितपत्रपुञ्जं निवेशितमासीत्। व्यचिन्तयं च। अहो! हस्तगतेयद्द्रव्यो वराकोऽत्र मद्वितीयो विगतासुः। केयं घटना विधेः। आगामिनि स्थानके कोऽपि चपलहस्तः पथिकोऽत्र प्रविश्यैनं द्रव्यभाराल्लंघयिष्यति। 'कुत आगतोऽयं, क्व गन्तुं प्रावर्तत, कथमकस्माद् गतासुरभूदि' ति ध्यायतो ममान्तराभासमयतामापद्यमाना यावत्तव दिवंगताया मातुर्व्रतं न निर्वर्त्स्येत तावद्विपत्परंपरामेवानुभविष्यसी ति पुनः पुनः हृदि मे कापि वाक् प्रादुरभूत्। अवधूय हृद्गतां वाणीमिमां प्रस्तुतविषयमधिकृत्य समधिकजिज्ञासाविवशः कोशस्याभ्यन्तरे पुनर्निपुणं निरीक्ष्य तद्धस्ताङ्कितं पत्रमेकमपश्यम्। लिखितं चासीत्तस्मिन्। 'दैवयोगाद्यस्य कस्यापि करतले त्रिशतं मुद्रा इमा निपतेयुस्तेनोपयुज्येत द्रव्यमिदं भृतये कस्याप्यकिञ्चनस्य देवताराधनार्थं वा। नास्ति मे जगत्यां कोऽपि बान्धवो न वा सुहृत। दैवाधीनायां मृतौ मे न कोऽपि प्रतिवाच्य' इति। पत्रमेतत्पाठं पाठं व्यचिन्तयम्। 'अपि घटनेयं वैकल्यग्रस्तस्य दुःखोपशमनाय मे विधिना विरचिते'ति। परं झटिति विचारमिमं विधूय कोशे पत्रधनादिकं निवेश्य यथापूर्वं प्रेतस्योपधानस्याधः पुनर्निधाय च संमुखीनविष्टरे कृतपदः स्वप्तुं प्रायते। परं निद्रादेव्या परित्यक्तस्य चिरमुन्निद्रनयनस्य चेतसि मे क्रियासमभिहारेण स एव ध्वनिरनवरतं प्रत्यध्वनत्। सपत्नीकस्य मे द्वाराद्द्वारमटतस्तुम्बीकरस्य प्रत्यासन्नसम्भवस्य तव बुभुक्षयाऽक्रन्दतश्च चित्रयुग्मं मच्चेतश्चक्षुगोचरतामगमत्स्फुटम्। दुर्निवारचिन्तासन्तानार्दितोऽहं जगत्यामात्मानमसहायमपश्यम्। निर्गतासुः पान्थोऽपि मां साग्रहं प्रावर्तयदिति व्यभावयम्। 'भोः सुयोगोऽयं दैववशात्समुपस्थितोऽस्ति ते। तमपयापयसि चेत्तदन्यः कोऽपि तेनात्मन उपकुर्यात्। श्लाघ्यः खलु तव हृद्गतविषयः। वित्तमेतद् गृहाण क्षुधार्तां दयितां भोजय च। प्रसादय वा कुलदेवतामात्मन' इति प्रेतो मां प्राणूनुददिव। मदन्तर्गतध्वनिं मृताध्वगस्यादेशं च प्रतिरुरुत्सुरप्यहं मत्कञ्चुककोशगते घटीयन्त्रे सार्धद्विवादनसमयमङ्कितमालोक्य न चिरान्निर्दिष्टस्थानं धूमशकटः

समासदेत्। तत्क्षणस्याप्यपव्ययो मा भूदि' ति निश्चितं मया। यदृच्छायोपपन्नः सुयोगोऽयं भाविदुःसहानर्थसन्दोहं निवारयेदिति विलक्षणव्यवहारे प्रवृत्तोऽभवम्। न चिरात् पारस्परिकवस्त्रपरिवर्तनं विधाय पथिकस्य कोशाच्छतत्रयं मुद्राणां चापहृत्य न्यवेशयं तत्स्वपरिवर्तितकञ्चुकस्य कोषे। ततश्च तद्धस्ताङ्कितं पत्रं विदार्य पत्रखण्डानि बहिरक्षिपम्। तदनु मन्नामवासस्थानाङ्कितपत्रिकां घटियन्त्रं च पथिकस्य रिक्तकोषान्तर्विन्यस्य यथापूर्वं तदुपबर्हस्याधः स्थापयित्वा तन्नामाङ्कितं रिक्तपत्रावरणं मत्कोशे न्यधायि मया।

**कु.** – (विस्फारितनयनः) अहहह! किं वक्ष्यत्यम्बा निशम्यैतत्!

**रा.** – 'त्वत्स, तव जनकेन स्वकीयनाम्नः सहाध्वगस्य धनेन विनिमयः कृत' इत्येव सा वक्ष्यति।

**हरिः** – अहो! महापातकेनानेनात्मानं दण्डार्हं कृतवाहनम्।

इति रुद्धकण्ठमुदीर्यं हस्तपल्लवाभ्यामाच्छादयत्स्वबाष्पाश्रुमिलितमाननम् हरिः।

**रा.** – (सानुकम्पम्) सखे, क्षणिकविभ्रम एवासीत्किलैषः। कृत्येनानेन तु व्यथाजातं सोढं त्वया विंशतिं वर्षाणि खलु।

**कु.** – अनेनाजीवं कारायां न्यक्षिपंस्त्वां जाल्मा अधिकारिणः?

**हरिः**– प्रथमतस्तावद् वृत्तान्तानुमेयप्रमाणात्ततश्च परधनाहरणस्याभ्युपगमात् स्वयमेव दण्डार्हमकारयमात्मानम्।

**कु.**– घातकस्त्वमिति कथं प्रमाणीकृतमधमैस्तैः? तव धूमयानप्रवेशात्प्रागेव पथिको मृत आसीदिति कुतस्त्वया नोक्तम्?

**हरिः** – आत्मानमवितुं न मया व्यवसितम्। शतत्रयस्य मुद्राणामुद्गमं मा जानीयात्तव जननीति। यद्यात्मानं घोराभियोगादभिरक्षितुं प्रायतिष्ये तदा मत्तादात्म्यरहस्यभेदोऽप्यभविष्यदेव।

**कु.** – तात! तर्हि वधस्तम्भेऽपि त्वामारोपयिष्यन् रक्षिणः।

**हरिः** – अयुक्तकारिणमात्मानं दण्डयितुमिच्छन् सर्वथा

सन्नद्धोऽहमासं प्रेयस्या विश्वासनिरासान्मरणं श्रेय इति। नास्ति हि जगतीतले तदपेक्षया प्रशस्तं स्त्रीरत्नमन्यत्। सेयं साक्षान्मूर्तिः सावित्रीदेव्याः। दिष्ट्या पथिकस्य विषये गवेषणपरो न कोऽप्यासीत्।

कु. – हन्त! तन्नाम चाङ्गीकृत्य विंशतिं वर्षाणि कारायां यापितानि त्वया। अहो किमियं निष्ठुरघटना विधेर्यदियत्समीपस्थमपि त्वां लोकान्तरगतममंस्ताम्बा।

हरिः – जीवन्नपि मृतप्राय आसमहम्।

कु. – (रामदासं संबोध्य) सर्वमेतद्विदितमासीद्भवताम्। किमिति न तत्कथितं मदम्बायै भवद्भिः?

हरिः – वत्स! न तव पितृव्योऽत्र दोषास्पदम्। तव मातुरवमाननं मा भूदिति मद्रहस्यभेदं मा स्म कार्षीरिति प्रार्थितवानहम्। मन्मरणोदन्तो हि दुःखदोऽपि कारादण्डवृत्तान्न दुःसहतरो भवेदस्या इति।

कु. – अयि पितृव्य! अपि सा नगरान्तरात्तन्निवर्तनाभावान्न चिन्ताकुलाऽभूत्।

रा. – दिष्ट्या त्वत्पितुर्निर्गमाद् द्वित्रदिनोत्तरं त्वां प्रासूत सा। हन्त, पतिं सोत्कण्ठं प्रतीक्षमाणायै वृत्तपत्रे तस्य मरणोदन्तोऽपाठि मयेत्यलीकमेवाकथयं तत्रभवत्यै। अपि च धूमयाने स्थितस्य तव पितुः शवस्य दाहस्तदौर्ध्वदैहिकक्रिया च तद्वासस्थानानभिज्ञतया रक्षिभिरेव निर्वर्तितेति सव्याजं न्यवेदि मया तपस्विन्यै तस्यै।

कु. – (हरिम्) किमिति मे कारायां वृत्तमिदं न कथितं भवता।

हरिः – (सविषादम्) इदानीमपि त्वं कारायां नावेदिष्यः। अहो! स्वतन्त्रतायाः परमानन्दः! अहो विमुक्तेर्विमलानिलनिःश्वसनम्! पुनरागच्छेयमिहेति स्वप्नेपि न मया तर्कितम्।

इत्युक्त्वा हस्ताभ्यामावृत्याननं मुक्तकण्ठमरोदीद्धरिः। क्षणोत्तरं किञ्चिदुपशमितदुःखावेगो 'हन्त! इदानीं तु धरणिभारभूतो मृत्पिण्ड इव निरुपयोगः समुपस्थितोऽस्मी' ति न्यगदत्स सगद्गदम्।

कु. – (बाष्पपूरितलोचनः) मैवं मैवं वदतु। पत्नीप्रणयिना भवता स्वजीवितं तृणमिव निक्षिप्य चरमो यज्ञो व्यधायीति धन्योस्ति भवान्। अपि बिभेषि कुत्सितात्मनां प्रतिवेशिनां निन्दायाः? अलं भिया तात। स्वार्थत्यागेन पूजार्हभूतोऽसि। क्षुत्पीडितकुलाभिरक्षणाय कारावासोऽङ्गीकृतो भवेति कथयिष्यामि तेभ्यः। विद्यार्थिभ्यो विद्याप्रदाने त्वया सर्वस्वं व्ययीकृतम्। नैष्फल्यं गतेषु च प्रयासेषु न कोऽपि ग्रामेऽस्मिन् साहाय्यं ते व्यतरदिति।

हरिः – वत्स, किमाख्यानेनानेन? विपुला हि पृथिवी। पर्याप्तं च पृथिवीतलं विश्वेषां समाश्रयाय।

इति भणिते हरिणा समाकर्णि तावद्गृहाद्बहिः पादविन्यासध्वनिः। न चिराच्च प्रवेशद्वारमुदघाट्यत। तदाकर्ण्य 'सावधानम्। समायातास्ति सुनीतिदेवी'– त्यब्रवीद्रामदासः।

कु. – (ससंभ्रमं सहर्षं च) परमानन्दार्णवेऽसौ निमङ्क्ष्यतीति नास्ति सन्देहलेशोऽपि।

रा. – शनैः शनैरेव सर्वमिदं वृत्तं निवेदनीयं तस्यै। (हरिम्) सखे, प्रकोष्ठान्तरं गम्यतां क्षणमात्रम्।

इति रामदासस्य वचः प्रतिपद्य शीघ्रं समीपवर्तिप्रकोष्ठं प्रति यास्यन्तं हरिं ''महोत्सवदिवसोऽयं, तात। ब्रह्मानन्दं प्राप्स्यत्येवाम्बा पुनःसङ्गमेन भवता'' इत्युदीर्य सोज्झम्पं कुमारस्तमन्वगात्। सुनीतिर्मुखशालां प्रविश्य 'क्वास्ति वत्स' इति यावत्पृच्छति रामदासं तावद्युवकोऽपि स्वशयनागारान्निर्गतः।

सु. – कथम्? नाद्यापि किं स्नानादिविधिः समापितस्त्वया? पुरोहितश्चिराय त्वां प्रतीक्षते। अरे कस्मिन् कर्मणि व्यापृतोऽस्येतावत्कालम्?

रा. – सहचरेण सार्धं संलपन्।

सु. – सह बन्दिना? (संत्रस्ता) हा! परमात्मन् कथमत्र प्रविष्टोऽयम्?

इत्युक्त्वा ससंभ्रममितस्ततो निरीक्ष्य समीपवर्तिप्रकोष्ठं प्रति यास्यन्तीं

तां न्यवारयत्तरुणः प्रसारितहस्ताभ्याम्।

कु. – (प्रफुल्लवदनः) विद्यतेऽसौ क्वाप्यत्रैव। प्रायो गोशालायाम्। तद्दर्शनेनापारहर्षं यास्यसीति सशपथं ब्रवीति सुतस्ते। अपि च तं भोजयिष्यसे महानसे, मुखशालायामपि। मिष्टान्नपूरितपात्रेण तं सेविष्यसे। तदनु सर्वेऽपि वयं चत्वारः परमपरमानन्दापगापतिमवगाहमानाः सुखं प्लोष्यामहे।

इत्युदीर्य मातुर्हस्तमादाय समार्दवं तं पर्यचुम्बत्प्रमुदितान्तर्बटुः।

सु. – पुनस्त्वां सनिश्चयं वच्मि यदस्मद्गेहे बन्दिनः प्रवेशेन न भाव्यम् इति। (पुत्रस्य प्रोच्चप्रहसनेन रुष्टेव) सद्य एव केषाञ्चित्प्रतिवेशिनां तद्विषये कुत्सितसंवादोऽश्रावि मया। यदि पुरुषोऽयमिहालोक्येत प्रतिवेशिभिस्त–दाधिकाधिकनिन्दापङ्केन लिप्तौ भविष्यावः। (कुमारो भूयो भूयः प्रहसंस्तां परिष्वजते।) हन्त! निर्लज्जता बटोरस्य! तव तातपादास्त्रपयाऽमरिष्यन् (रामदासम्) वेत्त्यैतद् भवान्। नहि, नहि। सदोषोऽयं नालोक्येत गृहेऽस्मिन्। निर्गच्छतु शीघ्रम्। (धनकोशादुद्धृत्य रूप्यपादम्) देहि तस्मा एतत्। अनेन किमपि खाद्यं क्रीणातु। निर्गमय तं झटिति। न तुष्येदनेन चेदधिकं प्रदास्यामि। रूप्यार्धं, रूप्यमपि। परं सपदि निर्गच्छतु वराकोऽऽयम्।

अथ युवको मुहुर्मुहुः प्रसहन् रामदासेन दत्तसंज्ञः प्रकोष्ठं प्रति यावद् गच्छति तावद् गृहाणैतानि पञ्च रूप्याणि देहि तानि च तस्मा इति सुनीतिरब्रवीत्। परं मातुर्वचनमश्रुण्वन्निव ततोऽभ्यधावद्युवा।

सु. – अहो, मौर्ख्यं सुतस्य मे। देवमन्दिरनिर्मितेः प्रतिज्ञापि निरर्थिका भविष्यत्यद्य। विश्वगेव नतशिरसा स्थेयं मया। हन्त! हन्त! बालिशता बटोः।

रा. – नहि, नहि। भवत्या नन्दनः साधुरेव। तरुणानां प्रतिभायुजामात्मबोधो वैशिष्ट्यं भजति खलु।

सु. – (तं निरीक्षमाणा ससन्देहम्) किमित्येवं भाष्यते भवद्भिरद्य? नावगम्यते मया भवदीयाऽपि वाक्।

तस्मिन्नेव क्षणे प्रकोष्ठान्ततो निर्गतो निर्गतः पितृव्य निर्गत इत्याक्रोशन् ससंभ्रमं मुखशालां पुनः प्राविशत्कुमारो विषण्णतमः।

सु. – को निर्गतः।

कु. –'' मदीयं मित्रम्। मदीय......''

सु. – अथ किं त्वयाधिकमपेक्षितम्। अपराधिनो न कदापि विश्वसनीया इति कथितमेव ते पूर्वं मया।

कु. – अम्ब, नासीदपराधी मत्सखा। हन्त! विनष्टमेतं न कदापि द्रक्ष्यामि पुनः। 'नाभिमतोऽहमत्रे' ति व्यजानात्। (इति वदन्नरोदीन् मुक्तकण्ठम्।)

रा. – नातिदूरं गतः स्यात्। अत्रैव क्वापि भाव्यं तेन।

कु. – न क्वापि स वर्तते। सर्वत्रैव गवेषितो मया। गोशालायामपि।

इति वदन् भूतले निपात्यात्मानं युवकोऽधिकाधिकमाक्रन्दत्। पर्यन्ते पुत्रस्य शोकस्य स्वयमेव कारणीभूतेति तत्सविधमुपविश्य भुवि तं च समार्दवं संस्पृश्य–

सु. – अलमलं रुदितेन। आगच्छतु तव सुहृदत्र। प्रायो निष्कृत्युत्तरं सर्वमेव साधु भवेत्। उत्तिष्ठ स्नापयात्मानं च शीघ्रम्। (रामदासम्) अन्विष्यतां तावत्।

रामदासो गृहात् सपदि निर्ययौ।

घटिकाद्वयोत्तरं निष्कृतिविधौ यथाविधि देवमन्दिरपूजकैर्विहिते कुमारः सह जनन्या सदनं निवृत्तो मुखशालायां चिरमितस्ततोऽस्वस्थो गतागतं कृतवान्। स्वल्पिष्टनादश्रवणाद्भूयो भूयो वातायनं सरभसमधावच्च। क्रमेण रामदासः शुभ्राम्बरधारिणा हरिणा मुण्डितश्मश्रुकूर्चेनानुगम्यमानो मुखशालां प्राविशत्। प्रविष्टमात्रं हरिं कुमारो यावद्गाढं परिष्वजते तावत्कुलदेवतोपादानाय पुष्पमोदकदीपादिसम्भृतं पात्रं धारयन्ती करपल्लवे सुनीतिः हरिं विलोक्य देहल्यामेव भ्रष्टसंज्ञेव स्तिमितलोचनोत्कीर्णकाष्ठमूर्तिरिव भूलग्ना क्षणं तस्थौ। पूजाभाजनं तत्करादपासृपत्क्षितितले बद्धाञ्जलिर्हरिर्यावत्तामुपैति तावत्पिशाचावलोकनाद्भयग्रस्तेव सनियताक्रोशं सा न्यपतदधः। तदनु

हरिणा समार्दवं संबोधिता सा विस्मयभयाकुलान्तरा तं निरीक्षणमाणा चिरं बद्धवागवस्थिता। क्रमेण भर्तृनन्दनाभ्यां शूश्रूषिता रामदासेन च सावधनं बोधितयाथार्थ्यां शनैः शनैः स्वास्थ्यमवाप सुनीतिः।



# १२. निशीथबलिः

निशीथिन्यवसितप्राया। साहिबझादा-हबिबखान्नाम्नः कस्यचिन्मुस्लिमाभिजातस्य श्रीलस्य सुरतनामनगरनिवासिनः सौधस्य मुखशाला पूर्णान्धतमसावृताऽऽसीत्। नीलवर्णकार्मिकक्षौममयजवनिकाभिर्नैकभीष णपित्तलमूर्तिभिश्च सा दिवापि निरानन्दा रात्रौ च विविधाकारमञ्चसञ्चयेन शवपेटकसमूहयुक् स्मशानभूरिव भयानकालोकं भेजे। तेष्वेकस्मिन्मञ्चे श्रीलस्यात्मजा झुलेकाभिधा सोत्कण्ठं कमपि प्रतीक्षामाणोपविष्टासीत्। प्रत्यासन्नविंशतिवर्षा पुरातनमोगलसाम्राज्यकालीनैश्चित्रकारैः करिदन्त आलिखितानां रमणीनां चित्रेभ्योऽपि रमणीयतरा, मृणालगौरी, कुन्दकोरकाग्रदन्ती, नवनीतकोमलवर्णच्छविः शशिकलेव नवयौवनारम्भपदाङ्किता, प्रवालाधराऽऽयतपक्ष्माच्छादितदेदी-प्यमाननयनयुगला, शोभनसान्द्रनीलकुन्तलालकमण्डितचारुशीर्षका बालिकेयं विनोदाभिलाषित्वमात्मनो नयनापाङ्गविभ्रमेण सलीलस्मेराननेन च स्पष्टीकृतवती। स्वाभिजातोचितं सगौरवमावरन्ती प्रगल्भा चाल्पवयस्काऽपि वाक्पटुर्विकसिताब्जवदना सोत्साहा नितरां मोहिका सर्वथाऽभूत्। जन्मतो मातृहीनायाः पितुर्लालनामृतसुखं न कदापि निरवेशि तया। धनाढ्योऽयं पिताऽस्या हि दिवा द्यूतादिकलाकलापपारगैः सहचरैर्विनोदितहृदयो नक्तं च वाराङ्गनाभिर्नृत्यसङ्गीतादिविलासनन्दितोऽ-वधूतकन्यकाचिन्तनःकालमयापयत्। जन्मन एव प्रभृतीयं पुरातनवृद्धपरिजनस्य गेहिन्या लालिता पोषिता च। शैशवे केनचन परिणतवयस्केनाध्यापकेन प्रापितप्राथमिकमातृवाक्शिक्षा ततश्च कयाचित् सुज्ञयाऽऽङ्ग्लदेशीयाऽधिगमिता सकलाङ्ग्ललिपिज्ञानं क्रमेण च वाचनलेखनादिनैपुण्यं काव्येतिहासभूगोलशास्त्रपाटवं चित्रकलादिचातुर्यं, पाश्चात्त्यसङ्गीतकौशल्यं प्रसिद्धपाश्चात्यकथाख्यायिकारसग्रहणपाटवं च। सकलमिदं शिक्षणं सम्प्राप्यापि विशालसौधे पितुः प्रतिपन्नपुरातनरूढैः कन्यान्तःपुरे बन्दीव निरुद्धसर्वबहिःसंस्कारा कथमपि

कालमगमयद्वालिकेयम्। अत्रान्तरे तस्यामाङ्ग्लाध्यापिकायां कार्यवशात्स्वदेशं गतायां झुलेकाया विविक्तं वृद्धिमगमत्। परिणतवयोवशादन्धीभूतां तस्या धात्रीं, धात्र्याश्च स्थविरपतिं, तयोश्च सुतमुस्मानाभिधमन्तरेण न कोऽपि कुमार्या दृक्पथमगात्। समानवया उस्मान सार्धं तया पोषितो मातृवाचि चाध्यापितोऽनुमोदित-कन्यान्तःपुरप्रवेशोऽप्याङ्ग्लाध्यापिकया तत्साहचर्ये न कदाप्यनुमोदित आसीत्। अपरं च सम्प्राप्तपाश्चात्यशिक्षणायै दारिकाया अपि भृत्यकल्पस्य तरुणस्यास्य साहचर्यं न भृशमभ्यरोचत।

अथाङ्गलाध्यापिकाया निर्गमादराभ्य झुलेकायाश्चेतस्तरलतरलतां प्रापत्। न सङ्गीतं न वा कथापाठस्तस्या विनोदप्रदोऽभूत् बाह्यजगद्दिदृक्षचिन्तनेनैव दिवानिशं सा गृहीताऽभूत्। कथं नाम स्वेच्छया पर्यटितुं प्रभवेयमिति प्रतिक्षणं प्रादुरभूदभिकाङ्क्षा तच्चेतसि। अत्रान्तरे तत्पाणिग्रहणसंधानं कस्यचिद् देशान्तरवासिनः श्रीलस्यात्मजेन पित्रा निश्चितं वरयात्रा च सप्ताहाभ्यन्तरे सुरतपुरमुपस्थास्यतीति वृत्तं झुलेकायाः श्रवणपथेऽकाण्डं न्यपतत्। अनवलोकिततरुणेन सार्धं पाणिग्रहणमनिच्छन्ती बालिकेयं व्यतिकरमिमं निवारयितुमनेकोपायान् व्यचिन्तयत्।

अथ सायमेकदा वातायनोपकण्ठगतां बहिरवलोकनपरां तामुस्मान् धात्र्याः पुत्रो नवयौवनचुम्बितशरीरो वर्णेन गौरः प्रचण्डबाहुदण्डः सुनद्धस्नायुः समुपेत्य विदिततन्मनोरथोऽब्रवीत्। 'भर्तृदारिके, आज्ञापितोऽस्मि स्वामिना कृतवाङ्निश्चयस्य वरस्य ते पुरं गत्वा सह वरयात्रया निवर्तस्वेति। तस्मात्प्रातस्तरां श्वः प्रस्थास्ये'। इत्याकर्ण्य झुलेका क्षणं विमृश्याब्रवीद् 'अहमपि गृहान्निर्गन्तुकामास्मि। अपरिचिततरुणेन सह विवाहाद्वरं मरणमपि। को जानाति कीदृशः स्यादसौ। प्रायः पङ्गुः, प्रायः स्थविरो गलिताङ्गः, प्रायोऽन्धोऽपि स्यात्। उस्मान्, नय मां सहात्मना। क्वचिन्मार्गे विसृज्य मां निर्दिष्टस्थानं प्रति व्रज। भद्रमुख, बहूपकृता भविष्यामि ते। सर्वाभरणानि चात्मनस्ते वितरिष्यामि'। इत्युक्तो युवा प्रत्युवाच किमिति ब्रवीषीत्थं विवाहात्पूर्वमपि। झुलेका प्रत्यवदत् 'पाणिग्रहणमेतत्प्रतिहनिष्याम्येव। अलं पञ्जरनिवासेनात्र। श्वासनिरोधकेन

जीवनेनात्र प्रहतास्मि खलु। मदीयभूषाजातेन भूरिधनमधिगमिष्यसि’ इति।

अथ तरुणमान्दोलितमानसमालोक्य पुनर्लोभयितुमुपाक्रंस्त सा। ‘अथवा स्वातंत्र्यं यदि मे दीयेत तर्हि तवापि भार्या भवेयमि’ ति कलमधुरप्रलापिन्या व्याहृतं कालतन्त्रज्ञया झुलेकया। तदाकर्ण्य युवको विस्मयेन स्तम्भित इव प्रत्युत्तरमदत्वा क्षणं यावद्बद्धवाक् स्थितः। पुनश्च मधुरगिरा तस्याः प्रणुन्न इवानङ्गविकारेण स्पृष्ट इव च प्रफुल्लाननः प्रत्यभाषत। ‘भर्तृदारिके, सम्भावितोऽस्मि किल भवत्याः कृपाकटाक्षेण। निरन्तरमेव भवत्याः सेवापरः स्थास्यामि’। इति मुकुलितहस्तः प्रतिश्रुत्य ससम्भ्रमं पुनरब्रवीत्। ‘निशीथेऽद्य बलीवर्दयुक्तशकटं सौधस्य बहिः सज्जं कारयिष्ये। भवती सर्वाभरणवसनादिजातं सञ्चित्यात्रैव प्रतीक्षतां माम्’। इत्युक्त्वा सप्रश्रयं यथोचितं दारिकायै त्रिवारमभिवन्द्यापासरत्।

अथ परिजनेनानुपलक्ष्यमाणा झुलेका सञ्चित्य समस्तमहार्हरत्न–खचिताभरणजातं रुचिररुचिराम्बरनिकरं च पेटिकायां सम्पुटीकृत्य भाविस्वातन्त्र्यलाभमुत्प्रेक्षमाणा कन्यान्तःपुरतो विमुक्तिमात्मनश्च हर्षेण, विविधभावभङ्गिभास्वरवदना पुलकिताङ्गी बभूव। अथ प्रासादेऽस्मिन् निशीथिन्यां निर्मक्षिकं जाते तरलतरलचित्ता स्तोकनादेनाप्यस्वस्था बद्धदृष्टिश्च स्थितवती। ततः समुत्थायाभ्यगमत् सा पित्तलमूर्तेः सविधे कालिकादेव्याः पुराणमूर्तिमात्रैकहेतुना रक्षितायाः। निरीक्षमाणा तद्भास्वराक्षियुगलं मुखादवलम्बमानां च तज्जिह्वां क्षणं जोषं तस्थौ। मोहितेव यावत्सा मुहूर्तं निश्चला तिष्ठति तावदनुपलक्षितस्तत्पृष्ठतः प्रादुरभूदुस्मान्। मन्दं मन्दमुद्धाट्य द्वारमुन्नतप्रपदेन प्रविश्य च प्रकोष्ठं झुलेकाया अंसं समार्दवमस्पार्क्षीत्। स्पृष्टमात्रायास्तस्या मुखादुद्गतमीषत्क्रन्दनम्। ‘सावधानम्। मा कार्षीर्निद्राभङ्गं सुप्तजनस्य’। इति कर्णेऽजपत्तस्या उस्मान्। प्रियदर्शनस्तरुणोऽयं सन्नद्धगात्रः शुभ्रवसनानद्धकटितटाधोवसनो धृताजानुदीर्घकृष्णवर्णकञ्चुको निहितशिरो भागैकतुरुष्कोष्णीषः प्रगल्भं कुमार्याः सम्मुखीनस्तस्थौ।

झु. – अरे कियान् विलम्बः कृतस्त्वया। चिरात्प्रतीक्षमाणया मयामन्यत यत्त्वं नायास्यस्येवेति।

उ. – अपि सिद्धाऽस्ति भवती प्रस्थानाय?

झु. – (सशिरश्चालनं तथेति सूचयित्वा) अपि पितृचरणा निवृत्ता गेहम्?

उ. – घटिकार्धं व्यतीतं तेषां गृहानभ्यागतानाम्। परिषेवितोष्णदुग्धैस्तैर्निद्रासुखमनुभूयतेऽधुना। नास्ति मक्षिकापि जागरितेदानीम्। आगम्यतां शीघ्रम्।

इत्युक्त्वा विद्युदुल्काप्रकाशेन कातराभ्यां नेत्राभ्यां परितोऽवलोक्य द्वारं प्रति गमिष्यन् सहसा स्मरन्निव –

उ. – अपि भवत्याऽऽभरणानि गृहीतानि।

झु. – (निजचोलं निर्दिश्य) निःशेषं सर्वमपि मयापहृतम्। (ततश्च चाटुवचसा) सखे, प्रतीक्षस्व क्षणं तावत्। तातपादानां मुखमन्तिमवारं द्रष्टुमिच्छामि।

उ. – मैवं मैवं क्रियताम्। जागरिता भवेयुश्चेत्स्वामिनस्तदा सर्वोऽपि सङ्कल्पोऽस्मदीयो निष्फलोन्मुखत्वमापत्स्यते खलु।

इति तस्यै विज्ञाप्याधीरं सहस्तविक्षेपमुस्मान् सावधानं पुरः प्राचलत्। झुलेका तावत्तन्निर्देशं प्रतिपद्यान्धकारे तमनुयाती मुखशालाया मध्यभागे चित्रकाचमयकोशनिवेशितं प्रकाशचित्रं स्मृत्वा जनकस्यात्मनस्तत्पुरतः क्षणं स्थित्वा–

झु. – तात, स्वस्ति। तव स्थविरस्य विश्वास्यपरिचरस्य सह सुतेन पलायितां मामधिगत्य किन्नु वक्ष्यसि।

उ. – आगम्यतां शीघ्रं घटिकाधिकं हि यानं प्रतीक्षते।

प्रवर्तितेवं तदाज्ञानुसारिणी बालिका युवकद्वितीया मुखशालां निश्शब्दं विसृज्य सौधाभ्यन्तर्मार्गं निभृतमतिक्रम्योद्यानमासाद्य च विशालवटतरुच्छायायां स्थितं शकटमुपेतवती। अवलोक्य तदपूर्वदृष्टं यानं संयुक्तघण्टा–नैकवर्णगुटिकामण्डितबलीवर्दं झुलेका सकौतुमवादीदुच्चैः ‘आः! बलीवर्दयुक्तं यानम्।’ इति सोत्साहं समुदीरितवतीं तां, शकट उपवेश्य जवनिकाश्च सर्वा निपुणमाकृष्य पश्चादधः प्रविश्य च स्वयमुस्मान् सुप्तप्रायं सारथिं ‘यावच्छक्यं बलीवर्दजवस्य तावच्छीघ्रं गम्यतामि’ त्याज्ञापयत्।

अथ निखिलनिशायां यानेनानेन प्रचलन्तौ तौ पञ्चयोजनमध्वानमाप्रातरभिजग्मतुः। कृषिपरो गुर्जरदेशोऽयम्। अथ मार्गे शुक्लतृणराशीन्, जलयन्त्राणि, शालिक्षेत्राणि, पीतसर्षपमण्डितप्राचीराणि च प्रथममेव दर्शं दर्शं झुलेकायाश्चेतः प्रमोदतुन्दिलमभूत्। प्रदेशस्य रामणीयकं जवनिकाछिद्रतोऽविरतं निरूपयन्ती सा जोषमेव स्थितासीत्। मन्दसुरभिशीतलानिलः स्वगृहस्य जुगुप्सावहवातान्नितान्तव्यतिरिक्तो विविधभावनाभिस्तां पर्यपूरयत्। अन्तरिक्षस्य मोहकं परिवर्तनमास्फुरत्पाटलवर्णान्नीलमणेरानीलवर्णं तद्दृष्टिमगृह्णात्। शाद्वलेभ्यो दोहनवेलाशंसी हम्बारवो गोगणस्य समाकर्णि। धेनूनां गुरूधांसि शिरालानि स्रवत्पयोबिन्दुक्षालितभूतलानि जडमवालम्बन्त वालुकापूरितकन्था इव।

झु. – (सविस्मयम्) अहो! अदृष्टपूर्वरमणीयत्वं प्रदेशस्यास्य।

उ. – मा द्राक्षीरतिदीर्घम्।

इति तां निर्दिश्योस्मान् हस्तौ प्रासारयत्।

झु. – (बाह्यालोके बद्धदृष्टिः) कुतो भीतोऽसि।

उ. – (झुलेकायाः सुषममुखपार्श्वबद्धदृष्टिः मन्दस्वरेण) को जानीते किं घटेतेति। पञ्चयोजनमात्रदूरं सुरतपुरादागता वयम्।

झु. – मत्पलायनवृत्तमुपलभ्य किन्नु करिष्यन्ति तातचरणाः। किं वक्ष्यति धात्री तव जनकश्च। अहो दिनाद्दिन, मासान्मासं, वत्सराद्वत्सरं भित्तिचतुष्टयावृते प्रकोष्ठे तातपादानां प्रासादे बन्दीवासस्य वैकल्यम्। प्रकाशानिलस्वातन्त्र्याभिलाषिण्या कथमियान् कालो मया नीत इति न जाने।

अदत्त्वा प्रत्युत्तरमुस्मान् पुरो नत्वा तस्याः करपल्लवं स्वहस्तेन ग्रहीतुं प्रायतत। परं तं निवार्य निपुणं सविरोधं च सा व्याहरन् 'मैवं मैवमि' ति।

उ. – (कामपरवश इव) प्रिये न चिरात्तव पाणिं ग्रहीष्यामि।

अदत्त्वोत्तरं झुलेका सशिरोविक्षेपं तं सविनोदं क्षणं न्यरूपयत्। ततः

झु. – कियन्नामाभ्यलष्यत मयानुभवितुं सर्वमिदं मन्दशीतलसुरभिसमीरणसुखं स्वातन्त्र्यपरमानन्दश्च। अपि मामन्तःपुरपञ्जरे

निरोत्स्यसे।

उ. – नहि नहि, गगनविहारिणी राजहंसीव स्वातन्त्र्यदिव्यसुखमुपभोक्ष्यसे। जगल्ललनाकुलललामभूता त्वमपूर्वसुखातिशयभागिनी भविष्यसीति प्रतिजाने।

इति गम्भीरवचसा साभिनिवेशं शपमानो विनतशरीरो निजानुरागं तस्यै प्रदर्शयितुं प्रावर्ततोस्मान्।

झु. – नैवं नैवम्। मा कार्षीराविष्करणमिदं यावन्निर्दिष्टस्थलं नाभिगतावावां निर्वर्तितोद्वाहौ च।

उ. – त्वत्करकमलस्पर्शानन्दमात्रं दीयतां मे। अपि न बाल्यात्प्रभृति सममावाभ्यां क्रीडितम्?

झु. – (सोत्तरपरिहासम्) अपि न विचित्रं यत्पिहितयानेनापि मम बहिर्विहाराय गमनं निषिध्य त्वत्प्रवेशः कन्यान्तःपुरे तातपादैरनुमोदित इति।

उ. – (स्वमसृणकुन्तलकलापं हस्ते परामृशन्) परं विदितमेव भवत्या यदावामेकमातुः पयः पाययित्वाऽशैशवाद्यमलाविव समं पोषितौ लालितावध्यापितौ च विश्वसनीयपरिजनस्यात्मजोऽस्मीति।

झु. – इत्थमेवोक्त पितृचरणैरन्येद्युः। किमिति युवयोरुभयोर्विषये विप्रतिषेधः क्रियते इति पृष्टैस्तैः मञ्जूषाया प्रत्युक्तम् कुमार उस्मान् समं त्वया पोषितोऽध्यापितश्च। तज्जनकश्च खैरुद्दीनोऽस्मत्कुले पञ्चाशद्वर्षाधिकमपि सेवमानोऽव्यतिरिक्तोऽस्मच्छरीरादिति।

निशम्यैतत्तरुणस्यानने व्यलसत्सन्तोषजनितं स्मितम्।

झु. – नाविदुः खलु पितृपादाः कियत् प्रगल्भस्त्वं जातोऽसीति।

एवं सविनोदमुक्त्वा समीपवर्तिन्या आम्रफलमेकमादाय तद्रसमास्वादयितुमारब्धवती। यानं तावत्प्राचलच्छनैः शनैरविरतम्।

अथापराह्णसमये गगनतलं सहसा मेघपटलावृतमभूत्। दिनकरोऽकस्मादेव दुष्टजनानामन्धकारमयपातकेभ्यो दूरीकर्तुमात्मानमिव खिन्नतया विवर्णवदन इव कलितसायन्तनघनाऽम्बरविभ्रमः सान्त्वयितुमात्मनं प्रतीच्यालिङ्गनेन प्रेयसीं प्रति सत्वरं समाक्रामत्। भगवतो भास्करस्यास्तमनात्पूर्वं तु प्रतीच्यं दिङ्मण्डलं सतततामच्रूडभक्षणपातकेनेव

क्षणमात्रं ताम्रीकृतं ततश्च हत्यापातकान्धकाररजोराशिमिवोद्गिरत् सकलचराचरचक्षुषां सञ्चारशक्तिं शिथिलीकुर्वद् धूमधूमेनेव व्याप्य हरितः स्वतमोमयकृतेरुदर्कं प्रतीक्षमाणमिवासीत्। न चिरात् क्रोधाविष्ट इव झञ्झावातः समुत्थितः। अन्तरान्तरा सिन्दूरच्छुरितललाटतला चाकचक्याङ्गारस्फुलिङ्गमालि–कासनाथितकण्ठा, प्रत्याख्यातानुरागा दिनमणौ रोषाविष्टेव सौदामिनी भीषणाकारमात्मनो जगते प्रादर्शयत्। तदनु पुनःपुनर्भयानकगर्जनध्वनिना समस्तान्तरिक्षे कम्पिते वृष्टिमहौघेन प्लावितमासीद्धरातलम्।

अथ सम्भ्रान्तया झुलेकया सभयमवादि। 'किं करणीयमिदानीमि' ति। झञ्झावातवेपमानं क्षेत्रं पश्यतस्तूष्णीं स्थितस्य युवकस्य ललाटतलं सम्भ्रमक्रोधाभ्यां वलिताकुञ्चितभ्रूकुटि समभवत्। क्वापि शरणमभ्यर्थयितव्यमिति निश्चित्याप्राक्षीत् शाकटिकम्। अपि परिचितं ते किमपि स्थलं विश्रान्त्यै निशायामि' ति। 'विद्यते गोपालनाम्नः कस्यचित्कृषिकस्य दुग्धागारमितो योजनार्धमात्रं यत्र विश्रान्तिसुखमवाप्स्यते भवद्भ्याम्। नेष्यामि शीघ्रं भवन्तौ तत्र'त्यभिधाय सारथिर्दीर्घाध्वश्रान्तं बलीवर्दयुग्मं चाटुवचनैः प्राचोदयत्। अथार्धघटिकोत्तरं भेसानानामकां ग्रामटिकां समासाद्य खदिराच्छादितस्य मृण्मयकुटीरस्यैकस्य पुरो यानमस्थापयच्छाकटिकः। वाहनादवतीर्य युवकेन जीर्णद्वारे कुट्याः प्रहते कश्चित्प्रांशुः श्मश्रुलः स्थविरकृषिकः समुद्घाटितद्वारोऽध्वगयोः सम्मुखीनस्तस्थौ।

उ. – शरणार्थिभ्यामावाभ्यामद्य रात्रौ भवदीयागारे शरणं दीयताम्। ग्रामान्तरं गन्तुमशक्यमिदानीम्। अस्ति यानेऽस्मिन्ननुभूतप्रभञ्जनोग्रतासन्त्रस्ता कुलीनाङ्गनैका।

'आगम्यतां भ्रातरागम्यतामि' ति स्थविरः सत्कारपुरःसरं प्रत्यभाषत। तदनु क्षणादुस्मान् झुलेकाद्वितीयः कुटीरस्य किलिञ्जारचितपटलस्य प्राङ्गणं प्राविशत्। आसीद्राशीकृतो मध्यभागेऽभिनवपीतहरितरम्भाफलगुच्छानां सञ्चयः। प्राङ्गणस्य दक्षिणतो गोष्ठे गोगणः कार्पासबीजानि चर्वन् भूतल उपविष्ट आसीत्। कोणे चैकस्मिंस्तस्थौ शाणयन्त्रं यत्समीपं प्रवयाः समुपेत्य महतीमसिधेनुकामेकां तेजयितुं समुद्यतोऽभूत्।

गुहाभ्यन्तरप्रवेशद्वारोपकण्ठेऽलिन्दे मर्दयन्त्यो धान्यं द्वित्रा योषितस्तिष्ठन्त्य आसन्। मध्यभागे चालिन्दस्य ददृशे कुलदेवतायाः कालिकादेव्याः सिन्दूरकुङ्कुमादिभी रूषितललाटा चम्पकमालिकाकण्ठा महती प्रतिमा। प्रविष्टमात्रा झुलेकाऽङ्गणे समुदैरयद् अहो रुचिरत्वं गृहस्यास्येति। ''भगवति भवदीयमेव कुटीरमेतत्। विश्राम्यतु भवती यथावदि'' ति क्षेत्रिकस्य गेहिनीपरिणतवयस्काकृष्णवर्णदन्तततिर्गृहाभ्यागतां सशङ्कं निरीक्षमाणाऽभ्यधात्। तदीयकर्कशहस्तयोः सन्ततदृढमुष्टिनिष्पीडनात्कठिनवस्तूनां गाढच्छिद्रयोः पललं घनीभूतं विरूपं चासीत्। ''अये जानकि, प्रवेश्यतामार्या गृहाभ्यन्तर'' इति पत्नीं समबोधयत् कृषिकः। सा च स्थविराऽऽशु समुत्थाय शाणयन्त्रे बद्धदृष्टिं झुलेकामब्रवीत्। 'आर्ये, आगम्यतां तावत्। परिधानेतरमपेक्ष्यते भवत्या। क्वास्ति भवत्याः पोटलिका'। इति स्थविरया पृष्टे पुर उपसृप्य युवत्यै तां समार्पयदुस्मान्। कुञ्चिताक्षी वृद्धा सञ्जातकुतूहला गृहाभ्यागतौ क्षणं निरीक्ष्य झुलेकां तमोमयपृथुसोपानपङ्क्त्या प्राङ्गणोपरिष्ठादीक्ष्यमाणं प्रकोष्ठमनैषीत्। तत्र कोणस्थाया विपुलायाः पित्तलोत्कीर्णपेटिकाया उपरि चीवरनिकरोऽव्यवस्थोऽदर्शि। मध्यभागे च प्रकोष्ठस्य भूतले तस्थौ ह्रस्व एकस्तूलिकाविहीनो मञ्चकः। 'अकिञ्चना वयं परं कुट्येषाऽऽत्मीयेति मन्यतां भवत्ये'ति विरचितसमुदाचारया वृद्धया व्याहृते झुलेकाऽभ्यधात्। 'अहो स्वर्गीयमिदं स्थलं खलु। न विजानाति भवती कियत्सर्वमेतत्सुखावहं च' इति। 'क्षेत्रवृत्तिरियं पवनप्रकाशस्वातन्त्र्यादिविराजिता... इत्यर्धोक्ते विरम्य शालीनतया तरुणी तूष्णीमेव च स्थित्वा मन्दस्मितमकरोत्। ततश्च सद्योऽपनीतखिन्नोत्तरीयां तां जरठा साकुञ्चितनयना पुनर्निरीक्षमाणा क्षणं तत्रैव चिरायिताऽवादीत्। 'भवती श्रान्तास्ति शयनेऽस्मिन् विगतश्रम आत्मा क्रियतामि' ति। शनैरपासरच्च।

तदनु झुलेकयाऽध्वखिन्नया घटिकाधिकं निद्रासुखं निरवेशि। ततश्चार्धजागरितया तया परितः साक्रोशं ससूत्कारं मरुद्रुतं सवृष्टिपृषत्पटपटाशब्दमश्रूयत। प्रबुद्धायां च तस्यां प्रवर्षणे विरते गवाक्षतोऽदर्शि रुचिरेन्द्रायुधमिन्द्रनीलनीलाम्बरतले। अथ शनैः शनैरदर्शनतामुपगतस्य भगवतो गभस्तिमालिनः कश्मीरजवर्णरश्मिनिकरः

क्षणमात्रं गवाक्षेतरजालेभ्यः प्राविशत्प्रकोष्ठे। अधःस्थे प्राङ्गणे कृषीवलोऽसिधेनुकातेजनव्यवसाये तदीयपत्नी च सायन्तनिकभोजनाय दधिमन्थने व्यापृतावास्ताम्। तयोः परस्परमालपतोः स्वरध्वनिरश्रावि स्फुटमूर्ध्वकोष्ठे। अथ झटिति झुलेका मञ्चकादुत्थाय स्ववातायनोपकण्ठमुपेत्य च प्राङ्गणे बद्धदृष्टिर्मुहूर्तमवातिष्ठत। तत्क्षणे कृषिको दीर्घनालिकया तमाखुपात्रं सगुडगुडशब्दमाध्मातुं प्रावर्तत।

स्थविरा – न तया युवकस्य धर्मपत्न्या भाव्यम्।

तमाखुपात्रोदके गडगडनादं कुर्वति सचिन्तं कृषीवल उच्छृङ्खलश्मश्रुं दक्षिणेतरपाणिना समीकुर्वाणोऽभ्यधात्। 'कुतो यवनपुरोहितमन्वेष्टुं स प्रयातः स्यादिति सन्देहारूढं मच्चेत' इति।

अथ संलापे विरते वृद्धदम्पत्योः प्रदोषसमये प्राङ्गणं तत् कथमपि भयानकं जिह्मं च प्रत्यभात्तरुण्यै। दधिमन्थनस्यानवरतमन्थरखान्तरान्तराऽश्रावि दविष्ठमस्जिदस्यालिन्दतो यवनपुरोहितस्य शोकमयस्वर अल्ला इल्लीलेति। क्वचित् क्वचिच्च देवमन्दिरतो नेदीयसो घण्टानादोऽपि श्रुतिगोचरोऽभूत्। मस्जिदतो ध्वनिपरम्पराश्रवणेन विलक्षणप्रकारेणोद्दीपितेव झुलेका वातायनान्तरमभ्यगात्। तद्गतायास्तस्याः कस्यचन स्थानीययवनसाधोः समाधेरन्तिकं सम्मिलितो जनसन्दोहो दर्शनमयासीत्। समाधिं हरिद्वर्णमृत्पट्टिकाच्छादितशिखरं परितः स्थितेषु महीरुहेषु भास्वत्पीतहरिद्वर्णध्वजसमुच्चयो दिवंगतसाधोर्महोत्सव-प्रसङ्गाद्बहुसङ्ख्याकभक्तैस्तैः समर्पितो व्यधूनोत्। अथ प्रोत्साहातिशय परिस्पन्दमानां ग्रामटिकां दर्शं दर्शं झुलेका समुत्कर्षेण स्फुरन्नाडिका गवाक्षतः परावृत्य सपदि सोपानपङ्क्त्या प्राङ्गणमवारुक्षत्। तत्र च कृषिकस्य गेहिनीं दधिमन्थनविधो व्यापृतां क्षणं निरूप्य प्रसार्य च करपल्लवौ मन्दस्वरेण तामभ्यधाद् 'दधि मन्थितुं जनोऽयमनुमन्यताम्' इति। तद्वचः श्रुत्वा सविस्मयं स्थविरयोक्तम्। 'कुतो नु वसितरुचिरदुकूलां कुसुमसुकुमारां तनुं श्रमयितुं प्रवृत्तास्ति भवती' ति।

झु. – (साभिनिवेशम्) पार्यते मयैतन्न वेति पश्यतु भवती।

इत्यभिधाय दधि मन्थितुं प्रारभत झुलेका। शनैः शनैः काष्ठमयदले

नवनीतकणा हिमकणा इव प्रादुरभूवन्। अपि चतुरास्मि दधिमन्थने न वेति चाटुवचसानुयुक्ता दारिकया स्थविरा कम्तिशिरा जोषमस्थात्।

झु. – (सकुतूहलम्) अप्येष गोगणो गोष्ठके भवदीयः।

स्थविरा – अथ किम्।

झु. – अप्यत्रैवोत्पाद्यन्ते दधिनवनीतघृतादीनि। (सविस्मयम्) अहो जीवनसौकर्यं क्षेत्रजीविनाम्।

कृषिकः – (सगौरवम्) गोधूमादि धान्यं शाकाश्चापि।

झु. – अपि साहाय्यार्थं भवद्भिः सहकारिणी नापेक्ष्यते?

कृ. – आसन्नत्र तिस्रः सहचर्यः परं मासात्पूर्वमस्मद्दुहितुर्महा-मारीव्याधेर्भयान्निष्क्रान्तास्ताः सर्वाः।

झु. – भवद्भिः कर्मकरीपदे नियोजिता चेदहं सर्वमपि विधातुमत्र सज्जाऽस्मि।

स्थ. – सूक्ष्मदुकूलाम्बरधारिणी कथं कर्मकरीवत् प्रयसितुं प्रभविष्यसि। अपि नीलोत्पलपत्रधारया शमीलता छेत्तुं पार्यते?

झु. – दुकूलवस्त्रैः किम्। नावश्यकं तानि परिधातुम्। विमलपवन एवाभिलष्यते मया।

स्थ. – कामं विमलपवनः परं परिश्रमः? (निजोत्तरीयं दर्शयन्ती) ईदृग् वस्त्रं परिधेयम्। (सविनोदम्) अपि चलिष्यसि पृष्ठतो गोगणस्य।

सु. – (सस्मितम्) अहो मन्दप्रभाभास्वत्केदाराणां रमणीयत्वम्।

स्थ. – (युवतीं ससन्देहं निरूप्य) अपि परिहासाय ब्रवीषीत्थम्?

झु. – नहि! नहि। अत्रैव निवस्तुमिच्छामि।

तदनु कृषीवलेन नेत्रेङ्गित्तेनैवानुज्ञाता स्थविरा 'भवतु मामनुव्रज यावदुत्तरीयं ते दास्यामी 'त्यभिधाय झुलेकयानुगम्यमाना कुटीराभ्यन्तरं प्राविशत्। 'नास्ति खलु सृष्टितले विचित्रतरः प्राणी स्त्रीजनात् ' इति मनसि कृत्वा तमाखुपात्रं समीपवर्तिनि फलके निधायासिधेनुकामेकामुदधरत् कृषीवलः। तत्तीक्ष्णतामङ्गुल्यात्मनः परीक्ष्य पुनस्तां तेजयितुं यावदुपक्रमते

तावद्बहिः पदन्यासध्वनिं शृणोति कस्यचित्। सपदि च तदस्त्रं गोपयित्वा द्वारमुद्घाट्य झुलेकायाः सहचरमुस्मानं प्रावेशयत्। क्षणेऽथ तस्मिन् गृहान्निर्गतां विलोक्य कुमारिकां परिवर्तितवेषां निःशङ्कं स्थविरामनुयातीं गोशालां प्रति तरुणोऽनिमिषलोचनः स्तब्धश्च तस्थौ। स्विन्नाननस्य तस्य सम्भ्रमं वीक्ष्य प्रोच्चैर्हसन्तीं दारिकां प्रोवाच युवकः। 'किमेतत्? कस्मिन् व्यापारेऽत्र प्रवृत्तासी' ति। प्रत्युवाच तरुणी 'सावज्ञं प्रतिदिनं यत्परःशताभिर्युवतीभिर्विधीयते तदेव कर्तुमुद्यतास्मी' ति।

उ. – (विगणय्य तस्या वचनम्) प्रभञ्जन इदानीमल्पीभूतस्तद्गमिष्यावः सत्वरमितः। वर्तत इतो नातिदूरं मस्जिद......

इत्यर्धोक्ताभिप्रायमवगत्य सपदि तद्विच्छिद्येङ्गितेन तूष्णीं तिष्ठेति तं निर्दिश्य च सा तेनानुगम्यमानोर्ध्वकोष्ठमारुक्षत्। अथ द्वारि प्रकोष्ठस्य विहिते व्याहरदुस्मान्। 'इतो नेदीयसो मस्जिदस्य पुरोहितोऽस्मदुद्वाहं यथाविधि निर्वर्तयिष्यति निशागमात्पूर्वं च सहधर्मिणी मे भविष्यसी' ति। विरतवचसि तस्मिन् गवाक्षावलम्बमाना पुनः प्रोच्चैः प्रहस्य पटप्रान्तेन नेत्रजलबिन्दून् प्रमृज्य झुलेका समभाषत। अरे मुग्ध! अपि सत्यतस्त्वया गृहीतं यत्त्वां मत्पाणिं ग्राहयिष्यामीति।

उ. – (कोपाविष्टः) कुतस्तर्हि सार्धं मया गेहतः पलायितासि।

झु. – प्रथमं तावत्कन्यान्तःपुरकारागृहादात्मानं मोचयितुं ततः स्वातन्त्र्यसुखमनुभवितुं च। (शिरः सञ्चाल्य) अत्रैव यथेच्छमवस्थास्य इति विद्धि।

भग्नभ्रूभयानकभालो युवकोऽथाक्रोशत् 'स्वामिकन्यापहरण-पापपङ्ककलङ्कितानेन तवासंबद्धानुष्ठानपूर्तये मया शासनपात्रेण भवितव्यम्। न निर्गमिष्यामि त्वां विना। बलात्त्वां गम्यिष्यामी'ति स्फुरल्ललाटरेखः सङ्कुचिताननो दर्शितोग्रदन्ततति: सरभसं क्रुद्धोऽसौ। निष्ठुरं च तस्या नवनीतमृदुहस्तौ दृढमगृह्णत्कठिनकराभ्यामात्मनः परं तस्या भ्रूभङ्गमात्रेण धर्षितिः क्षणाच्छिथिलितदृढग्रहोऽपसृत्य 'यदि मया सार्धं न यास्यसि तदा यवनधर्माऽऽग्रहग्राहिलोऽहं स्वामिने तवेतिवृत्तं निवेदयिष्य' इति

तामतर्जयतोस्मान्।

झु. – (सोपहासम्) आः साहसमेतत्कर्तुं न धृष्णोषि। पशुमारं पुरा हिंस्यसे खलु। श्रुणु तावत्। समस्ताभरणजातं ते वितरिष्यते यदि मामविरोधं विसृज्य निर्यास्यसि। निर्दिष्टगोष्ठपार्श्वस्थकोष्ठे रात्रिं नीत्वा प्रातस्तरां निर्गच्छ। पितृचरणैर्यथाज्ञापितस्तथा विधेहि। 'बाढम्, निर्यास्यामि। परं दीयतां प्रथमं निःशेषभूषासञ्चयः'।

इत्युक्तवति तस्मिन् स्वचोलाभ्यन्तर्गोपितं लघुकूर्चमुद्धृत्य तस्मै तत् समार्पयत्सा। संगृह्यैतत् स लालसः साभिलाषं क्षणाददृश्यतां गतः। तदनु झुलेका झटिति तमोमयसोपानपङ्क्त्याऽवरुह्य गोशालां प्रति ययौ सत्वरम्।

अथ निर्वर्तितदोहनादिसायन्तनिककार्यक्रमा परिभुक्ताहारा च पूर्वनिर्दिष्टोर्ध्वप्रकोष्ठस्य गवाक्षतस्तारामण्डायमानमम्बरतलमवलोकयन्ती चिरमुन्निद्रनेत्रा मञ्चे स्थितवती। मस्जिदतो भगवन्नामघोषः सम्प्रति विरत आसीत्। क्वचिच्छाकटिकस्य सशपथाक्रोशेन क्वचिज्जलवाहकानां श्रुतिमनोहरगीतेन गाढनिशाया निश्शब्दता विच्छिन्नाऽभूत्। मञ्चे शयितायास्तरुण्या यवनसिद्धस्य समाधिं परितोऽद्यापि चिरायितो जनसमूहो दृगोचरोऽभवत्। कस्यचन गीतमपि परिव्राजकस्य तस्याः श्रवणसरण्यामपतत्। पश्चाच्चारुस्वरवीणाया झणत्कारस्य समृन्मयपटहानुषङ्गस्य प्रतिध्वनिः प्रशान्ततमिस्राया आप्यायत परिस्थितेर्वैलक्षण्यम्। एधमाननिनादमाकुलीकुर्वाणं देवमन्दिरस्य दिशो विदूरं मरुन्नीतं भयानकक्रन्दनमश्रावि सहसा। क्रमेण पवनौघोपशमेन सार्धं तद्रुदितमपि व्यलीयत। सुरालयस्य घण्टाघोषे विरते जनसमूहे विकीर्णे च निद्रितग्रामटिकेयं शवाच्छादनपटाच्छादितेव स्थिता। झुलेकापि क्रमेण गृहीताऽभून्निद्रादेव्या।

अथ निशीथे सहसा स्वप्नाज्जागरिता सोपानद्वारोपरिगतविचित्रच्छायया सम्भ्रान्तेव शयनादुत्थाय सा परितोऽवालोकयत्। परं कृष्णपक्षस्य क्षीणप्रकाशे न किमपि दृष्टिगोचरमभूत्। प्रतिभास एव मे स्यादिति सस्मितं सचिन्त्य मञ्चके पुनरशेत। परमल्पक्षणोत्तरमधःस्थप्राङ्गणे स्थितयोः स्वरध्वनिर्वृद्धदम्प–त्योर्न्यपतत्तत्कर्णशष्कुल्याम्।

स्थविरा – कश्चिदसिधेनुका ते निशितेदानीम्।

कृषिकः – अलमस्त्युपलमपि कर्तितुम्।

स्थ. – परेद्युरप्येवमेव कथितं त्वया तथापि तस्या ग्रीवाच्छेदसमये तदाक्रोशो घोरतमो व्यश्रावि।

कृ. – तत्पुनरेकवारं तां तेजयिष्यामि।

इति संलापं समाकर्ण्य विस्फारितनयनाऽन्धतमसे प्राङ्गणमवेक्षितुमपारयन्ती संवादस्यैकैकं शब्दं श्रोतुं सा प्रायतत। शाणस्य कर्कशघर्घरनादेन भयाक्रान्ता पुनः पिहितवातायनसमीपमुपेत्य रन्ध्रैरेकतानेन निपुणं निभृतं निरीक्षितुं प्रायस्यत्।

कृ. – आदौ द्वयोः कतरस्य शोणितोपायनेन कालिकादेवी प्रसादनीयेति ब्रूहि।

स्थ. – प्रथमतो नार्यास्तावत्। तस्या देहबलिदानेन प्रसन्ना भविष्यतीति न सन्देहः।

कृ. – परमतिकृशाङ्गी सा। द्वितीयस्याधिकं मांसमुपलप्स्यते।

इति श्रुत्वा झुलेका सवेपथुस्तस्थौ।

स्थ. – नहि नहि। प्रथमं ग्रहीष्यावस्ताम्।

तदनु दम्पत्योर्वादविवादोऽधिकाधिकं व्यजृम्भत। झुलेका च तावत् स्विन्नललाटतला कम्पमानाङ्गयष्टिः पतनोन्मुखी सन्त्रासाकुलापि मुखोद्गतक्रन्दनं कथमपि न्यरुद्ध। पर्यन्ते विचित्रभीषणवितर्कपरम्परावशीभूता निपातितजानुः स्तब्धश्वसना दम्पत्योस्तयोः संलापस्वरं मन्दीभूतं शृण्वती गोशालासमीपे भुक्तसुप्तस्य स्वसहचरस्यात्मनो वा संहारो न चिराद् ध्रुवं सम्भविष्यतीति प्रतीता लिखितेवोत्कीर्णेव स्तम्भितेव तस्थौ। विरते विवादे वृद्धदम्पत्योः पितृवनसंवादिनी निश्शब्दता व्यराजत सर्वत्र।

शनैरबुद्धिपूर्वं च झुलेकाऽऽत्मानं मञ्चोपकण्ठमाकृष्य विस्तारितकरपल्लवा समुत्थिता ततश्च घूर्णमाना पदे पदे स्खलन्ती पुटीकृताङ्गी शयने निक्षिप्तदेहयष्टिः प्रह्वीभूय सधडधडकम्पमानहृदया निःशब्दं क्रदन्ती सम तिष्ठत। तदनु सोपानपङ्क्तेः

शिथिलितकाष्ठमयफलकानां संवृत्तस्तोकस्वनेन सन्त्रस्ता सोपानद्वारमनर्गलमर्धविवृतस्थितमस्तीत्यस्मार्षीत्सा। तत्सार्गलं चिकीर्षुः कस्यापि हस्तेन गृहीतकण्ठमिवात्मानं विभावयन्ती द्विगुणाभिहतेव स्तम्भितगात्री धीरधौरेयापि विधुरितधैर्या युगतुल्यं क्षणमगमयत्। न चिरादकाण्डोन्मुक्तार्त- ध्वनिस्तमिस्त्राया निश्शब्दतां व्यच्छिनत्। ततश्च संघातध्वनिरश्रावि। आर्तनादमाकर्ण्य किमप्यकृत्यमनुष्ठितं स्यादिति विद्धान्तरङ्गा भयोद्रेकपिञ्जलाऽऽक्रन्दितुमिच्छन्त्यपि रुद्धकण्ठा स्थितवती सा। हा हा सहचरमुस्मानं कृषीवलस्यासिभुजङ्ग्या कथावशेषं कृत्वा तदीयशोणितं कालिकाया दृषन्मूर्त्यै पाषण्डजनेनानेन देवताभिमताया महोत्सवप्रसङ्गादुपायनीकृतं स्यात्। इत्यविरतं विभावयन्त्याकुञ्चित-पिण्डीभूतविग्रहा सितोत्पलानना विस्फारितनयना कथमप्यनन्तक्षणमिव क्षपां क्षपितवत्याभानूदयम्। समये तस्मिन् कृतदीर्घदुःखप्रजागरणया तया शुश्रुवे शकटिकानां क्वणन्नादः कुटीराद्विदूरात् कस्यचिद्गोपालस्य तन्त्रीनादो गोगणहम्बामिश्रश्च। क्रमेण मस्जिदशृङ्गे पाटलवर्णद्युत्यां विलसन्त्यां झुलेका परिधाय वेषमात्मीयं, समुद्धृत्य च पोटलिकां स्फुरद्वक्षःस्थला सोपानपङ्क्त्या सत्वरमवारुक्षत्। प्राङ्गणे कृषीवलस्य समं गेहिन्या मन्दमन्दस्वरेणालपतः समीपे लम्बमानां शाणकन्थां भूतलं शोणितपूरेण प्लावितं चालोक्य कथं नाम जनोऽयं निष्ठुरो व्यतीतरात्रौ कृतघोरकृत्यः शान्तं शान्तं संलपेदि' ति चकितचकिता भीतभीतेव युवतिरवर्णनीयजुगुप्साभिभूता पदमेकं पुरःप्राचलत्। आलोक्य तां स्थविराऽब्रवीत्। 'एहि तावदारभस्व दैनिककार्यमि' ति। झुलेकां जोषं स्थितां वीक्ष्य पुनस्तां संबोध्य प्राह स्म जरठा। गृहाण कर्तरीमिमां प्रक्षालय च ताम्। किमिति भित्तिवत्तिष्ठसीति। कर्कशमेवं भाषिता झुलेका निरुत्तरेति सोपहासं कृषीवलेनाभिहिता। कुतः सूक्ष्मदुकूलवासांसि पुनः परिहितानि भवत्ये'ति। 'इतःप्रस्थास्यतेऽथ मये'ति झुलेकाया वचो विगणय्याक्रोशत्स्थविरा। 'खण्डशो विदारयिष्यसि परिधानमिदम्। अम्बरान्तरं परिधाय दोहनं विधेहि'। इत्यभिहितामपि निरुत्तरां तरुणीं सूक्ष्म निरीक्ष्य पुनः सा प्राक्षीत्। 'अपि सुखं न निद्रितासी'ति। 'नही' ति झुलेकयाऽर्धोच्चारितं वचः पुनरवधीर्य प्रक्षाल्यतां क्षिप्रमसिपुत्रिकैषा।

महोत्सवदिनेऽस्मिन् प्रातरेव कालिकादेव्यै मेषस्यास्य बलिदानं विधेयमस्माभिर्व्रतानुसारेणे 'ति।

कु. – (सोपहासम्) प्रायोऽस्मद्वादविवादेन गतरात्रौ भवत्या निद्राभङ्गः समजनि। अजहत्यां चिकीर्षुरासं परमजाहननमैच्छन्मम गेहिनी। तथापि पर्यन्ते स्वाभीष्टं साधितं मया।

समाकर्ण्यैतत् तरुणी सम्प्राप्तसमाधानसुखा दीर्घमुच्छ्वसन्ती गोशालास्तम्भमवलम्ब्य विनोदझर्झरपूरप्लाविता प्रोच्चकैः प्रजहास। तद्विनोदकारणमनवगम्येषत्कुपितेव 'किं संवृत्तमि' ति पप्रच्छ वृद्धा। 'न किमपि। वेषान्तरं परिधाय शीघ्रमेवायास्यामी'ति मृदुगिरा निगद्य प्रति सोपानमधावद्दारिका। सोपानस्यावतरणस्थले युवकमालोक्य सहसा विरतगतिः सा पुनः प्रोच्चैर्जहास। पृच्छापूर्वकमवलोकयन्तमुस्मानमभ्यधाच्च 'अन्यथा मया भवितव्यम्।'

उ. – आः! अन्यथा न चिराच्चिन्तयिष्यसीत्यज्ञास्येव।

शु. – नैवं नैवं। वेषपरिवर्तनम्।

इत्युक्त्वा तस्मै सहस्ताक्षेपं स्वस्तीति निर्दिश्य झटिति झुलेका स्वनत्सोपानमालामारुक्षत्।



## १३. 'मत्स्यजीवी केवलम्'

प्रारब्धस्य द्वितीयमहायुद्धस्य मासद्वयं व्यतीतमासीत् । विषमे कालेऽस्मिन्नसंख्यानर्थान्विते प्रोच्चशिक्षणार्थं स्वदेशान्निर्गमो मातृहीनस्यैकाकिनो मदीयात्मजस्य कथमन्वमन्यत मयेति नितरां खलु विस्मयेऽद्य। न चिरादनुतापेनादन्दह्यत हृदयं हि मे। तथा हि। द्वित्रदिनापगमे पुत्रस्य निर्गतस्याऽऽदननामकद्वीपान्नातिदूरं रक्ताभिधे सागरे नौका भग्नेत्युदन्तो दारुणो मम कर्णपथे न्यपतत्। परं कति पान्थास्तिरोगताः कति चाभिरक्षिता इत्यवगन्तुमशक्यप्रायमभूत्। सप्ताहमेकं च वर्षसहस्रायमाणं नरकयातनामयमिव चिन्तावेदनावडवानलसदृशमिवोत्सन्नन्निद्रः सन्देहवह्निज्वालाजालैः प्लुष्टहृदयः कथं कथमप्यगमयम्। गाढतमोमयपेटिकायां बन्दीकृतो मधुकर इव संशयान्धकारे सुतस्य पारमार्थिकं वृत्तं प्रतीक्षमाणोऽवसन्नगात्र इव स्थितवानहम्। परमगाधानुकम्पया परमात्मना रक्षितेषु पान्थेष्वस्ति मे पुत्रक इति वृत्तेन तत्पुनर्जन्मवृत्तेनेव सम्भ्रान्तः स्तम्भितः कृतनिर्वीर्योऽभवं येन पुत्रचिन्तासन्तानैकतानस्य मे प्रतिपत्तिजडस्य परिस्थितिपरिवर्तनमवश्यमेव समजनि। परं क्व गन्तव्यं किं स्थलमनुकूलं स्यादिति यावद् व्यचिन्तयं तावद्विद्युत्सन्देशोऽभिनन्दनपूर्वकः केनचित्सुहृदा प्रेषितो मत्करतलमागतः।

विंशतेर्वर्षेभ्यः प्राङ् न्यवसमहं सह तेन कस्मिंश्चिद ग्रामे रमणीये कोंकणदेशमण्डलनिवेशिते। मित्रस्यास्यालये समुद्रोपकण्ठोदग्रभूमौ निर्मिते कृतावासेन तदा मया तनयस्य मे जन्मवृत्तमाकर्णि। तदारभ्य स्थलमेतत्पुण्यक्षेत्रमिव मच्चेतसि कृतपदमासीत्। तत्र च पुनरायास्यामीति सुहृदे प्रतिश्रुतमासीन्मया तदा। अद्यासौ प्रतिश्रवः प्रहर्षपरिप्लुतान्तःकरणस्य मम स्मृतिपथमायात्। अपरं च समये तस्मिन् कस्यचिद् दृश्यस्यावलोकनेन हृदयं मम बहुतिथं कालं करुणरसनिर्झरपूरेण प्लावितमासीत्। व्यतीतेषु वत्सरेषु विविधप्रसङ्गेषु व्यतिकरस्यास्य स्मृतिपथाद्गलतेष्वपि तस्य मध्यवर्तिन्या अङ्गनायाः प्रतिमा सदैव विराजमानाऽसीन्मच्चेतसि। पयोनिधितटे चिरादालोकितस्य स्मरणं

कुसुमामोदभर इव मच्चेतसि पुनः पुनः प्रादुरभूत्। वसन्तुर्तुसमये रसालतरौ विकसत्कुसुममञ्जरीभरस्य पुनरुद्गम इव व्यतिकरोऽयं यथावत्पुनः साक्षाद्वर्तमान इवाभात्। तद्यथा।

शरदां विंशत्याः पूर्वं ग्रीष्मावसाने प्रातस्तरामेकदा सुखसुप्तस्य सुहृदः शयनोत्थानात्प्राक् समुद्रतीरे शुभ्रसिकतामये विहरता प्रथमं मयावलोकिता सा। अनल्पयोजनदीर्घमतिशयधवलं तुषाराङ्कितकाचसदृशं शुशुभे कूलं महोदधेः। अथ पुरश्चलितुमुपाक्रंसि यावत्तावदुत्तारस्थाननिकटे प्राचीरमेकमासादितं मया। अवालोकयमत्र मत्स्यजीविनां सन्दोहं भूयिष्ठा यस्मिन् बभूवुर्दैनिकमत्स्यसंग्रहणाय स्वस्वपोतेन प्रतिष्ठासवः। महोत्साहं सरलवृत्तेर्जनस्यास्यावलोक्य तत्परवशीभूत एकस्मिन् पार्श्वे मुहुर्तं तूष्णीं स्थितवाहनम्। समुपस्थिता अत्र मातृगेहिनीपुत्रादयः स्मिताननास्तत्तदाप्तस्य सायं सुरक्षितप्रत्यागममाकाङ्क्षन्तो निर्गच्छद्भ्यः स्वस्तिवाचकाशीर्वादान् प्रदित्सवः।

अथ सर्वेषु प्लवेषु विसृष्टतीरेषु क्रमेण जनसमुदायो विकीर्णोऽभूत्। परं चिरायिताऽत्राङ्गनैका या प्रथमर्शनादेव मन्मानसं भूयिष्ठमाकृष्टवती। सा हि मन्दं मन्दं प्रचलत्सु पोतेष्वेकं निपुणं वीक्षमाणा सागरतटेऽवातिष्ठत यावद् द्योतमानोदकेषु पयोधेर्बिम्बमात्रमिव सोऽदृश्यत। ततस्तीरं विहाय प्रचलन्तीं तामन्वगच्छं न चिराच्च ग्रामान्तर्गामिनि मार्गे तत्समीपस्थोऽभवम्। पृष्ठतस्तामवलोकयंस्तस्या सरलद्रुतगत्याऽनूढया बालिकया तया भाव्यमिति व्यतर्कयम्। निकटवर्तिन्यास्तस्या ऋजुभावशंसि वदनं तन्वङ्ग्यष्टिं च विलोकयतो मे तर्को दृढोऽभविष्यद्यदि तत्कण्ठे निर्वृत्तोद्वाहनिवेदकां मङ्गलसूत्रमालिकां नाद्रक्ष्यम्। अथावयोः प्रचलतोर्मध्ये स्वल्पिष्ठमात्रमन्तरमासीदिदानीम्। अतः स्फुटमालक्षितं मया यत्स्वीयायतरुचिरनयनयुगलेन नवयौवनसहकृतसौन्दर्येण चास्त्येषा जितभूयिष्ठाभिजाताङ्गनेति। अथ क्षणमात्रं विरम्याध्वनि तन्मधुरस्वरामृतरसं पिपासुस्तामब्रवं तृषितेन मया जलमपेक्ष्यते। अप्यस्ति प्रपा क्वापि सन्निधौ। इत्यभिहिता मया सा स्वगेहं मां निमन्त्र्य 'शीतनारिकेलरसः परिषेव्यतां श्रीमद्भिरिति साग्रहं प्रार्थयत। भृशं प्रमुदितोऽहं सादरं तन्निमन्त्रणं सपदि

स्वीकृत्य सह तयोदचलम्। यथा प्रागेवावकल्पितं मया तथा तस्याः स्वरध्वनिमत्युत्कृष्टं मृदुलं च तद्वाक्सरणिं च माधुर्ये कुलाङ्गनावाग्विडम्बिनीमुपालभे। क्षणाद्विमोहितोऽहं तथा पृच्छामकरवं यथोत्तरप्रदाने दीर्घं सा व्याहरन्ती मृदुस्वरेण मामानन्दयेत्। कथितं च तया। 'मदीयशिशुर्ज्वराक्रान्तोऽस्ति। तस्यास्वास्थ्यकारणान्मत्स्यान्वेषणाय तस्य पित्रा ग्रामाद्बहिर्नाद्य गन्तव्यमित्यकलयम्। डिम्भोऽयमेक एव तनय आवयोरि' ति। 'अप्युपसेवेय भवत्या बालम्, अस्मि भिषगहम्। भवत्यानुमोदितो मुदा तं चिकित्सेयम्'। इति मयोक्तं द्रुतम्। सा च तदा कृतज्ञतापूर्वकं ध्रुवं खलु परमात्मनैव मदीयस्निग्धसुतस्य गणुनाम्नः परित्राणाय प्रेषिताः स्युः श्रीमन्तोऽत्र। चतस्रो रात्रीर्ज्वरेणार्तो जनकं बहिर्मा स्म गम इति प्रार्थयत बालः। परं दिनमेकमप्यपव्ययितुमनिच्छता पुत्रकस्य तातेनोक्तं 'वत्स, सर्वोऽयं व्यवसायस्तव हितायैव। व्यवसाय एष द्रव्योत्पादकः। धनेन च भूयिष्ठवस्तूनि क्रेतुं प्रभवन्ति प्रजाः'। इत्येवं व्याहरता तेन साधूक्तं खलु। गणुरपि चतुरः पितुः प्रत्यागमस्य एकैकक्षणमनवरतं गणयन् स्थितोऽस्ती 'ति।

न चिरात्तस्या नानाविधविकसत्कुसुमान्वितैस्तरुभिर्विराजितरमणीयं कुटीरमासादितवन्तावाम्। पीतनीलरक्तवर्णसुमनसां वृक्षावलम्बमानानां गुच्छजातेन कुटीरस्य तस्य मनोहरा सुषमा। अथ गृहस्वामिन्या प्रवेशितोऽहं कुट्यन्तर्भूतलविस्तारितकिलिञ्चमधिशयानं चतुर्वर्षदेशीयमर्भकं तस्या अद्राक्षम्। मत्सत्काराय पेयमानेतुमपसृप्तायां तस्यां शिशोर्नाडीपरीक्षणमकरवम्। ज्वरितस्यास्वास्थ्यं नैतावदासीद् यथा जनन्याख्यातम्। परं डिम्भस्यास्याद्भुताद्वितीयो वदनाकारः सातिशयं चित्ताकर्षको मेऽभवत्। क्षणमात्रालोकनादेव प्रौढवयोनुरूपधिषणोपेतोऽयं शिशुरित्यकलयम्। अनतिक्रान्तशैशवस्य बालस्य तस्यानने नवनीतकोमले किमपि नैतिकं किमप्याध्यात्मिकमालोकि तेजो मया। जनसमूहे महत्यप्ययं वैशिष्ट्येनोपलक्षितो भवेत्सकृद्दृष्टस्यास्य च न विस्मरेदाननं जनः। बकुलकुसुमसुकुमारत–नोर्मुखात्तस्यातिमधुरमधुराः सपरिहासाः सोत्साहाः प्रसस्रुरालापाः। बालस्यास्य स्मितेन स्नपित इवानुलिप्त इवानन्येन कुतूहलेन

विस्मरणे च जोषमश्रुणवं मृदुलां तद्गिरम्। जीवनानन्दभूते नन्दनेऽस्मिन् पितृभ्यां वर्षितेन प्रेमनिर्झरपूरेण कुटीरमिदं प्लावितमिति स्फुटमेवाभूत्क्षणात्। स्वजीवितसर्वस्वभूतसुतार्थमेव प्राणानधारयतां जायापती। तदर्थमेव पुत्रवत्सलः पिता प्रायस्यत्तरां प्रतिदिनं येनोपलभेत प्रौढवयसि जीवनसौकर्यं शिशुरयम्। एष च पितृप्रेमोद्रेकस्य पात्रमभूदित्यप्युलक्षितं सपदि मया। बालकेन तेन प्रदर्शितसमुदाचारेण स्वल्पपरिचितस्य मे सत्काराय नैकाभ्युपाया विचिन्तिताः। शयितश्च क्षोणीतले सोऽभ्यधाद् 'यदि श्रीमद्भिरनुमोदितः स्यां ग्रामोपकण्ठप्रदेशं निखिलं श्रीमद्भ्यो दर्शयिष्यामि। सन्त्यत्र कानिचित्स्थलानि सुदर्शनानि योजनमात्रदूरं पिशाचाश्रितो पुरातनवीराणां दुर्ग ' इति। तद्विचारशीलतया विस्मिताय मह्यमाख्यातवानयं बालः कस्यचित्सिद्धस्य लोकोत्तरचरितं यस्य समाधिर्मम सुहृन्निवासान्नातिदूरस्थोपत्यकाया अधोभागे निवेशितोऽभूत। 'अपि जानन्ति श्रीमन्तो यदसकृद्देवालयेऽत्रत्येन पुरोहितेन श्राविताः पुराणकथाः। तातपादा अपि मे पुराणकथानकमहापुरुषा इव पुण्यवन्तः। अत एव स्निह्यति पूतात्मनि तस्मिन् परमेश्वरः। सर्वाभीष्टं च वितरति तस्मै देवः'। इति बालकेन तेन सगौरवं मधुरमधुरवचसा निवेदितं वृत्तान्तमाकर्ण्य नितरां विस्मितोऽभवम्। समयेऽस्मिन् जननी शिशोर्गृहकार्यव्यापृता प्रकोष्ठे गतागतं कुर्वत्यपि वचनेऽस्य बद्धावधाना बभौ। कुटीरमिदं तेनैव विमोहितम्। तस्यैव मधुरस्वरेण सुधाधारामधरीकुर्वता दिव्यवाण्येव तत् पावितमिति मच्चेतस्यभूत्। यथा यथा च तत्र चिरायितोऽहं तथा तथाधिकं कुटुम्बेनानेनाकृष्टः समभवम्। अथास्वाद्य नारिकेलरसं सबालगृहस्वामिनीं सादरमापृच्छ्य निर्गमिष्यते मे तनयस्य जन्मपत्रिकां प्रदर्शयितुं प्रावर्तत सा। विषयेऽस्मिन्नविद्वानहमित्यभिहिते मया पत्रिकेयमलौकिकी किलेति न्यवेदयत्सा मन्दस्वरेण। ततश्च क्षणोत्तरं पुनरब्रवीत्। 'बालोऽयं गणुः पूर्वजानां पुण्योदयादुपायनीकृतो विभुना युवाभ्यामिति प्रागेवोक्तं भगवतो विष्णोरायतनस्य नेदीयसः पुरोहितेन' ति।

अथार्धघटिकोत्तरं सुहृद्गेहमासाद्य मम प्रातःकालीनमनुभवं मत्स्यजीविकुटुम्बस्याकर्षणं च न्यवेदयं तस्मै। अभिहितं च तेन। 'अम्बां

सपुत्रामुद्दिश्य ब्रवीषि? परिचितं मे कुटुम्बमिदम्। अर्भकोऽम्बाया आश्चर्यास्पदमिति वदन्ति जनाः।' इति वचनश्रवणेनेषत्संभ्रान्तं मां वीक्ष्य पुनर्वक्तुमुपाक्रमत सः। डिम्भोऽयं किल सामान्योत्तरमतिर्मानवशक्त्यतीतमपि यदि किमपि संपादयेत्तर्ह्यपि 'मत्सजीविनोऽत्र क्षणमपिं तं न संभावयेयुरि' ति। न कोऽपि सिद्धः स्वदेशे संभाव्यत। इत्थाङ्ग्लसूक्तावुदाहृतायां मया पुनर्मित्रेणाभिहितम्। 'मत्स्यजीविनोऽत्रात्यन्तमूर्खोचितश्रद्धान्विता विश्वासशीलाश्च खलु। पुरातनमुनीन्द्रेषु बद्धादरा इमे स्वजात्यपेक्षयोच्चतरकुलोद्भवस्य कषायाम्बरधारिणः सामान्यपरिव्राजकस्यापि पादयोः स्वशिरांसि विदध्युः परं स्वजातीयं सिद्धपुरुषमपि तृणमिवावधीरयेयुः'। इत्युक्तवति सुहृदि भणितं मया 'स्वाभिमानविवर्जिता स्युरमी खलु यत्स्वजातिमनादरेण निरूपयन्ति' इति।

अथ गृहाद्बहिर्मरुतः प्रचण्डनादोऽश्रावि। प्रभञ्जनश्चासन्नप्राय इव प्रत्यभात्। अपराह्णसमये सरित्पते रोषाकुला ऊर्मिमाला वीक्ष्य प्रातर्मत्स्यान्वेषणाय तत्स्वल्पपोतैः प्रस्थितानां मत्स्यजीविनां मन्दभागानां चिन्तनेन व्याकुलोऽभवम्। नासीदपि मे शङ्का निष्कारणा। परेद्युर्हि समुद्रतटे शोकोद्रेकेण ग्रस्तं जनसमूहमद्राक्षम्। भूयिष्ठास्तत्र तत्तदाप्तविनाशात्सकरुणं व्यलपन्। भर्तुर्नाशस्य शोचनीयोदन्तेन स्तम्भीभूतामम्बामपि समुदायेऽस्मिन् व्यलोकयम्। संक्षुब्धबद्धदृष्ट्यास्तस्या रुचिरलोचनयुगलं बाष्पबिन्दुशून्यमासीत्। परेशकृपया सुरक्षितप्रत्यागतान् बान्धवान् कतिचिद्योषितः प्रहर्षाश्रुप्रवाहेण प्लावयामासुः। 'तवात्मजो न पुनरायास्यती' ति विज्ञापिता काचित् स्थविरा कुक्षियष्टिमवलम्ब्योपस्थितेह शोकार्णवे न्यमज्जत्। दुःखातिशयात् तपस्विनीयं पलितकेशकलापमात्मीयमाकर्षदुरश्च प्राताडयदवसन्नपाणिभ्याम्। अम्बा तु निश्चला केतकीव पाण्डुरा लुप्तभावा मुषितेव पराभूतेवान्तर्दहद्दुःखात्मनः सहस्रधा स्फुटीकुर्वती जोषमस्थात्। जनपूर्णोऽपि शून्यीभूतो ग्रामो दशदिशश्चान्धीभूता इति निःशब्दं निर्विकारवदनं सा व्यानक्। प्रथमदर्शनजनितप्रीतिरनुकम्पयाभिभूतोऽहं

तामुपेतवान् परं किं वक्तुमुचितमिति प्रतिपत्तिमूढस्तूष्णीमेव मुहूर्तमवस्थितवान्। क्षणोत्तरम् 'अपि सह भवत्या कुटीं गच्छेयमि' त्यनुनेतुमधर्षि मया। अथ सकम्पशिरसानुमत्य मदभ्यर्थनां मयानुगम्यमानाग्रे सा प्राचलत्। पुत्रदर्शनेनाश्रुबिन्दुषु विमुक्तेष्वेतद्दुःखावेगस्योत्कटतेषन्मन्दीभवेदित्याशास्यत बलवन्मया। परं मत्पूर्वकल्पितप्रतिकूलं तयाचरितम्। अपि तातपादा नाद्यापि निवृत्ता इति बहुदिनान्तरितदर्शनेनेव सोत्कण्ठं प्रतीक्षमाणेव बालेनानुयुक्ता सा रुद्धकण्ठं मन्दस्वरेण प्रत्युवाच। तव तातस्य पोतो न प्रत्यायातोऽद्यापीति। भग्नाशः शिशुरशङ्कितानर्थोऽपि चिन्ताकुलोऽभूत्। परं सायं समुद्रतीरं गत्वा पितरं सहर्षं विस्मापयिष्य इति संकल्पयितुं बालः प्रवृत्तोऽभूत्। तातचरणा मामुद्धृत्योच्चैर्गगनं प्रति निक्षेप्स्यन्ती त्यभिधाय प्रेमनिर्भरेण मनसा चिन्तयन् पतत्रिशावकानन्दं विडम्बयमानः प्रजहास। अम्बा तु पतिविरहविधुरापि न बाष्पादिकोद्गारमकार्षीत्। शून्यदृष्टिः सा केवलं बालस्य जल्पनं श्रावं श्रावं निःशब्दाऽतिष्ठत्। शोकस्य तादृगनुद्रेकोऽस्वाभाविकः प्रत्यासन्नानर्थशंसीति प्रत्यभान्मे।

तदनु श्वः पुनरायास्यामीति बालकाय प्रतिश्रुत्य कुटीरं व्यसृजम्। क्रमेण मन्दीभूते प्रभञ्जनवेगे सायंतनिकसमयोऽतिरमणीयतामभजत्। सुहृद्गेहे मदर्थं निर्दिष्टप्रकोष्ठस्य वातायनतः सरसः श्लक्षणतामनुकुर्वन्तमब्धिमवालोकयम्। विदूरं ददृशे सरित्पतिः सरितं कामपि संजिगमिषुरिव प्रशान्त इव रोमाञ्चित इव तथा निश्चलो यथा नीलमयाभोगादवलम्बमानोंऽबरतलादिव। अथ तस्मिन् क्षणे सागरतीरे कस्याश्चिन्नौकाया आगमप्रसंगतः संजातसंरम्भः स्फुटमालोक्यत। प्रायो नौवाह्यभाण्डसंग्रहस्य पोतेनानेन भाव्यमित्यतर्कि मया। पुरः प्रस्थानात्प्राक्केचन पान्था नौकाया अवारुहन्नित्यपि मयादर्शि।

अथ परेद्युः प्रातस्तरां सह मित्रेण विहाराय गतेन मया सूर्यास्तमनात् पूर्वमम्बाया गेहमुपस्थातुं नापारि। विदूरस्थालोके बद्धदृष्टिः शून्यलोचना तपस्विनीयं कुटीरस्य देहल्यां तिष्ठन्तीं तदन्तिकं समुपेतमपि मां नालोकयत्। 'अपि कुशलं बालकस्ये'त्यनुयुक्ता मया साऽब्रवीत्। 'उपारूढपितृस्वरश्रवणकुतूहलं क्लाम्यति स्म बालस्य मनः। रात्रौ

पितुरन्वेषणार्थं निर्गतो गुहान्नाद्यापि प्रत्यागतः। बालस्य दैवमनुकूलं प्रसादकं भवेदिति मनसि कृत्वा तस्य प्रस्थानमन्वमंसि मया। को जानाति काऽद्भुतघटना नियतेरिति। अपरं च तज्जनकस्य तिरोहितस्य शोचनीयं वृत्तं तस्मै निवेदयितुं नैच्छम्। समुद्रतीरे कोऽपि तस्मै निवेदयतु वृत्तम्।' इत्यभिधाय स्फुटितहृदयाऽन्तर्गतशल्येन दुःसहदुःखाभिहतेव प्रथममेव मुक्तकण्ठं रोदितुमारब्ध सा। 'जन्मान्तरदुष्कृतस्य फलमवाप्यते पातकिन्या मये'ति। मुहुर्मुहुरात्मानं सगद्गदं शपन्ती नेत्रजलमनवरतमस्रावयत्। 'नार्हस्यनिन्द्यमात्मानं निन्दितुमि' त्यभिधाय द्रवीभूतान्तरङ्गोऽहं तस्या बाष्पप्रवाहोपशमपर्यन्तं जोषं स्थितवान्। ततश्च 'बालमन्वेष्टुं यास्यामि भवत्यानुमत' इत्युक्तवन्तं मां कम्पितशिराः प्रत्युवाच दीनदीना सा। 'निखिलरात्रमाप्रभातं पर्यटन्त्याऽपि न मयोपलब्धो बालो न केनापि मत्स्यजीविनावलोकितो वा। स्वल्पिष्ठेव ग्रामटिकेयं परं वेष्टितास्ति परितः पयोधिना। नावतिष्ठेत स पितृरहितः सह मया मन्दभागिन्येति प्रायो नियत्या निर्दिष्टं स्यात्'। इत्यनवरतं नयनजलवर्षिणी साऽभिधाय करपल्लवाभ्यां नेत्रजलप्लावतिमाननमावृत्य क्षणं निश्चला तस्थौ। न व्यलपत्सेदानीम्।

अथ नैकदिवसान् बालकमम्बाया अन्विष्यापि सर्वत्र नैष्फल्यमेवोपनतं गवेषणस्य मे। पितुस्तिरोधानमनुकुर्वतोऽस्यैकस्यैवात्मजस्यादर्शनेन तपस्विनीयं नचिरादवसन्ना भवितेति मे शङ्का याथार्थ्यं न भेजे। तथा हि। न पुनस्तां रुदतीमपश्यम्। दैवनिष्ठा तस्या मां व्यस्मापयततराम्। क्रमेण च सम्प्राप्य स्वास्थ्यं मनःशान्तिमपि शनैः शनैरुपालभत सा। पतिपुत्रयोर्विनाशान्निजसुखं न लुप्तं परमनवरतं तयोश्चिन्तनेन तन्निरन्तरमेव स्थास्यतीति सा मां समाश्वासयत्। साध्व्यास्तस्यास्तितिक्षा मनीषिणस्तत्वज्ञानमत्यशेत खलु। असामान्यस्ता-दृगुपशमः। तदत्र पुनरागन्तुं न विस्मरिष्यामीति ग्रामान्निर्गमात्पूर्वं सुहृदे प्रतिश्रुतं मया।

विंशतेर्वत्सरेभ्यः प्राक् सुहृदे मया यत्प्रतिज्ञातं तदिदानीमस्मरमहम्। नौकाभङ्गवृत्तश्रवणाघाततोऽवसन्नगात्रस्य ममोपशमाय परिस्थितेः परिवर्तनाय च पूर्वोषितां सुहृदो ग्रामटिकां प्रति गमनं प्रशस्यं स्यादिति समुद्रतटवर्तिग्रामजाताभिगामिनीं नावमध्यरोहम्। नौकायामस्यां

सहस्रार्धपान्थभारधारिण्यामवालोक्यन्त मत्स्यजीविनः, परिव्राजकगणो, यात्रिकमण्डलं, जाङ्गलिकजातं, वैवाहिकमण्डली, अरबस्थानदेशीया आपादमस्तकाम्बरच्छादितविग्रहाः प्रमदा, अविसेनीदेशस्य धराधिपः, फारसीदेशीयपुरोहिता दीर्घकञ्चुकधारिणो धृतशुक्लोष्णीषा, नवयौवनमेकं पुरुषं नयन् कश्चिन्नानाजातीयजनसन्दोहश्च। अश्रावि मया यद्युवकोऽयं महर्षेविश्वामित्रस्य वंशजोऽद्भुतपूर्वप्रबोधप्रभावान्मत्स्यजीविभिर्निखिल-समुद्रतीरसमीपवर्तिग्रामनिवासिभिः पूज्यमानो विश्वत्रातेवाभिमतोऽन-ल्पमुनिकदम्बपरिवृतो मुनीन्द्रः श्रीगणेशनामेति। आलोक्य तं समुपारूढ-निर्भरयौवनं विनयावनतमौलिं महानुभावं क्वापि पूर्वदृष्टोऽयमित्यमंसि मया। परं स्मृतितमोमयसरण्यामन्विष्यापि यत्नस्य मे नैष्फल्यमेवोपनतम्। निःसंशयमासीत्किमप्यवर्णनीयं तेजः कुमारस्यानने यन्मां समस्मारयत्पुराणेषु सङ्कीर्तिता दिव्यविभूतीः। तमालोक्य कारणं विना सहजप्रेमनिष्पन्दनिर्भरं मे हृदयं समजनि।

अथोत्तरेद्युर्गगनतलामध्यमारूढे सवितरि नौका निर्दिष्टस्थानं सकालं यदा प्राप तदा मुनिकुमारमिमं संभावयितुं मत्स्यजीविनां स्त्रीपुरुषार्भकाणां महौघो घट्टे संमिलितोऽदर्शि मया। समुल्लासितो जनोत्साहेन लोकयात्रार्णवेऽस्मिन् पुनरपि निमङ्क्ष्यामीति मनसि कृतं मया। मदागमनाभिज्ञः सुहृन्मे न समायातस्तत्र। कथमपि लब्धमार्गो व्यलोकयं काञ्चनातिकृशाङ्गयष्टिं मध्यवयस्कामङ्गनां यतिकुमारदर्शनानन्दानर्हामिव जनैर्बहिष्कृतामिव प्रहतां सरभसं प्रचालितां च। पूर्वं वर्णिता मित्रेण मे धर्मोन्मादजन्ममूढकल्पनाकथा श्रद्धालोर्जनस्यास्य मत्स्मृतिपथे न्यपतदिदानीम्। घट्टास्थले विलम्बमानो मुहूर्तं स्थितवानहमन्वेष्टुमम्बां यस्या ईश्वरेच्छावलम्बनं तितिक्षा च मामियत्कालोत्तरं पुनरायातुमत्र आलोभयेताम्। परं मोघीभूतो मे गवेषणप्रयत्नः। न कापि तस्याः संवादिनी दृष्टिगोचरता मयासीत्। तदनु भग्नाशः प्रस्थितः सुहृद्गेहम्। अस्तङ्गते भगवति सहस्ररश्मौ प्रदोषस्य मन्दमन्दप्रकाशे स्खलितमार्गोऽपि दिष्ट्या न चिरात्समुचितचरणपथमुपलभ्य तत्र च प्राप्तवानहम्।

अथ रात्रौ समाप्तसंध्याहारयोरावयोरभाणीत्सुहृन्मे – ''निःसंशयं

समायातोऽसि पुनरादातुं किमपि बलवर्धकममृतमयं विंशतिवत्सरपूर्वमभिनन्दितं त्वये''ति। तथैव किलेति तद्वचसो यथार्थ्यमुररीकृत्यापृच्छम् 'अपि जीवति सौम्यवृत्तिरम्बाद्यापि न वेति'। 'जीवत्येव सा परमतीताभिज्ञाना खलु। कृत्स्नशः परिवर्तिताऽस्ति सम्प्रति' इत्यभिधाय मे सुहृत्तमाखुपात्रं प्रज्वाल्य वृत्तमम्बायाः कथयितुमुपाक्रमत। यथा –

''तपस्विनीमिमामकाले परिणतवयस्कां नाभिज्ञास्यसि खलु। निष्फलजीवितेन निर्नाथा, निरालम्बना, ग्रामीणैरत्र मायाविनीति तिरस्कृता, निद्राचारिणो, विंशत्यब्दपूर्वं तिरोहितं तनयं समाह्वयन्ती जलान्तः प्रच्छन्नो ध्रुवं पुनश्च स्वस्यै समर्पयिष्यत इति प्रतीता।'' एतदाकर्ण्य दोदूयमानचेतसं मां सुहृदभ्यधात् पुनः। 'अज्ञानान्धकारस्य तेषां ध्वंसनमशक्यप्रायम्। श्वो हि वीरेन्द्रस्य कन्दरेऽत्र कस्यचन तरुणतापसस्य श्रोतुं प्रवचनं संगंस्यन्ते परःसहस्राः मत्स्यजीविन' इति।

'मुनिकुमारो सहपान्थो मे। तथैव नौकया प्रवासं कृतवानद्य।' इति निवेदितो मया सुहृद् व्याहरत्।' विश्वत्रातेवाभिमतस्तरुणोऽयमलौकिकप्रभावः स्पर्शमात्रेण सर्वव्यथामुपशमयतीति श्रद्धधते मत्स्यजीविनोऽत्रत्याः। विश्वामित्रकुलोद्भवो भूसुरवरोऽयमिति तमन्धवत्पूजयन्ति। यदि मया सह वीरदुर्गमायास्यसि श्वस्तदा तेषां हास्यास्पदीभूतां श्रद्धां कुमारेऽस्मिन् स्वयमेव साक्षीकरिष्यसि इति।

अथ रजन्यां तस्यां शयने शयितोऽपि चिरमुन्निद्रः स्थितवानहम्। हिमांशुना पूर्णकलेन विजनतटोऽम्बुधे रजतायितो नैकयोजनदीर्घधवलप्रच्छदपट इव शुशुभे। अतिरमणीयराकायामस्यां शयने जाग्रदवस्थितिर्नोचितेति तपस्विन्या अम्बाया दिदृक्षया प्रेरित इव बहिर्गन्तुं प्रवृत्तोऽभवम्। विविक्ते रत्नाकरस्य तटे चन्द्रमण्डलेनाप्लाव्यमाने ज्योत्स्नया क्षणमात्रं प्रचलतो मे विदूरं मद्दिशमभ्यायान्ती दीर्घकृशाकृतिरम्बा दृष्टिगोचरतामगमत्। यथा यथा नेदीयसी साऽभूत् तथा तथा शोकात्मकगीतस्य मन्दमन्दकलरवः स्फुटमश्रावि मया। अन्तरान्तरा

च सुतरामवदीर्णहृदयायास्तस्या रुदितध्वनिः शुश्रुवे। नेदिष्ठभूतायास्तस्या अस्थिपञ्जरभूतायास्तत् परिवर्तनमालोक्य नयने मे पूर्वदृष्टाम्बेयमिति न व्यश्वसिताम्। पूर्वं रुचिराकृतेः परमिदानीमाभासमात्रभूताया नेत्रयुगलं मुकुलितप्रायं शिलोत्कीर्णमूर्तेर्नेत्रयोः सादृश्यमभजत्। समुद्रतटप्रान्ताभिगमनात्सावधानमात्मानमभिरक्षितुमलं जागरिता दीनदीनस्वरेणाह्वयन्ती निजात्मजं प्रसारितकरयुग्माऽन्वनयत्पयोधिं यथा – ''हा हा रत्नाकर! वञ्चितास्मि त्वया। किमर्थं निर्घृण इव गोपायसि पुत्रैकजीविताया मे गणुम्। अपि नास्ति पर्याप्तो रत्नराशिस्तव जलाभ्यन्तरे यदपहृतं त्वया मे पुत्ररत्नम्'' इत्युपालभत सा मुहुर्मुहुः सरित्पतिम्। अन्तरान्तरा पुत्रस्य जीर्णवस्त्रखण्डं कण्ठे गृहीत्वा व्याक्रोशत्सा। समुपेता नेदिष्ठमपि मदुपस्थितिमजानतीव पुरः प्राचलत्। चिरं समाह्वानकलरवं कुर्वती प्रस्खलन्ती पदे पदे बाष्पायमाणलोचना सनिर्वेदं पुलिनेषु गतागतमकरोद्यावदतिश्रान्ताऽसौ समजनि। अहमपि रजतायितस्फटिकसिकतास्वेव चिरायितोऽवातिष्ठे यावत्सा स्खलत्पद्भ्यां स्वकुटीरं प्रति गच्छन्ती दर्शनपथातीताऽभूत्। अम्बाया अतिकरुणवैक्लव्यरुदितान्यनवरतमस्वनन् मत्कर्णशष्कुल्यां सुतरां च तैर्व्यदीर्यत हृदयं मे।

प्रभातस्य विकसत्पुष्पामोदमयेन शीतसमीरणेन चुम्बिताननः प्रमुदितान्तरङ्गोपि तपस्विन्या अम्बायाः शोचनीयदशां स्मारं स्मारं सुहृदालयमभ्यगमम्। सायं सह मित्रेणाव्रजं वीरदुर्गं यत्र मुनिकुमारः श्रीगणेशो महतीं सभामधिष्ठास्यन्नासीत्। आप्रातः स्त्रीपुरुषबालैः परःशतैर्मानिताध्यात्मिकगुरोर्दर्शनपिपासितैर्ग्रामस्य धूलिधूसरा, रथ्याः सङ्कीर्णाः समभूवन्। मध्याह्नात्पूर्वमेव जनौघपूरितस्य पुरातनदुर्गस्य दीर्घकश्मीरजपटलेनेवाच्छादितस्य विशालप्राङ्गणकुट्टिमस्य मध्यभागे विरचितमुत्तुङ्गमासनं सामोदसुमनोमालिकाभिर्मण्डित सौम्यमुखः सुस्मिताननो गौरवर्णः प्रशान्तमूर्तिस्तेजस्वी निखिलकोंकणावनिप्रथितमहिमा चतुर्विंशतिवर्षदेशीयो मुनिकुमारोऽयमध्यास्त प्रागेव। विशाले तस्मिन् सभास्थाने तस्य स्वरध्वनिं सुखेन श्रोतुं प्रभवेवेति नेदिष्ठस्थले दिष्ट्यासनद्वय–

मुपलब्धमावाभ्याम्। अहं चादृष्टपूर्वविषयकुतूहली मुनेः सङ्कीर्तितप्रभावेऽश्रद्धा-नोऽपि तद्गिरं श्रोतुमुत्कण्ठितोऽभवम्। सुहृन्मुखाच्छ्रुतामम्बां दयनीयदशापन्नां प्रत्यक्षीकृतां चात्रलोकयितुं बलवदाशास्यत मया। परं सर्वतोऽपि निपुणं बद्धदृष्टेर्मे न सा दृष्टिपथे न्यपतत्। जनसन्दोहेऽस्मिन् पुरुषवनितार्भका मत्स्यजीविनां विहाय लोका इतरजातीया अप्यलोक्यन्त। तेष्वासन् कुष्ठिन, आधारदण्डमवलम्बमानाः पङ्गवः, अन्धा, व्याधिग्रस्ताः स्तनंधया आक्रोशन्तः क्वचित्क्वचित्सर्वेऽपि मुनिवरस्य साहाय्याभ्यर्थिनः समुपस्थिता आसन्।

परं हन्त नासीदम्बात्र क्वापि।

प्रवेशद्वारस्य सम्मुखीनादुन्नतासनान्मुनियुवा केवलं निखिलसम्मीलित- सभामण्डलं किंतु प्राङ्गणं प्रविशतो जनानप्यालोकयितुमपारयत्। पीठिकायां तत्पादयोः समीपे निहिता एकैकशो भक्तानां सहस्रैरुपायनीकृताः सुगन्धिसुमनोमालाः, क्षेत्रिभिनानाविधफलमोदकादिसञ्चयः, श्रेष्ठिभी रजतसुवर्णनाणकपूरितानि पात्राणि रत्नखचिताभरणजातं च। तानि सर्वाणि स्पृष्ट्वैव सशिरःकम्पं स्मितमात्रेणाङ्गीकृतानीवादर्शयन्मुनिः। अथ भगवतो मार्तण्डस्यास्तमनसमये समग्रमपि प्राङ्गणं परःसहस्रैर्जनैः पर्यपूर्यत। तदा मुनीन्द्र आसनात्समुत्थाय बद्धाञ्जलिः श्रीमद्भागवतपुराणगतस्तोत्रश्लोकं गम्भीरेण श्रुतिमनोहरेण स्वरेण गातुमारब्धवान्। यथा –

यं ब्रह्मावरुणेन्द्ररुद्रमरुतः स्तुन्वन्ति दिव्यैः स्तवै-
वेदैः साङ्गपदक्रमोपनिषदैर्गायन्ति यं सामगाः।
ध्यानावस्थिततद्गतेन मनसा पश्यन्ति यं योगिनो
यस्यान्तं न विदुः सुरासुरगणा देवाय तस्मै नमः।।

समाप्तस्तोत्रपठनमात्रः क्षणं जोषं स्थित्वा यावदुपदेष्टुमारभते तावत्कस्याश्चन वनिताया आक्रोशस्वरः पुरुषस्यैकस्य सन्तर्जयमानस्य कर्कशध्वनिनानुगम्यमानः सहसा समाकर्णि। कोऽपि जनः प्राङ्गणं

प्रविविक्षुर्दौवारिकैः सरभसं निष्कासितो बहिःस्यादिति संक्षोभस्य कारणमवगतं मया।

''प्रविशतु सा। प्रविशतु सा।'' इति प्रत्यक्षीकृतव्यतिकरेण मुनिना प्रोच्चैरादिष्टम्।

''मायाविनीयम्। बहिष्कृतास्ति। निष्कास्यतां सा।'' इति श्येना इव शकुनिमण्डले युगपदेव केचन सभामण्डले समाक्रोशन्।

''मा भूत्कोऽपि बहिष्कृतो विभुना निर्मितः प्राणी। समायातु स मत्सविधे इत्युदीर्येङ्गितेनैव दौवारिकं प्रवेशयितुं स्त्रियमेकां निरदिशत्तापसः।''

अम्बामन्तरा नास्तीयमन्येति सहचरो मे कर्णेऽजपत्। वस्तुतश्च साऽभूदम्बैव। दीर्घाचलाम्बरवेष्टितशिथिलाङ्गयष्टिः सा यावन्मन्दमन्दमसृपत् प्रति पीठिकां मुनेस्तावत्तामुद्दिश्य विकृतापवादोक्तिनिकरो जनस्य मुखान्निसृतः शुश्रुवे। मुनीन्द्रेणोन्नमितमात्रे हस्ते कलकलरवमुखरितः समुदायः सद्यस्तूष्णीं स्थितः। यतिश्च पार्श्वमुपेतुमम्बायै संज्ञां ददौ। सा च सप्रश्रयं विनतमुखी संत्रस्ता शुनीव सकरुणमभिहिता वेपमाना तं समुपेत्य पार्श्वेऽवातिष्ठत। यतिं स्वमनोरथं पिपृच्छिषोस्तस्या वागुदीरणात्पूर्वमेव व्यलीयत।

'कोऽस्ति भवत्याः क्लेशः। निर्भयं कथ्यतां तावदि' ति सौम्यया गिरा सातिशयं दर्शितादरो मुनिर्मन्द्रेण स्वरेणान्वयुङ्क्त। तदाकर्ण्य चक्षुषी विमृज्य बाष्पान् कथं कथमपि संरुध्य निकृष्टेति जनेन मन्यमानाहमिति व्रीडया, भिया, दीनतया क्षितितलनिहितनिश्चलनयना मुहूर्तं निःशब्देयं तस्थौ।

''मा श्रुणुत मायाविन्या अस्या असंबद्धं कुटिलवचः। निष्कास्यतामेषे'' ति प्रतिबध्नद्भिरम्बाया विवक्षितं बहुभिः सभासद्भिर्युगपदाक्रुश्यत। मुनिश्च हस्तमुन्नमय्य भाषणविच्छेदकृदाक्रोशं प्रतिबध्य 'कथ्यतां निर्भयं भवत्ये' ति भूयोऽभ्यधादम्बाम्। तदा प्रबलसम्भ्रमातिभारमन्थरहृदया सा न्यगदत्।

''भगवन्! पुरा तिरोहितपितुरन्वेषणाय निर्गतो जलधावन्तर्विलीनोऽस्ति ममात्मजो गणुः। तमन्तरा नास्ति कोऽपि मेऽन्यः। पुत्रैकवत्सलायै मे समर्प्यतां स बालः। न किमप्यस्ति खल्वसाध्यं भगवतः। कुवलयान्यपि दिनकरकरानुरागीणि भवेयुः, सरोजान्यपि रजनीनाथेन सख्यं कुर्युः, कौमुद्यपि कृष्णपक्षमनुव्रजेत्। भगवन्! किमसाध्यं भवत्तपःप्रभावस्य?'' इत्यम्बा रचिताञ्जलिर्मर्मस्पृशा स्वरेण सहृदयान्तर्भिदा सगद्गदमगदत्। ततश्च निःशेषशोचनीयकथामात्मन आख्याय पटप्रान्तेनाच्छाद्य विह्वलाननं दुर्निवारबाष्पवेगमपारयन्ती निवारयितुमुन्मुक्तकण्ठं व्यलपत्।

अथ गाढमार्द्रीकृतहृदयो मुनिरतर्किताकल्पनीयदैवाघातप्रहत इव विस्मितः सम्भ्रान्तः स्तम्भित इव मुकुलितेक्षणः क्षणमात्रं जोषमवातिष्ठत। अम्बाया दर्शनादेवोपारूढप्रीत्यतिशयस्य तस्य भूतवृत्तपरम्परा स्मृतिपथे विद्युद्दीप्तिशीघ्रताविडिम्बिनी सपदि समायासीत्। कमपि वृत्तान्तं स्मारित इव चिरविनष्टं प्रियजनं प्रापित इव क्षणं दोलायमान इव स्थितवान् सः। अशुभशंसिनी निःशब्दता यावत्सभामण्डले प्रासरत्तावद्गाढं विमृशतस्तस्यान्तः कर्तव्यस्वप्रतिष्ठयोर्मध्ये द्वन्द्वं प्रावर्ततेति तदाननमण्डलादन्वमीयत। क्षणोत्तरं प्राणपरित्यागेनाप्यभ्यर्थिन्या असह्यशोकवेदनाप्रतीकारस्यावश्य- कर्तव्यादात्मनः प्रतिष्ठाविलोपं तृणमिवागणयत्। समस्तमत्स्यजीविनाम–ज्ञानामम्बामुद्दिश्य तिरस्कारस्य प्रत्यक्षदर्शनेन ज्वलदुल्कासदृशेनेव विचिन्तनतुमुलेन तच्चेतो व्याकुलीबभूव। नेतःपरमज्ञानान्धतमसे मग्नानामेषां मोहविलसितं मौर्ख्यस्खलितमज्ञानपद्धतिश्च समुत्तेजनीयानि खलु। मयैव पुनरेतेषां मूढतासमुद्घोष्या' इति निर्धार्य 'भगवति! न सम्प्रति गूहति जलनिधिस्तवात्मजम्। मातस्तिष्ठत्येव तवाग्रेऽद्य तव सुतो गणुः। तन्मुच्यतां शोकानुबन्धः।' इत्युदीर्याम्बायाः पादयोर्न्यपतन्मुनिर्गणेशः। सा च क्षणं विस्मयातिशयेन स्तम्भितेव भूलग्नेवातिष्ठत्। ततश्च तापसः समुत्थाय कर्णे तस्या यावज्जपति किमपि तावदमृतवृष्टिप्रतिममाकर्ण्य तद्वचनं 'मम वत्स! मम वत्से' ति सगद्गदं निगद्य प्रहर्षनिर्भरप्रेमनिर्झरौध-

परिप्लुतातिदूरप्रसारिताभ्यां दोर्भ्यां पर्यष्वजत सा मुनिम्। ततश्च तस्याननशिरोरुहहस्तांसपृष्ठं स्वप्नात्सहसा जागरितेव परामृशत्। स च करतलेनाभिनवपल्लवेनेव हर्षबाष्पप्रक्षालितमाननं मातुर्ममार्ज। समृद्धमनोरथा वृद्धा तरुणस्याङ्गप्रत्यङ्गानि निपुणं निरूप्य विस्मय-विस्फारितलोचना तं मुहुर्मुहुर्गाढमालिङ्गत्।

अथ स्वप्नेऽप्यसम्भावनीयं समाचेष्टितं मुनेरालोक्य 'मायया विमोहितोऽसौ मायाविन्ये' ति रोषाविष्टा मत्स्यजीविन उदक्रोशन्। धर्मान्धेषु विप्लवोन्मुखेषु तेषु रुधिरस्रावणदुर्वहाभासोऽन्तरिक्षे विलम्बमान इव स्थितः। पशुमारमम्बां मारयेयुरज्ञानान्धा जना इत्याशङ्क्यानिष्टपरिहारायान्वर्थनामा मुनिः परित्यज्य प्रतिष्ठामनुगैरात्मन्यारोपितामपकर्षाधिक्याद् व्यमोचयदम्बां सावधानं च तां जनोपद्रवादभ्यरक्षत्। तदनु तेनास्फुटहासज्योत्स्नाविशदेन मुखचन्द्रेण भूयो बभाषे।

''अयि भोः सज्जनाः। नेयं मायाविनी परं मे प्रसूः। श्रूयतां मम वार्ता विस्मृतस्मृता तावद्। विंशतेर्वर्षेभ्यः पूर्वमनतिक्रान्तशैशवाऽहमन्धकारितदिक्षु वारिधेः पुलिनेषु तिरोहितपितरमन्विष्यञ्शर्वर्यां पर्यटन् परिश्रान्तः क्रव्यमानदेहः शुष्ककण्ठो मूर्च्छितः सिकतायां निक्षिप्तविग्रहः शयितः। कतिपयदिवसोत्तरं तापसजनैः परिवेष्टितमात्मानं नौकायामद्राक्षमहम्। नैकमासान् ज्वराभिभूतः सन् सयत्नं तापसैरहमहमिकया सेवित उद्भूतमूर्ध्नान्धकारोऽज्ञातदेशमवतीर्णः क्वाहमागतः कुत आनीतः किमकरवं कोऽहमिति न किमप्यज्ञासिषम्। नष्टस्मृतितया मत्पितरौ मद्बाल्यं मद्गेहं ग्रामोऽयं सर्वमपि मत्स्मरणसरण्याः सम्मार्जितमिवाभूत्। न कोऽपि साधुजनमण्डले तस्मिन्नजानात्कोऽहं का मे गतिः कस्यात्मज इति। तदनु तेष्वेकेन महानुभावेन महर्षिणात्युदारचेतसा परिपोषितः पुत्रनिर्विशेषं लालितश्च। स च मे परमपूज्यो गुरुदेवोऽभूत्। अतिप्रेम्णा संवर्धितं मां द्विजपुत्र इत्याकलय्य निखिलविधयो विप्रजनोचिता मे स्वयमेव तेन निर्वर्तिताः। पितृनिर्विशेषे तस्मिन्नस्निह्यं सातिशयमहम्। अथातिक्रान्तशैशवस्तेनैवप्रापितप्राथमिकशिक्षणोऽध्यापितधर्मशास्त्रवेदान्तो-

पनिषद्रामायणमहाभारतादिपुराणकथाजातं च। विंशतिवर्षीयो नैष्ठिक-ब्रह्मचर्यव्रतं ग्राहितः क्रमेण चाधिगमितभगवद्गीतारहस्यादिविषयनैपुण्यः प्रवचने लब्धशिक्षो गुरुदेवैरभिनन्दितः प्रोत्साहितश्च, नव्यनव्यदेशान् प्रेषितोऽहं सनातनधर्माभिरक्षणाय। बहवो देशा मयावलोकिताः। नवा नवा भाषा अवगताः। नूतना नूतनाः समुदायाचारपरिपाट्य आकलिताः। वर्षत्रयात्प्राग- तिमहनीयगुरुदेवानां पवित्रपादैरमरभूमिरलङ्कृता। तदारभ्य तदाज्ञानुसारेण तदनुगैरनर्हो जनोऽयमतिसामान्यो गुरुदेवानां पदे प्रतिष्ठापितः। इदानीं दैववशाज्जननीमालोक्य तन्मुखात्पूर्ववृत्तान्तं निशम्य कस्मादप्यगम्य -दैवविलसितात् स्मारितचिरविस्मृतबाल्यवृत्तान्तः सर्वमिमं प्रतिष्ठाडम्बरं विस्रष्टुं संनद्धोऽस्मि।

इत्यतिगम्भीरस्वरेण निवेद्य क्षणमात्रं स्वभावधीरप्रकृतिरपि मुनिर्नितरां पर्याकुलस्तूष्णीमवातिष्ठत। तदनु नैकप्रकारजननीलालनसुखोचितहृदयोत्कण्ठो मुहुर्मुहुः प्रियशतमधुराभिः शोकापनोदनिपुणाभिर्वाग्भिस्तामाश्वास्य प्रहृष्टसम्भ्रान्तामम्बां विह्वलान्तःकरणां गरीयसा प्रेम्णा प्राङ्गणात्सुरक्षितामनैषीत्।

''नायं ब्राह्मणकुमारो मत्स्यजीविनः सुतस्तु केवलम्। निर्गच्छतु। जात्या मत्सजीवी केवलमयम्। धिगस्मान्। स्वजातीयोऽप्युपासितः पूजित आराधितो देववदस्माभिः।'' इत्यात्मने नितरां कुपिताः समगर्जन् ग्रामीणाः पुनः पुनः। भीषणोत्क्रोशश्च तेषां न व्यरमद्यावत्पुत्रद्वितीयाऽम्बा प्रदोषस्यैधमानतिमिरे शनैः शनैरगमददर्शनम्।



# १४. आत्मनिर्वासनम्

चिरादवसितप्रायो दिवसो महाराष्ट्रमण्डलनिविष्टे कस्मिंश्चित्पर्वतबहुले लोनावळिनामनि ग्रामे। अस्तंगतो भगवान् मरीचिमाली। परिपूर्णद्विजपतिमण्डलसनाथीकृतगगनतलात्पतन्तीभिः पयःफेनधवल–रश्मिधाराभिर्धराधरो धरा च धवलिता आस्ताम् तावत्सहसा विदूराद्वृषभग्रीवावलंबमानायाः किंकणीमालाया झणत्कारे श्रुतमात्रे झटित्यासनादुत्तस्थौ भिषग्वर्यो गुणे इत्यन्वर्थोपनामा। मीराया गृहं गतो गृहस्यालिन्दप्रान्तं समुपेत्य विदूरं बद्धदृष्टिः सोत्कण्ठमुत्प्रेक्षमाणः स्थितवान्। 'स्वामिनी यमलपुत्राभ्यां सह नारिकेलपौर्णिमाप्रसंगवशाद्ग्रामान्तरेऽनुष्ठीयमानं महोत्सवमुपस्थातुं प्रातस्तरां प्रयाते'ति सेविकया विज्ञापितोऽपि प्रत्यैक्षिष्ट स मीराम्। कदा निवर्त्स्यति गृहं स्वामिनीत्यजानत्यामपि सेविकायां निजप्रयोजनस्य संपादनातिनिर्बन्धादानिशीथमपि महानुभावोऽयं प्रत्यैक्षिष्यत ताम्।

श्रावणमासोऽवसितप्राय इदानीम्। प्रचुरवृष्टिवशात्सप्ताहत्रयाभ्यन्तरे सर्वत्र स्रोतांसि प्रावहन्। संप्रति तु स्वस्वक्षेत्रसस्यसमृद्धये क्षेत्रिभिरभ्यर्थितो मघवा वर्षावेगमुपाशमयत्। दिवसोऽयं च विहारानुकूलोऽभूत्। नारिकेलोत्सवयात्रां विहाय मीरा नान्यत्र क्वाप्ययादिति जानद् गृहाभ्यागतं मित्रं नाभूदधीरम्। अथ घण्टाझणत्कार उपबृंहितो यावन्नीमतरुप्रवेशपथच्छायाभ्यन्तरे शकट एको नेदीयान् मीराया आलयं प्रति समुपेतवान्। गगनतले स्फटिकसरोवरसोदरे चमत्कुर्वता नक्षत्रमण्डलेन विरोचिते रजनिनाथेन सुमहद्वह्निगोलेनेवावलंबमानेन शकटवृषभयोर्धवलिमाऽप्यायत। न चिराद् 'अम्ब! 'अम्ब! पश्य पश्य पितृव्यमि'ति यमलयोरन्यतरोऽवादीद्गृहसमीपं विरते याने। वाहनस्य लघुद्वारे समुद्घाटिते काचिदुन्नतसुभगाकृतिः षट्त्रिंशद्वर्षीया सुवर्णवर्णा सुलोचनाऽवारोहत्परतश्च पञ्चदशवर्षदेशीयौ तस्य यमलौ अनिललोलकुन्तलौ सोज्झम्पं भूतलेऽवतीर्य प्रमुदिताननौ गृहाभ्यागतं प्रत्यधावताम्। सप्रेम लालितौ च सुहृदा पार्श्वमपासरताम्।

तावन्मीराऽपनीयोत्तरीयं स्कन्धाद् 'बहुतिथः कालः खलु श्रीमतां दर्शनपथमागतानाम्। केन शुभप्रयोजनेनागता भवन्तोऽद्ये'ति वाग्मिनी स्मयमानाऽन्वयुङ्क्तातिथिम्। 'संदेशमेकमतिगुर्वर्थमादधानो भवतीं प्रतीक्षमाणः स्थितवानहम्।' इत्यभिधाय विरतवचसि मित्रे मीरा किञ्चित्सम्भ्रान्ता तं न्यरूपयत् ततश्च भ्रूभङ्गमात्रेण कुमारा अपसर्तुं निर्दिष्टवती। क्षणाच्च यमलयोर्गृहाभ्यन्तरेऽपसृतयोर 'निखिलनिशामप्यत्रायापयिष्यं भवत्या दर्शनं यावदि' ति तेनोक्ते 'कश्चित्संदेशो वरुणेन्द्रप्रभृतीनां दिग्देवतानामि' त्यपृच्छन्मीरा सोपहासम्।

गुणे –(समस्तकनमनम्) न भौतिकदेवतायाः परं मानवदेवस्यैव सन्देशः। कश्चिन्महाभागो निवेदयितुमिच्छति – इत्यर्धोक्तविरतवचनो जोषं स्थितवानतिथिः।

**मीरा –** किं निवेदनम्। अपि मत्तनययोः पितरमुद्दिश्य वक्तुकामोऽस्ति निवेदकोऽयम्।

किञ्चिद्दोलायमानमानसेन किञ्चिसंभ्रान्तेन सशिरःकम्पमोमिति सुहृदा प्रतिपद्यमाने तयोर्मध्ये मुहूर्तं निःशब्दता व्यराजत। नेदिष्ठक्षेत्रादश्रावि मयूरस्य केकारवः। यात्रिकाणां गतागतं निवृत्तम्। ग्रामीणजनालापकलापो विरतः। विक्रेतृकलकलः शान्तः। भूलग्नदृष्टिर्मीरा च तावत्पुनरुन्नमय्याक्षियुगलं सप्रश्नाकूतमतिथिं निरैक्षत।

गुणे – मया सह भवत्यर्धरात्रे प्रस्थातुमर्हतीति प्रार्थये। निशीथे धूमशकटेन प्रस्थितौ समुचिते काले प्राप्स्यावः संकेतस्थानम्।

मीरा – कुत्र मां नेतुमिच्छन्ति भवन्तः। कमधिकृत्य ब्रूथ यूयमिति न किमपि विजाने। कथ्यतां विशकलय्य तावत्।

गुणे – (स्खलद्वचनम्) कस्यचन मित्रस्य सन्निधौ............

मीरा – यदि वत्सयोर्जनकमधिकृत्य वृत्तमिदं स्यात्तदा न किमपि श्रोतुमुत्सहे। व्यतीतो बहुतिथः कालः कुटुम्बं परित्यक्तवतस्तस्य।

पूर्ववृत्तस्मरणपरवशायाः मीरायाः स्वरो निश्चयनैष्ठुर्याभ्यां क्रकचकर्कशतामवाप। क्षणं निमीलितनयनो जोषं स्थित्वा

गुणे – अलमतिनैष्ठुर्येण। अतिकठोरताऽनुतापमेव जनयेत्।

मीरा – आर्याः, अनुतापस्य का कथात्र? वर्षदशकात् प्राङ् मामबलां सबालां तैरकारणं परित्यक्तां विजानद्भिरपि किमित्थमुच्यते भवद्भिः।

गुणे – सर्वमेतत्प्रतिपद्यते मया। तथापि मन्दभागस्यानुपस्य गृहत्यागस्य केनापि गूढकारणेन भाव्यम्।

मीरा – कोऽपराधो नाम कृतो मया यद्विना हेतुं संकेतस्थानकथनमपि परिहृत्य तिरोहितास्ते।

गुणे – परं स्वकुटुम्बस्य योगक्षेमाय सर्वमपि यथोचितं विरच्य निष्क्रान्तोऽनुपः। न किमप्यपेक्षते भवत्या कुमाराभ्यां वा।

मीरा – सुस्थितं कुटुम्बं विधाय गृहात्पलायनं स्वामिनः किमुचितम्। वरं दैन्यमपि न तु परित्यागः पत्या।

गुणे – (सशिरःकम्पं सखेदं च।) नैतद्भवत्याः सुखावहम्।

मीरा – श्रेयः खलु दारिद्र्य न पुनः परित्यागजन्योऽपमानः। तेषां निष्क्रमणादारभ्य कीदृशो विषमः कालो नीतो मयेति विदितमेव भवताम्। नेयं विधवा न वा सपतिकेति निखिलग्रामोऽयं कुत्सितवार्तापरम्परया कलङ्कयति मन्नाम सर्वथा। दयितेन समुज्झिता निर्दोषा तत्राप्याप्तजनाश्रयहीना सर्वथा संशयास्पदं कौलीनभाजनं भवतीति न किं व्यजानीत भवदीयसुहृन्मणिः। नासीन्मे पिता न वाग्रजो मामभिरक्षितुमित्यपि विदितमासीत्तस्य।

गुणे – भगवति, सत्यमेव सर्वम्। तथाप्यतिपारुष्यं मा स्म कृथा मद्दीनमित्रविषये।

मीरा – (विस्फारितनयना) अपि कांदिशीकोऽयमनुकम्प्यते भवता। दयन्ते भवन्तस्तस्य स्वैरवृत्तेः।

इयत्कालं मीरयात्मनि विद्वेषार्चिर्निह्नुतं सहसेदानीं रोषाग्निज्वालया प्रोद्दीप्यत।

गुणे – (मन्थरस्वरेण शुष्ककण्ठम्) आर्ये। इत्थमाचरितुं केनापि

गूढहेतुना प्रणोदितः स्यान्मम सहचर इति प्रतीतस्तस्यानुकम्पे।

मीरा – सपुत्राणां दाराणां परित्यागस्य तत्रापि पुत्रयोरुपनयनशुभप्रसंगे को नाम हेतुः स्याद् गृहमेधिनः। सर्वमेव तस्य कपटप्रबन्ध इति सुविदितमेव भवताम्। तथापि तत्प्रतिपत्तुं नेच्छथ यूयमिति मन्दभागाया मे दुर्भाग्यमेव।

इति तया सरभसमभिहितः सुहृद्वर्यो जोषमतिष्ठत्। तस्य निःशब्दतया प्रवर्तितेव परुषमुखरता तस्या व्यजृम्भत।

मीरा – किं नाम प्रयोजनमासीत्तस्य गमनस्य पञ्चवर्षदेशीययोर्यमलयोरनति–क्रान्तशैशवयोरुपनयननिर्वर्तनकाले। मंगलप्रसङ्गेऽस्मिन् निमन्त्रितातिथीनां विनोदनव्याजेन समानीता नर्तकी तेनैव नगरान्तरात्, तया सह च स पलायितवानित्यत्र नास्ति संशयलेशोऽपि।

गुणे – (करपल्लवाभ्यामाच्छाद्य नयने वादविवादादात्मनं निरोद्धुमिव सानुनयम्) नैवं। नैवं खलु।

मीरा – निखिलजगतो विदितमेतत्।

गुणे – (मित्रं रिरक्षिषुः) परिहासार्थेनेव चेष्टितेनानुपस्य भवितव्यम्।

मीरा – आधूमयानस्थानकं नर्तक्या सह गत्वा सत्वरं पुनरायास्यामित्युक्त्वा तिरोहितो मित्रमणिर्भवताम्। अप्येतया स्खलितमार्गया भाव्यम्। नासीत्सा खलु स्तनंधया न वातिजरठा।

गुणे – अदृष्टपूर्वो ग्रामोऽयं तयेति गन्तव्यमभूत्सह तया परहितदक्षेण सुहृदा मे। (सविषादम्) हन्त अतिदयालुत्वेन दोषभारमात्मन्यसकृदारोपयामास मित्रं मे वृथा परहितेच्छातिशयो हि न परिणमति शुभाय सर्वदा।

मीरा – (अवगणय्य तद्वचः सकोपं च) वाराङ्गना अद्वितीयाः संचरन्तीति सुप्रसिद्धमेव।

गुणे – अपि स्मर्यते भवत्या यद्रात्रौ तस्यां महावर्षविप्लवोऽभूदिति। युवतिश्च सा मार्गे कृच्छ्रापन्ना मा स्म भूदिति नगरपर्यन्तं तया सह तपस्विना तेन प्रायो गन्तव्यमासीत्। धूमयानमपि रजन्यां तस्यां

लोहपथाद्भ्रष्टमासीदतिवृष्ट्येति न स्मर्यते किं भवत्या।

मीरा – प्रच्छन्नकर्मनिष्पत्तयेऽनुत्तमो व्याजः खलु।

गुणे – बाह्यकारणैरेव सरभसमनुचितानुमानं कर्तुं नार्हति भवती।

इति सगद्गदमुक्त्वा स जिह्वामदशदधिकं भाषणं भयावहं भवेदिति।

मीरा – अहो! तद्विचेष्टितस्य प्रयोजनं शिशुरपि तर्कयेत्। अलमलं भूयो भूयः समर्थनेन वञ्चकस्य तस्य। भवन्मित्रं नर्तक्या तयाऽस्मद्भ्योऽपहृत्य स्वायत्तीकृतमिति स्फुटमेव।

मीरायाः कठोरकठोरालापशरसंघातं सोढुमक्षम इव हस्ताभ्यां श्रुती आच्छादयद्भिषग्गुणेमहाभागः। अङ्गणान्मयूरस्य दीर्घकर्कशः केकारवो मीराया वचस्समर्थनायेव पुनरश्रावि। सा च तावत्स्वपतिमधिकृत्य तन्मित्रस्यौदार्यभावप्रकटनेन वितुष्टेव प्रोच्चकैरुदक्षिपत्स्वशिरः। अनुपं दोषान्मोचयितुं तत्सुहृत्कृतप्रयत्नं क्षीणतरं सदोषतरमेव भावयन्त्यास्तस्याः प्रकोपाग्निर्भूयो भूय उददीप्यत।

गुणे – प्रायेणाकारणमपि सकलविषयोपभोगनिवृत्त्यर्थमतिकरुणार्द्राणि भवन्ति सतां चेतांसि। अपि पुरातनवीरस्त्रीरत्नानामुदारचरितानि तितिक्षादर्शभूतानि न भवत्यां प्रेरयन्ति सहनशीलताम्। चिन्त्यन्तां तावत् स्निग्धायाः शकुन्तलायाः परित्यागो दुष्यन्तेन। अनन्तक्लेशजातं सीताया अनघायाः।

समुदीरितवति विषण्णानने तस्मिन् मीरा बद्धदृष्टिः क्षणं जोषं तस्थौ।

गुणे – भवत्याऽनुपस्यापरिमितगुणगणश्चिन्तनीयो न तु तदन्तिमाचरणम्। आत्मनिर्वासनात्मत्यागयोः कारणं गोपयितुं प्रयोजनं गूढतरं स्यात्किलानुपस्य।

मीरा – नात्मत्यागः परं भोगासक्तिः।

गुणे – भवतु। कथ्यतां यथेच्छम्। वस्तुतः सर्वमेव श्वो ज्ञास्यति भवती। द्रक्ष्यति च कंचन सुपरिचितजनं यो निवेदयिष्यति किमपि रहस्यं गुर्वर्थम्।

मीरा – किं निवेदनेन?। भग्नकाचः सर्वथा भग्न एव स्थास्यतीति न्यायेन भवत्सुहृदोऽपयशःकलङ्कः शशांकस्याङ्क इवाशुद्धिमेव भजते।

गुणे – तथापि 'एको हि दोषो गुणसंनिपाते निमज्जतीन्दोः किरणेष्विवाङ्कः' इति कवीन्द्रस्य सूक्तिरत्नं न विस्मरणीयं भवत्या।

मीरा – 'दूषितः सर्वलोकेषु निषादत्वं गमिष्यती'ति रामायणस्था भगवतो वाल्मीकेः सूक्तिरपि भवता स्मरणीया।

इति प्रगल्भगिरा तयाभिहितो गृहागतो घटीयन्त्रमुद्धृत्य कोषादात्मनस्तरलितदृशा तद् व्यलोकयत्। गोधिकायास्तावत्प्रोच्चपटले गृहस्य निगूढायाः क्वचिदशुभशंसी 'चिप् चिप्' ध्वनिरश्रावि।

गुणे – भगवति प्रसीद तावत्। नायमवसरो निन्दायाः। एकैकः क्षणोऽपि बहुमूल्यः स्यात्। भवत्या हितेच्छौ मयि विश्वस्यताम् तावत्। न कापि भवत्या हानिर्भवितेति सशपथं वच्मि।

मीरा – (सपारुष्यम्) अहो। इयत्कालं दारान् पुत्रौ च परित्यज किमद्य संदेशं प्रेषयितुं प्रवृत्तं भवन्मित्रम्। मन्ये यत् कृतसर्वस्वविध्वंसो नर्तक्या निष्कासितोऽस्ति प्रायः। इतो मां नेतुं निर्बन्धो विमुच्यतामिति बद्धाञ्जलिः प्रार्थये। न सोढुमधिकं मानभङ्गमुत्सहे खलु।

इति निगद्य भूतवृत्तसंस्मृत्यभिभूतेव सा सद्यः समुत्थायेङ्गितमात्रेण निश्चयमात्मनः स्फुटमसूचयत्। अतिथिश्च विवर्णवदनः क्षणं विलम्ब्य दीर्घं निश्वस्य च सत्वरमभ्यगात् स्वगेहम्।

मीरा च तावद् 'वर्षदशकात् प्राग् रजन्यामेकदाऽनिष्टं शङ्कमाना भर्तारं प्रत्यैक्षे परेद्युश्च पत्युर्हस्तलिखितं पत्रमहं लब्धवती' त्यादि सविषादमस्मरदद्य। आलिखद्धि स संक्षेपतो यथा 'प्रेयसि। अनर्होऽस्मि संप्रति सबालया त्वया सह निवस्तुमतस्त्वां परित्यज्य गृहान्निर्गम्यते मया। मदन्वेषणे वृथा मा प्रयस्यताम्। क्षम्यतां मन्दभागोऽयमिति शम्।' पठित्वा पत्रमेतन्नर्तक्या सह जिजीविषति भर्तेति लेखस्यार्थमकलयन्मीरा। पत्रस्य स्मरणेनाद्य तस्याः संतापाग्निः पुनरुदज्वलत्। नर्तक्या सह गतो गृहस्वामी पुनर्नायात इति विस्मितानामतिथीनां विचक्षणदृक्कटाक्षं सकोपमस्मार्षीन्मीरा संप्रति। तिरोधानादनन्तरं प्रथमसंक्षोभशमोत्तरं यदा यदा बहिरगात्तदा तदा प्रतिवेशिनस्तां सूक्ष्मं निरूप्य कर्णेऽजपन्नवद्यपरम्परां

यावत्सा व्यरमद्देहाद्बहिर्गमनात्। केचिद् ग्रामीणास्तामुद्दिश्यावाच्यकथाः सर्वत्र प्रासारयन्। अन्ये च भर्तुश्चेष्टितमभिनन्द्य तामेवानिन्दन्! तस्या यमलौ सहचरैः पाठशालायां पुनः पुनः पितरमधिकृत्यानुयुक्तौ 'अम्ब! तातचरणाः कदा पुनरायास्यन्ती'ति सोत्कण्ठमनवरतमपृच्छतां मीराम्। सा च कम्पितशिरा न कदापि पितरं युवां द्रक्ष्यथ इत्यसूचयत्। एवं स्थितास्त्रयस्ते पूर्णशो जनेन विश्लिष्टा विविक्ते न्यवसन्। पुत्रकौ तौ चाज्ञातजनकोत्सङ्गलालनसुखावपि जनन्यातिस्नेहलालितौ सुखेनात्यक्राम्यतां शैशवम्। परिचितैः सर्वैश्च परितयक्तस्य कुटुम्बस्यास्यावशिष्टमेकमेव मित्रं भिषग्गुणे नाम यः संकटसमये सहायकतया स्थितस्तेषु तथा दृढनिष्ठो यथा गृहस्वामिनि।

अथेदानीं पूर्ववृत्तं मीरायाः स्मृतिसरण्यां न्यपतत्। अनतिक्रान्तकौमाराया प्रथमसंस्तवादारभ्यानुपस्या-कारसौजन्यलावण्यगाम्भीर्यादरसदाचाराद्यवलोकनमोहिताया रोमाञ्चिताया हृदि प्रेमाङ्कुराद्भवविकासभावपरंपरा समुत्कीर्णेव तन्मनसि सुव्यक्तमाविरभूत्। 'गुणाः प्रियत्वेऽधिकृता न संस्तवः इति कवीन्द्रस्य सूक्तिरत्नमुदाहृतं सोपहासं स्वपित्रा तत्सर्वमस्मरदद्य सा। तदनु व्यचिन्तयत् सा निजोद्वाहदिनम्। समये तस्मिन् तिसृभिः सुवासिनीभिर्हरिद्रादिलिप्तशरीरमात्मनं परिधापितवैवाहिकपीतवर्णकौशेयाम्बरं रत्नखचिताभरणालङ्कृतकरकर्णाद्य-ङ्गजातं मल्लिकासुममालिकामण्डितकचकलापं च। हन्त न कदापि पुनः परिधास्यते रुचिराम्बरं तन्मया। प्रायो मत्स्वर्गप्रस्थानसमये शुभवाससा तेनाच्छादयिष्यति कापि साध्वी सुवासिनी मत्कलेवरम्। यथा हि प्रायेण सुवासिनी वैवाहिकवेषभूषिताङ्गी कुंकुमरूषितललाटा समङ्गलमालिका पुष्पमालाञ्चितधम्मिल्ला कटारोपिता नीयते बन्धुजनैः प्रति पितृकाननम्। परं किमाडम्बरेणानेन। वरं विधवावद्देहदहनम्।

इति ध्यायन्त्यास्तस्या नयनयुगाद्बाष्पबिन्दुसंदोहोऽस्रवत्। व्यतीतवृत्तस्मृतिजन्मविषाद ईषदुपशमिते क्रमेणास्मरत्सा यमलयोर्जन्मप्रसङ्गे दयितस्य प्रेमातिशयप्रवाहं निखिलरात्रौ च तस्य जागरितस्य गतागतं दूरदर्शित्वं सेवनं च समार्दवम्। विवाहोत्तरं

पञ्चषवर्षाभ्यन्तरे सहनिवासिनः पत्युरनूभूतोऽपरिमितगुणगुणः कथं तस्याः स्मृतिसरण्यां न संसरेदद्य। न ह्येकदापि दर्शितस्तेन पारुष्यलेशो नोदीरितः कटुशब्द इत्यस्मार्षीत्साऽद्य। ध्यायन्त्यास्तस्यौदार्यं, तस्य परमसौजन्यं, हृदयं तस्याः किमपि मार्दवं भेजे। विवाहोत्तरं हि नवोढा सहचरीणां तत्तजीवनवृत्तान्तं श्रावं श्रावं तदपेक्षयाऽत्यन्तभाग्यवत्यहमिति प्रतीता धन्यमात्मानममंस्त सा तदानीम्। तिरोधानात्प्राक् प्रेमोत्सेकप्लाविताऽऽसमहं भर्त्रेत्यप्यस्मरत्। तथा च समये तस्मिन् किमपि चिन्तासन्तानं ज्वालामुखपर्वत इव हृदये तस्य जाज्वल्यमानं तुमुलविग्रहमनवरतं विधत्ते स्मेति तयोपलक्षितमासीत्।आध्यानेन तस्य नर्तकीसंबद्धेन भवितव्यमित्यतर्कि तया तन्निर्गमनोत्तरम्। यद्येवं तर्हि कुटुम्बत्यागात्पूर्वं किमिति नाम प्रदर्शितवान् स इयन्तं प्रेमातिशयम्। किमुन्निद्रनेत्रो द्वित्रवारान् निशि शयनादुत्थाय यमलयोः पर्यङ्कं जोषमुपासर्पत्। निजास्वापकारणाद्भार्याया मे निद्राभङ्गो मा भूदिति कतिपयसप्ताहं स प्रकोष्ठान्तरमध्यशेत। अस्वापस्य ते किं कारणमिति चिंतापरया तयानुयुक्तः 'प्रिये! अलं चिन्तया मद्विषये। स्थलपरिवर्तनेन पुनरुल्लाघो भविष्यामी'ति मामाश्वासयत्सधीरमनुपः। स्वनिष्क्रमणात्पूर्वं द्वित्रमासान् यमलयोर्नानाक्रीडनानि भार्यायामंबराभरणानि चावर्षत्। उपालब्धामितव्ययो मया सोऽब्रवीत् 'प्रिये! अलं विचिन्त्य धनव्ययम्। विरतव्यवसायेऽपि मयि योगक्षेमसौख्याय नः पर्याप्तं द्रव्यं वर्तते।' तदेतद्वचो ध्यायन्त्यद्य 'भाव्यं तेन खलु सकपटेनेव वचसा यत्स्वजारकर्मविषये संशयो मे न भवेदि' त्यात्मन्यकलयत्सा। पुरा पत्युर्गाढकैतवस्य चिन्तनेन प्रचण्डकोपाकुला भवति स्म सा। इदानीं तु तस्य परममार्दवस्मृतिरूपेण निर्झरेण किमपि परिप्लुतमभूत्तदीयहृदयं यद्बहलवत्सरेषु काष्ठशुष्कं पाषाणकठोरप्रायं चासीत्। व्यचिन्तयच्च यथा– 'को नाम मन्दभाग्याया मे दर्शनाकाङ्क्षी स्याज्जनोऽयम्। अथ वा को जानीत यन्मया नोपस्थीयेत चेत्तर्हि पुत्रयोः पितृदायार्हयोरपकारिणी भवेयमि'ति।

तदनु कञ्चित्कालं परामृश्य सह सुहृदा तस्यां रात्रौ प्रस्थातुं मतिमकरोत्। पुरस्तादवलम्बमानां भित्तौ महतीं पुरातनयन्त्रघटिकां नववादनशंसिनीमवलोक्य धूमयानस्थानकमभिगन्तुं यथाकालं सन्नद्धा

भवेयमिति निश्चित्य यमलौ सपदि समाहूय भोजनं परिवेष्यतामिति परिचारिकां निर्दिष्टवती मीरा। न चिराच्छाकौदनापूपादिपूरितं पात्रं तत्पुरो निहितं। किंतु संक्षोभपरवशीभूता तन्नास्पृशत् सा। अथापृच्छ्य तदकल्पितप्रस्थानकुतहलाकुलौ यमलौ कश्मीरदेशरचितप्रावरेणावगुण्ठितस्कन्धा सा रजन्यामेकला निरगात्। कतिपयक्षणोत्तरं धूमयानस्थानकं प्रस्थास्यमानस्य भिषजो गृहं संप्राप सा।

'आगम्यतामागम्यतां तावत्। सकालमेवायाता श्रीमती। न कोऽप्यनुशयो भविता भवत्या ' इति तां समाश्वास्य प्राङ्गणस्थितं शकटमरोहयत् तां वैद्यः। अथ ग्रामस्य विजनाध्वना प्रचलिते याने कथ्यतां कृपया कस्य संनिधिमुपेतुं प्रस्थितावावामि' त्यनुयुक्तस्तया साग्रहं प्रत्युवाच 'मित्र चिरपरिचितं किञ्चित्।' ततो धूमशकटे समुपविष्टा द्वित्रवारं तमेव प्रश्नमकरोत्सा। परं निवेदनलेशमात्रेणापि न सनाथीकृते तस्याः श्रोत्रे सुहृदा बद्धमुखेन।

अथ सखडखडाशब्दं धूमयानं सवेगं प्रचलितम्। अतिवृष्ट्या प्लावित आसीन्निखिलप्रदेशोऽध्वनि। धूमयानचक्राणां कर्कशक्वणितमनवरतं श्रुण्वती परेद्युः को मयोपैष्यत इत्येव चिन्तयन्ती प्रकोष्टविष्टर उन्निद्रनयना स्थिता सा। निशावसानसमये तु कञ्चित्कालं निद्रिता स्वप्नेन पीडिता तु सहसा जागरिताऽभूत्। व्यभावयत्सा स्वप्ने यदनुपः परिहितश्वेतवस्त्रः पूर्ववत्तदीयकेशकलापं करपल्लवेन परामृशन् समार्दवं पुरस्तस्याः स्थितवानिति। परिहितवसनातिधवलतया स कामपि लोकोत्तरप्रशान्ततां कामपि भव्यतामभजतेति कलयन्ती क्षणात्सा समुत्थाय वेपमानाङ्गयष्टिः प्रह्वीभूताऽऽसनपीठे निःशङ्कमवस्थिता सह पत्या निजदीर्घजीवनयात्रां ध्यायन्ती सा। 'नासं किल तस्यापरिमितगुणानुरूपा भार्येति तेन परिहार्याऽभवमि'ति मनस्यकरोत् सा। पुनश्च विद्वेषाग्निज्वालाभिः परिदग्धहृदयाऽनिन्दत्सा स्वप्रस्थानं स्वमन्दिरात्। धूमयानाद् बहिरप्यवप्लोतुमैच्छत्सा मुदा। परं स्वपुत्रौ प्रति विधेयं चिन्तयन्ती सा विचारमिमं निरस्य कञ्चित्कालमवातिष्ठत निश्चला। प्रस्तुतं ध्यातुं प्रयतमानापि भूतवृत्तच्छायया तच्चेतः पुनरावृतमभूत्।

अथ प्रातस्तरां स्थितिं याते धूमयाने मुम्बापुरोपकण्ठस्थे माटुंगाख्ये ग्रामे विश्रान्तिसदनात् सुहृदानीतमुपहारं भक्षयित्वा 'क्व मां नयसीति' साम्रेडं सकरुणं समीपमुपविष्टं गुणेवैद्यमपृच्छत्। 'अचिराद्भवती ज्ञास्यतीति पूर्ववदस्फुटं स प्रत्यवादीत्। दशवादने च पांसुलाध्वना कुत्रापि सहचरद्वितीयं प्रचालितमात्मानं मीराऽपश्यत्। घटिकार्धोत्तरं च तालतरुनिकरावृतस्य भयानकालयस्य पुरः प्राप्योपद्वारेणोद्यानं प्राविशतामुभौ। तत्र वृक्षाञ्जलेन निषिञ्चन्तं खर्वाकृति विकृताङ्गं विषण्णाननं पुरुषगणं विच्छिन्नमानुषत्वावशेषमिवावलोक्य जुगुप्सिता कम्पिताङ्गयष्टिर्मीरा 'अहो भीषणत्वं स्थलस्यास्य! किमिति भवता समानीताहमत्रे'ति निराशयोद्विग्ना सगद्गदं न्यगदत्। परं शब्दलेशोऽपि नोदीरितो मित्रेण। सद्यश्चैको मध्यवयस्कः पुरुषस्तौ समुपेत्य सादरमुद्रया तौ संभाव्य च च्छिद्रितशैवलाच्छादितभित्ति निष्प्रभमुपगृहमेकं सुहृद्द्वितीयां मीरां समनयत्। 'क्षणमात्रस्यापि विलम्बेन निष्फलमभविष्यदागमनमत्रभवत्या' इति च संभ्रान्तां स्तब्धीभूतां कथं कथमप्यात्मानमनुगच्छन्तीमभ्यधान्मीरां स सदयम्। 'द्वित्रदिनान्यनवरतं भवतीमाह्वयदित्यस्माभिरिहागन्तुं प्रार्थिता भवतीति कुटीरस्य द्वारमुद्घाटयन् व्याहरदधिकारी। तत्र प्रविष्टमात्रा मीरा विस्फारितनयना साक्रोशं पश्चादचलत्। यतो हि प्रकोष्ठस्य मध्यभागे पृथुशय्यामनुपः पतिस्तस्या विकृताकृतिरधिशयान आसीत्। कुष्ठव्याधिना निर्घृणावसादनेन पूर्णो ध्वंसस्तद्देहस्य व्यधायि। तथापि तपस्विनोऽस्य परमसौम्यस्मितेनावशिष्टमात्रेण सपद्येवाभ्यजानात्पतिं मीरा। अथ सा चकितचकिता, भीतभीता शुष्ककण्ठेव स्तब्धीभूतेव कथमप्यात्मानं नियन्तुं प्रयतमाना निपातितजानुः प्रक्षिप्यत्मानं धरातले तदनु सुधाधारापिपासुभ्यामिव कर्णाभ्यां जडीकृताभ्यां नयनाभ्यां चित्रार्पितेवावातिष्ठत। स तु कुच्छ्रेण न्यश्वसीदातुरः। मुहुर्मुहुर्मुखं विवृणोति परं वक्तुं नाशकत्। शब्दोच्चारणात्पूर्वमेव हि तद्वाङ् मुखाभ्यन्तरे विलीनाऽभूत्। ततश्च बद्धक्षीणकरसंपुटः क्षम्यतामितीङ्गितेनैव सूचयित्वा नयनेऽप्यधादनुपः। 'समाप्ताद्य जीवनयात्रा साधोरस्ये'ति कार्याधिकारिणा -भिहिते भर्तुः पादयोर्निपत्य सोरस्ताडं तारस्वरं व्यलपन्मीरा।

कार्याधिकारी – रुग्णालयेऽस्मिंस्तत्सदृशो महानुभावः सज्जनो न कदाप्यार्तजनेषु विलोकितोऽस्माभिः। दश वर्षाणि विना भियात्र स्थितस्यास्य कदाचित्कुटुम्बस्य चिन्तयैव परमविषादोऽभूत्। तदन्तरेण सर्वदैव प्रसन्नमुखोऽश्राम्यदनवरतमुद्याने। धन्याः खलु रोगिणोऽन्ये येऽहर्निशं समाप्तस्वव्यवसायाः पुण्यभाजस्तस्य मुखात्स्रवन्तीः कथाः शृण्वन्ति स्म। मधुरवाणी धन्या या सततमतिप्रसन्नस्य करुणाजलनिस्यन्दिनोऽगाधगाम्भीर्यस्य तन्मुखाम्बुजस्य संपर्कमनुभवन्ती न्यवसत्। एतावान् प्रभावः करुणरसस्य तस्य।

'धिग् धिङ्माम्। कथं पातकिन्या निन्दितो मया दुष्टव्याधिव्यथितात्मा पतिवरेण्यः। अहो! कथं मे जिह्वा तमनिन्द्यं निन्दन्ती न जडीभूता। अहह! दश वर्षाणि तस्मिन्निर्दोषे दोषमारोपयन्ती कथं पक्षघातग्रस्ता नाभवम्। धिग् धिङ् मे जीवनं, धिङ् मे वज्रकठोरताम्। परमात्मन् दण्डार्हां मां प्रचण्डदण्डेन किं न दण्डयसि। धिङ्मामकरुणामतिनिष्ठुरामकृतज्ञाम्। अहो प्रत्यक्षीकृतभर्तृमरणया मयाद्यापि जीव्यते। खलं हि खलु मे हृदयं पातकिन्याः। घोरव्याधिग्रस्तेन नाथेन व्यथामात्मनो विगणय्य परमप्रेमवशादनेकैरुपायैरस्मदर्थं धनसंचयः कृतः येन सौकर्यं सर्वथा प्राप्नुयात् कुटुम्बम्।'

इत्यात्मानं निन्दन्ती गाढं पत्युः पादयुग्मं परिष्वज्य रुदितान्न व्यरंसीन्मीरा। न तस्याः शोकावेगो दुर्निवारो नैकघटिकापर्यन्तमुपशमं गतः। मुहुर्मुहुरात्मानं निन्दन्तीम् 'अविदितभूतार्थां किमात्मानमाक्षिपसि वृथे'ति जगाद भिषग्गुणे। किमिति भवता सर्वमिदं गोपितं मत्त' इति करुणं नेत्रजलप्रक्षालितानना मीराऽपृच्छत्।

गुणे–भगवति! अप्रतिकार्यदारुणव्याधिं मे वासस्थानं चाधिकृत्य न स्तोकमात्रमपि भार्यायै निवेदनीयं यावत्स्वयमेवाहं समाह्वयामि ताम् इति तव वल्लभेन समादिष्टेन तथेति प्रत्यश्रावि। हन्त तद्रहस्यरक्षणं कियद्दुष्करं दुःखदं दयनीयं मेऽभूदिति भावयितुं न प्रभवेद्भवती खलु। पवित्रनिक्षेप इव प्रतिज्ञेयं परिपालनीयासीन्मया परमयत्नेन।

अथापराह्णे कुङ्कुमदिग्धललाटं पुष्पमालिकावृतं धवलाम्बरवेष्टितं प्रेतमनुपस्य कटारोपितं भिषग्गुणेप्रभृतिभिः पितृवनं नीयमानं लौकिकाचारं

विगणय्य निःशब्दं विलपन्ती मीरान्वगादलक्षिता। तत्र संस्कारोत्तरं मन्त्राग्निसंस्कृतं प्रेतं यावद्दहनाय सज्जीक्रियते तावदकाण्डं मीरा शोकज्वालावलीढा चितामारुरुक्षुरुत्प्लोतुं प्रवृत्ताभूत्। महताऽऽयासेन निवारितापि दह्यमानायां चितायां क्षेप्तुमिच्छन्तीमात्मानं मुहुर्मुहुर्बलादाकृष्य सुहृन्मणिः सान्त्वगिरा समाश्वासयितुं प्रायततराम्।

मीरा – आर्य! किमर्थं पापिनी मादृशी भवता यमपुरगमनान्निवार्यते दुष्टजिह्वााया मे पावकप्रवेश एव प्रायश्चित्तम्।

इति विलपन्तीं तां मित्रं सौम्यगिराभ्यधात्।

गुणे – भगवति। आत्महत्यया कः पुरुषार्थः साध्येत। मा स्म भूर्ग्रस्ताऽमङ्गलचिन्तनेन। विचित्रैव घटना विधेः। अपि न जानाति भवती यत्सतीत्वेन चितारोहणं धर्मशास्त्रेण निषिद्धमिति अशरणयोर्यमलयोर्भवत्या चेष्टितेनानाथीभविष्यतोर्विचारोऽपि न किमलं प्रतिरोद्धुं भवतीं साहसादस्मात्। सुहृन्मणिना मे कुटुंबवत्सलेन पुत्रकौ भवत्यै पवित्रनिक्षेप इवार्पितौ स्तः। अतस्तयोः पोषणलालनपरिपालनादिकमेव धर्मो भवत्याः। अनुतापाग्निर्भवत्याः शोकजनकः स्वाभाविक एव। असौ कालेन भगवत्कृपयोपशममेष्यत्येव।

अथ निम्लोचति मरीचिमालिनि स्वग्रामं प्रति प्रस्थितौ। धूमशकटस्य प्रकोष्टे शोकानुतापभारजडीभूता मृतप्रायेव निश्चला स्थितवती मीरा। भीषणवज्राघातनादानुकारी धूमयानचक्रनिनादोऽनवरतमाहत्य तत्कर्णकुहरौ द्विगुणीचकार तस्याः परितापम्। अतिप्रबलानुतापावसन्नानि किञ्चिदपि चलितुं नालमङ्गानि तस्याः। अनाथं मन्यमानाऽऽत्मानं दुःखेन सनाथीभूता प्रबलम्। 'अपि नाम निष्ठुरो विधिर्मरणमद्यैवोपपादयेदि' ति मुहुर्मुहुरभ्यलषत् सा। अन्तरान्तरा सुप्तजगत्परितः परिभ्रमन्ननिलोऽनुकम्पयेव क्वचिदुच्चोच्चैर्न्यश्वसीत्क्वचिद् व्यलपत्। मेघमाला किमपि घोरसमराक्रान्तेव भयादुन्मत्तेव गगनतलस्य पारं सरभसमभ्यधावत्।

परेद्युर्यावत्पयःफेनपाण्डुरानना विशीर्णहृदयावसन्नाङ्गयष्टिर्निःशब्दं निजावासं प्रविशति मीरा सह सुहृदा तावत्क्वचित् तस्या गृहस्य पृष्ठभागाङ्गणे मयूरः खिन्नकेकारवेण सानुकम्पमिवानुशोचन्समभावयत्ताम्।



## १५. शरद्दलम्

कश्मीरेषु सुवर्णमयनगरस्य श्रीनगरस्य सफ़ाकदलाख्यसेतौ सलिम्जुनाम्नः कस्यचन सूचिशिल्पिनः पण्यशाला समवर्तत। पुरोभागस्तस्यालयस्य विचित्रप्रकारेणोत्कीर्णोऽ-म्बरचुम्बिशालचिनारतरुविशेषप्रकाण्डच्छाया- न्धकारेऽर्धविलीनो जीलमाख्यसरितमुपरिष्टात् पर्यवैक्षत। पृष्ठभागश्च नाविकानां मलिनगृहाङ्गणावकीर्णावस्कराणां संमुखीनः स्थितः। वर्षपञ्चकात् प्राक् प्रसिद्धसलिम्जुसूचिशिल्पिनि दिवंगतेऽपि कल्कमयो जीर्णापणोऽय-मनाथीकृतोऽपि पूर्वकालस्मारकः सन् सर्वथा तन्नामाङ्केनैव सनाथीकृतोऽभूत्।

अथ शरदृतौ सायमेकदा शिकाराख्यपोतविशेषः कश्मीरज वर्णाम्बरकलापभूषितस्तमापणं समासदत्। नाविकेन चावरोपिता पोतान्नद्याः कूले समवतीर्णा अर्विननामकुलोद्भवा आनाभिधा काचनामेरिकदेशीयाङ्गना क्रैस्तिधर्मप्रसारिका सोपानपङ्क्त्या समारोहदूर्ध्वभूमिम्। विपण्या बहिर्द्वारस्यान्तिकं समुपविष्टायै वनीपकायै कतिचिन्नाणकानि वितीर्य परदेशीयाऽनावृतद्वारं स्वेच्छया प्राविशदालयम्। वनीपका च दैनिकार्जितस्य गणने व्यापृता स्थितवती। दीनदीनामिमां त्रिंशद्वर्षायामपि चिरादतिक्रान्तयौवनामिव जर्जरितकलेवरां पलितकेशकलापप्रायां विलुप्तयौवनतेजोऽक्षियुगलां वलिननेत्रापाङ्गामालोक्य कस्य हृदयं नाद्रवत्। तदीयं पाण्डुरमाननं तस्या मनोरथनैष्फल्यं प्रकटीकरोति स्म स्फुटम्। विशीर्णाम्बरप्रान्तायास्तस्या जीर्णचीवरपरिकरमध्यायाश्चिराद्विनष्टसौन्दर्यस्यावशिष्टचिह्नेनाद्यापि व्यक्तीभूतेन तदीया दशा द्विगुणं दयनीयतामयासीत्।

अथ प्रविशन्तीममेरिकदेशीयामानानाम्नीं स्वर्गवासिनः सलिम्जोस्तनयोऽहज्जुर्नाम गम्भीरगिरा सादरमभ्यनन्दत्। सा च प्रणम्य सूचिकर्मणि व्यापृतं युवानमभ्यधाद् 'अहो नैपुण्यं शिल्पस्य भवतः।' इत्युक्तवतीं गृहाभ्यागतां गुणगणग्राहिणीं ससंतोषं शुभासने समुपवेश्य स्वयं च भूतलं पूर्ववदध्यास्य सूचिं पुनराददे सप्तदशवर्षीयः शिल्पी। 'अहज्जो,

क्वास्ति भवतः स्वसा' इत्यपनीतोत्तरीययाऽऽनया पृष्टो 'गृहान्तः क्वापि तया भवितव्यम्। प्रतीक्ष्यतां क्षणमात्रं यावत्तामाह्वयामीति' प्रोच्य गेहाभ्यन्तरं च गत्वा क्षणात् त्रयोदशवर्षीयया दारिकयानुगम्यमानो मुखशालां न्यवर्तत युवा। आनामालोक्य विस्तारितकरपल्लवा वत्सा प्रधाव्य सप्रेमं पर्यष्वजत ताम्। आनापि बालाया ललाटं परिचुम्ब्याप्राक्षीद् 'वत्से! अपि क्रियते त्वयाङ्ग्लभाषाध्ययनम्' इति। 'भगवति! अतिदुष्करमाङ्ग्लपाठाध्ययनमेकाकिन्या न पार्यते मये' ति बालिकाभिधायाऽऽनाया नेदिष्ठ आसने सुखमुपाविशत्। 'अलं विशादेन। अहं त्वामध्यापयिष्ये स्वयमेवे' ति प्रत्यश्रुणोदाना दीर्घवेणीयुगलमस्मायाः परामृश्य समार्दवम्। अहज्जुस्तावत्क्षणिकप्रदोषप्रकाशास्तमनस्यासन्नतया द्विगुणितवेगेन सूचिं प्रवर्तयितुमुपाक्रमत।

तदनु निम्नासनोपविष्टां बालिकां संबोध्य न्यवेदयदाना यथा।' वत्से! आगामिनि मासे नगरेऽस्मिन् कन्याशालां स्थापयितुमुद्यता भविष्यामीति युवां विज्ञापयितुमेव समायातास्मि। बाले! त्वमपि पाठमन्दिरमिदमायास्यसीति भृशमाशास्यते मया' इत्यभिहिते परदेशीयया वत्सा भ्रातरि दृष्टिं निक्षिप्यादत्वोत्तरं च तूष्णीमस्थात्।

'आङ्ग्लगिरमध्येतुमिच्छसि चेदवश्यमागन्तव्यं त्वये' त्याना पुनः साग्रहमवादीत्। 'पृच्छ्यतां भ्रातृदेव' इति सकातर्यमस्मा कर्णेऽजपदानायाः।

आना – न करिष्यति प्रतिबन्धं तवाग्रज इति निश्चिनोमि।

सूचिशिल्पिना स्वकार्यव्यापृतेन निजोक्तं नाश्रावीति कृत्वा तं संबोध्य निर्बन्धपराऽऽना पुनरब्रवीत्।

'अपि भवता पाठशालागमनं प्रतिरोत्स्यतेऽस्या दारिकायाः'।

अह.– (क्षणमात्रं विमृश्य) आर्ये पाठशालागमनं न शक्यं खलु।

आना – कुतः।

अह.– अस्मद्रूढिव्यवहारदृष्ट्या बालिकानां पाठशालाध्ययनं निषिद्धम्।

इति प्रतिभाष्य तरुणः सूक्ष्मसीवनं निपुणं न्यरूपयत्।

आना – परं भवन्तः पाठशालायां प्रापिताध्ययनाः स्थ। किमिति भवदनुजाऽपि बालिकामन्दिरे नाधीयीत।

अह. – (गम्भीरस्वरेण) निषिद्धमेतदस्मद्धर्मशास्त्रेण। पिहितपोतेऽपि न क्वापि विहारायापि बहिः प्रेषितास्ति ममानुजा। अपरं च स्त्रीजातेः किं शिक्षणेन?

अस्मा – भ्रातृदेव। अम्बा पितृचरणैर्बहिर्गन्तुमनुमोदितासीत्। सा लेखने पठने च पटुरासीदिति तैरेवोक्तं त्वदन्तिकमभीक्ष्णम्।

आना – एवं स्थिते भवत्पितृभिर्यदीदानीं धरामध्यवत्स्यत तर्हि न प्रत्यरोत्स्यत वत्सेयमध्ययनविषये।

अह. – भगवति। निधनात्पूर्वं तातपादा अस्माया न क्वापि गृहाद्बहिर्गमनममनुमोदस्वेति मामश्रावयन्।

अस्मा – (विस्फारितलोचना) आः। एवम्?

अह. – तदाज्ञां पालयितुमनिच्छते मे निवेदिता तैः शोचनीया कथा मूढमत्याः कस्याश्चिद्युवत्याः।

अस्मा – (चाटुवचसा) केयं कथा केयम्? कथ्यतां भ्रातृदेव तावत्।

आनयापि कथां श्रावयितुं साग्रहमनुनीतस्तरुणः समुन्नमय्याननं क्षणं च परामृश्य व्याहरत्।

अह. – वत्से, त्वादृशा मुग्धया कथेयं श्रोतव्या न वेति न जाने। तथापि सा निदर्शनरूपेण प्रायस्त्वां प्रबोधयेत्।

इति दीर्घं निश्वस्य ख्यातुं वार्तां शिल्पी समारभत –

''शोचनीयां कथां कथयन्तः पितृपादा बाष्पपूर्णनयना मुहुर्मुहुर्विरम्य ध्यानपरास्तूष्णीं तिष्ठन्ति स्म। वनिताभ्यः स्वातन्त्र्यप्रदानमनिष्टमित्येतस्मिन् मम प्रत्यायनमेव कथाख्यानस्य हेतुरभूत्प्रायस्तेषाम्।''

अत्राहज्जुः क्षणं विरम्य वातायने बद्धदृष्टिर्बहिरालोकयत्। क्षणेऽस्मिन्

प्रदोषस्य धूसरच्छायासु घनीभूतासु प्रतिक्षणमतिशीतमरुत्ससूत्कारं प्रवेशद्वाररंध्रेभ्यः शीशशीशेति शब्दमकार्षीदनवरतम् जिलमनद्याः कूलान्तर्वर्तिसदनश्रेणिः प्रत्यासन्नतमिस्रातमसावृता तस्थौ।

न चिरात्तुषारवृष्टिर्भवितेत्यक्त्वा कथानिवेदनमारब्ध सूचिशिल्पी –

''प्रथमसेतुवर्तिनः शिवमन्दिरान्नतिदूरं न्यवसदेकदा सुभानाभिधः कश्चित्तक्षा काष्ठतक्षणकलाप्रथितप्रावीण्यः। शैशवे क्रिस्तधर्मप्रसारकैः स्थापितायामाङ्ग्लपाठशालायां सम्प्राप्ताङ्ग्लभाषाभिज्ञानो यौवने च विश्वविद्यालये संपादितोच्चशिक्षणो मुस्लिमानां पुराणलौकिकाचारक्रमं विशेषतश्च सर्वप्रापंचिकसुखप्रतिबन्धकं स्त्रीणां पडदाख्यप्राक्तनरूढिविशेषं नितरामद्वेष्ट। निजनवोढायै स्वातन्त्र्यं प्रदातुमिच्छन् परित्यक्तप्रतिकूलवृद्धगुरुजनो स्वसंकल्पं विनाऽन्तरायमसाधयत्सः। अमीनाभिधा तद्भार्या सौन्दर्ये जितनूरजहानाभिधमोगलसम्राड्दयिता।''

अस्मा – (सविच्छेदम्) अमीना? नामैतन्मातुरावयोः किल।

तथैवेति प्रतिपद्य वत्साया वचस्तरुणः पुनरुपाक्रमत निवेदयितुम्।

''अमीनाया निखिलनगरसुन्दर्यखर्वगर्वहारिणा सौन्दर्यातिशयेन सुभानः प्रमुदितान्तरङ्गस्तां भृशं चकमे। सप्तदशवर्षीयेयं सुहासिनी, कान्त्या शरच्चन्द्रकलामपि न्यक्कारिणी, प्रज्ञया मोगलसम्राडौरंगझीबस्यात्मजां झिब्रनिसामिवानुकुर्वती, रतिविषये जितरतिः, कलाकौशलस्यादर्शः, कादम्बरीकलापरसग्राहिणी, गणितशास्त्रे प्रकृत्यैव निपुणा बभूव सेति मे तातचरणाः प्रोचुः। सुभानेन स्वेनाध्यापिताङ्ग्लोर्दुभाषा प्रापितसंख्या–ज्ञानकौशला संपादितव्यवहारचातुर्या भर्तुर्वाणिज्यव्यवसाये बहूपयोगि–नीमात्मानमकरोत्सा। श्रीनगर्यां सकलकलाकलापजन्मभूमौ निर्जितनिःशेषशिल्पिमण्डलस्य सुभानस्य रमण्याः परमरमणीयाननं तद्विपणिमभ्यागन्तॄञ्जनांस्तस्यानुत्तमशिल्पकुतूहलिनो नितरामाकर्षत्।

अत्राख्यायकः क्षणं विरतकथनः सूचिशिल्पमात्मीयं निपुणं निरूप्य सूचिशिल्पाधारं पार्श्वे न्यधात्। अवसितप्रायः प्रदोष इदानीम्। समीपवर्तिनो

घट्टतो नद्याः समाकर्णि साप्ताहिकस्नानायावगाहमानानां विलासिनीनां कलकलध्वनिः। अन्तरान्तरा नाविकानामाक्रोशसम्मिश्रः सलिलास्फाल–नमर्मरस्वरोऽपि श्रुतिसरण्यां न्यपतत्। तदनु सूचिशिल्पी पादौ प्रसार्य महोपबर्हमेकं पृष्ठत आश्रित्य सुखं समुपविष्टः कुतूहलोत्कण्ठितामानां स्वसारं च कथां श्रावयितुं पुनरारब्ध यथा।

''अथ गच्छत्सु वर्षेष्वधिकाधिकप्रफुल्लितलावण्येन भार्यायाः सार्धं सुभानस्य वाणिज्यं समृद्धेः परां कोटीं प्राप। अथ तेन विन्यासकार्यवशात्पौनःपुन्येन देशान्तरं गतागतं कुर्वता सह भार्यया विहर्तुं मनागप्यवकाशो नोपालभ्यत। रमणी च तस्य मुक्तसंगेवैकाकिनी विविक्तोत्पादितनिर्वेदमात्मनो विनोदयितुं कादंबरीपठने कालमगमयत्। रात्रौ डिम्भयोः सुखं सुप्तयोरनल्पोपबर्हसंकीर्णपीठिकायां शयाना ख्यातनाम्नीं कादंबरीं लैलमझनुनाख्यामन्यान् फारसीकथाप्रबन्धान् निष्पादितशृङ्गाररसान् वाचयन्ती चिन्तयन्ती च तद्वर्णितप्रणयलीलारोमाचिताङ्गी चिरमुन्निद्रनेत्रा स्थितवत्यासीत्।

अथ सायमेकदा वसंतर्तुना विजृम्भमाणेन तरुणजनमनःसु प्रोद्दीपितरागेषु श्रीनगरोपकण्ठवर्तिक्षेत्रेषु खस्खसकुसुमैर्विद्योतमानेषु प्रफुल्लितोत्पल– दलपटलविस्तारेण सार्थनामसु दलाख्यादितडागेषु जातिमल्लिका– जपादिसुमनोभिर्मण्डितेषु रम्यरम्यशालिमाराख्यादिविहारोपवनेषु कश्चिदफगानस्थानदेशीयो रूपयौवनसंपन्नः सय्यदो नाम जीलमसरित्सलिलेषु स्वदेशध्वजसनाथीकृतेन शोभनपटाच्छादितेन पोतेन विहरन्, सायंतनिकपरमरमणीयसमये समालोकि नयनजितमीनयाऽमीनया। तरुणोऽयं त्रिंशद्वर्षदेशीयो गौरवर्णः सन्नद्धगात्रः सुघटितशरीरश्चारुदर्शनः कमनीयकपोलपालिः। स्त्रैणनीतिधर्माचारं तृणमिवाकलयत् सः। सुभानशिल्पिनः पण्यशालान्तिकं पोते तस्य मन्दं मन्दं चलिते वातायनसंनिधौ कादम्बरीपठने निमग्नाऽमीनाऽपि व्यलोक्यत यदृच्छया यूना। लावण्यातिशयेन तस्या आकृष्टः क्षणात्स शिल्पिनो विपणीं प्राविशत्। तक्षकस्यानुत्तमं शिल्पं सकौतुकं सोत्साहमभिनन्दते तस्मै विदेशीयाय निखिलशोभनोपकरणनिचयं

दर्शयामास सुभानम् सगौरवम्। अथ नानाविधनिर्माणभङ्गीरासन–पीठिकाकाण्डपटासवमञ्जूषा–दिसंभारसमूहमालोक्य कलागुणज्ञमिव नितान्तप्रमुदितमात्मानं प्रकटयतस्तस्यानवरतं लावण्यशालिन्याममीनायां दृष्टिर्न्यपतत्। द्वित्रधा तयोः परस्परनेत्रसंगमोऽप्यभूत्। नृपोचितमाज्ञापत्रं नवीनोपकरणनिकरनिर्मितये तक्षकाय प्रदाय सय्यदोऽपसर्तुमनिच्छन्नपि विपण्या निरगात्। को जानीयान्नाम सय्यदः काभिर्भावनाभी रजनीमगमयदिति। परेद्यवि तु पुरान्तरं कार्यवशात् प्रतिष्ठासुः सुभानः 'सय्यदामीरेभ्यो विविधाक्षोटकाष्ठनिर्मितपरिबर्हणचयं प्रदर्शय यथा तेष्वन्यतरत् क्रेतव्यमिति निश्चिनुयुस्ते 'इति भार्यायै समादिश्य श्रीनगरान्निर्ययौ तक्षकः। सायं च तस्यैव दिवसस्य शोभनश्वेतकञ्चुकः क्षौमप्रालंबरक्तोष्णीषः सुभानस्य विपणीं सय्यदः पुनः समायातवान्। अमीनया प्रदर्शितालेख्यपुस्तिकः प्रथमसंभाराज्ञामात्मनो दृढीकृत्य भवत्याः स्वामिनः परोक्षं समायातोऽहमिति क्षमामभ्यार्थयत विपण्या निर्गमात्पूर्वं विदेशीयः। 'आगम्यतां यथेच्छम्। नित्यमेव सत्कृता भविष्यन्ति श्रीमन्तोऽत्रे'ति मृदुगिराऽमीना प्रत्यभाषत। प्रहृष्टः स्मिताननोऽपृच्छत्सय्यदः मयाज्ञापितोपकरणजातघटनाविधिं निरीक्षितुं ममात्रोपस्थितिर्यदि भवत्यानुमन्यते तदुपकृतो भवेयम्' इति। हन्त तया कम्पितशिरसानुमोदने प्रदत्ते तस्या दयनीयकथारम्भः समभूत्किल। तथा हि। परेद्युः पुनर्विपणिं समुपस्थितः सय्यदस्तदनु च प्रतिदिनन्। सुभानस्यान्तरान्तरा गृहेऽनुपस्थित्या सय्यदामीनयोः परिचये घनीभूते न चिरान्मधुमासस्य मादकदिनेषु विहारोपवने तीव्रवृष्ट्यनन्तरं यथाशु कत्तृणमारोहति भूतले तथा हृद्भूमौ तयोः सहसा समारोहदनुरागाङ्कुरः। सोऽयमङ्कुरः केनचिदकल्पितव्यतिकरसलिलसेचनेनाप्यायमानो दृढोऽभूत्। तथा हि। एकदा कनिष्ठमपत्यममीनायाः सरित्कूल इतस्ततो धावन्नस्खलदकस्माच्च सलिलेषु न्यपतत्। सुभानस्य कार्यवशाद्गृहेऽनुपस्थितौ सायंकालीनसमयाद्विविक्ते नदीतटेऽमीनैकाकिन्यसहाया संभ्रान्ता प्रोच्चैःप्रोच्चैराक्रोशत्। तत्क्षण एव नियतेरादेशादिव धीरः सय्यदः पादचारी सम्प्राप तत्र। स च क्षणात्तटिन्यां संप्लुत्य बालं सलीलं सलिलादुत्तोल्य

संक्षुब्धाया मातुः करे प्रत्यार्पयदपाहरच्च तदीयहृदयम्। तदारभ्य तावुभौ मिथो गाढानुरागग्रन्थिनात्मानं निबद्धमिवापश्यताम्। सुभानश्चापरिमितकृतज्ञताभारविनतः सय्यदेनादिष्ट सर्वोपकरणसंभारस्य मूल्यं भूरि न्यूनीकृतवान्। स विदेशीयस्तक्षकस्य गृहे कुटुम्बस्य पुरातनसुहृदिव पुरस्कृतः संभावितश्चाऽभूत्। हन्त साक्षान्मानुषरूपी भुजंगो निजशुभालये पोषितोऽभूदात्मनैवेति स्वप्नेऽपि नातर्कि तक्षकेणाविदग्धेन। कार्यवशान्नगरान्तरं मुहुर्मुहुर्निर्गते पत्यौ सय्यदामीने प्रदोषोत्तरं समगच्छेताम्। क्वचित्परिमहालनाम्नो निध्वंसितपुरातनमन्दिरस्य विजने पृष्ठभागे मिथः संसर्गादविच्छिन्नपरमानंदं प्रापतुः। क्वचिच्चश्मेशाहीसमाख्यस्य जलाशयस्य निर्झरपूरान्तिकमुपविष्टौ झर्झरमर्मरेण सालिङ्गनमृदुकर्णजपितानि सम्मिश्रयामासतुः। क्वचिन्मोगलसम्राटकालीनशालिमारप्रमदवनस्य विविक्तकोणे चिनारवृक्षस्याधः समुपविष्टौ पयःफेनासारच्छविविडम्बिन्या विमलया जोत्स्नया द्विगुणीभूतप्रेमोद्रेकौ मन्दशीतसुरभिसमीरचुम्बिताननौ निखिलं जगद्विस्मृत्य कतिपयहोरा अगमयताम्। कदाचिदरण्ये क्वापि द्विरेफझङ्कारमन्द्रस्वरामृतकर्णैरासेचितश्रुती पिकसारिकादिपत्रिणां कलालापं सह निजप्रेमालापैर्मधुरमधुरैरन्वगायतामिव। अथैकदा श्रीनगरात्प्रत्यासन्न निर्गमनमात्मनः सय्यदेन प्रेयस्यै निवेदितम्।

'क्व यासी' ति चिन्ताकुलाऽमीनाऽप्राक्षीत्।'

'अस्मत्सम्राडधिकारिभिराज्ञप्तेन स्वदेशं निवर्तितव्यं मयेदीनीमिति समुन्नतशिराः प्रत्यवादीत्सय्यदः। तरुण्याः करयुगलं निर्जीवमिवावालम्बत पार्श्वयोः। निश्चला पाण्डुरा निःशब्दा क्षणमवातिष्ठत सा। विनष्टं तद्यौवनं, तदाननं वक्रीभूतं, तदीयलोचनयुग्मं देदीप्यमानचरं सम्प्रति विलुप्ततेजः समभूत्। मास्म गमः प्राणेश! मास्म गम इति तरुणस्य बाहुं दृढं गृहीत्वान्वनयदमीना निरुद्धकण्ठी।

सय्यदः – प्रिये! न शक्यं किलेदृश्यां समवस्थायां नित्यमवस्था–तुमावाभ्याम्।

अमीना – कथं त्वया विना जीवितुं शक्नुयाम्।

इत्युक्तवत्यास्तस्या नैराश्यस्वरो नितरां तमतोषयत्।

स. – नेष्यामि त्वां सह मया।

इति तस्य वचनमाकर्ण्य रोमाञ्चिताङ्ग्यापादमस्तकं कम्पमानाङ्गयष्टिर्वेपमानेन स्वरेण।

अमीना – बालकौ विसृज्य कथं सह त्वया गच्छेयं बत!

स. – प्रेयस्यावश्यमेवानुगन्तव्यो वल्लभः।

संत्रासाकुलहृदया विस्फारितलोचना क्षणं तूष्णीमवातिष्ठतामीना।

स. – एत कथयितुमेवात्र समाहूतासीर्मया।

अमीना – अहो! मम बालौ! बालौ! बालौ!।

इति रुद्धबाष्पप्रवाहा हस्तपल्लवौ संपीडयन्ती सगद्गदं पुनःपुनरुदैरयन्नैराश्यादमीना।

स. – (अधीरतया) व्रज सार्धं मया नो चेद् डिम्भाभ्यां सहावतिष्ठस्व।

अमीना तु निरुत्तरा स्थितवती।

स. – अद्य रात्रौ प्रस्थास्ये। मया सह यातुमिच्छसि चेच्छादीपुरग्रामगामिमार्गस्य दक्षिणतो निवसतो वृद्धकृषीवलस्य काष्ठकस्य कुटीरसमीपं मां प्रतीक्षस्वानिशीथम्। तदन्तिकमेव नदीकूलस्पृशा पोतेन बारामुल्लाख्यग्रामाय प्रस्थास्यावहे। ततो मार्तण्डोदये च श्वः पटाच्छादितयानेन पिण्डीनगरं यास्यावः। कृषिकाः परिचितोऽपि मे न त्वामभिजानाति। अतस्तस्यैव कुट्यां संमिलिष्यावः।

तदाकर्ण्य मृणालपाण्डुरवदना निःशब्दा दोलायमानमनाः संत्रस्ता संभ्रान्ता चावनतमुखी तस्थौ सुभानस्य गेहिन्यमीना।

अमीना – कतिपयदिनान्यनुमोदस्व मे परामर्ष्टुम्।

इत्यनुनीतोऽपि तया शिरःकम्पेन स निराकरोदभ्यर्थनं तस्याः।

स. – अद्य रात्रावेव गन्तव्यं मया। श्रूयते हि यत्खैबरप्रान्तवर्तिप्रदेशे जनविप्लवः समुपस्थितः।

इत्यभिधाय स व्यरमत्सहसा सा निजत्वरितनिर्गमस्यावश्यकतामव–गच्छेदिति।

अमीना – (बाष्पाकुललोचना कम्पमानस्वरा) प्राणेश्वर! यदि मां परिहास्यसि क्वचित्तदा का वा दशा मे स्यात्।

स चोत्तरमदत्त्वा तां गाढमालिङ्ग्य सरभसं मुहुर्मुहुस्तदीयं ताम्बूलरागरञ्जिताधरं परिचुम्ब्य च कर्णेऽजपत्।

स. – नित्यं त्वयि स्नेहिष्यामि। त्वमेवाजीवं मे प्रेयसी स्थास्यसि।

अमीना – बाढम्। रात्रौ निर्दिष्टस्थाने त्वां प्रतीक्षिष्ये।

इति निवेद्य कथाख्यानात्क्षणमहज्जुर्व्यरमत्। संक्षोभकरे कलकले सरित्स्नानघट्टस्थानां विलासिनीनामिदानीं विरते प्रदोषापगमादन्धकारो न चिराद् व्यजृम्भत। संमुखीननिकेतनदीपिकानां मन्दप्रकाशः प्रतिबिम्बितो निर्झरिण्या अम्भसि।

अहज्जुः – ''अथ रजन्यां तस्यां भाविनः शिशुविरहस्य चिन्तनेन विदीर्णहृदयाऽमीना मञ्जुलस्वरेण दोलागीतिं गायन्ती बालकौ शाययित्वा स्वकीयावश्यकवस्तूनि संचित्य भर्तारं पत्रमलिखत्। व्रीडाभरमन्थरा व्यज्ञापयत्सा पतिं सय्यदेन सह निजसौहार्दारम्भं, सौहार्दस्यास्य विजृम्भणं, तदनु परस्परयोर्गाढानुरागम्, पर्यन्ते 'कामपरवशीभूता सय्यदमनुगच्छन्ती क्षम्यतां बद्धाञ्जलिर्मन्दभागेयं, बालकौ च मे सयत्नमभिरक्ष्येतामि' ति सानुनयं सा पतिं प्रार्थयत। समाप्ते लेखने परिधाय नीलवर्णाम्बरं, केशकलापस्य ग्रथितवेणीद्वयान्ते सुवर्णचक्राकाराभरणे निपुणं निधाय, कर्णौ रत्नखचितकुण्डलाभ्यामलङ्कृत्य, ग्रीवां च कनकचन्द्रहारेण भूषयित्वा प्रचुरकाञ्चनकङ्कणमण्डितकरपल्लवा, चंदनानुलिप्तसर्वाङ्गयञ्जनलेपवर्धितलोचनप्रभा, मल्लिकापुष्पमालाबन्धुरकन्धरा रक्तीकरणायाधरयुग्मस्य श्वासविशुद्धये चैलालवंगजातिपत्रकर्पूराद्युपस्कर–सज्जितां ताम्बूलवल्लीमाखादितवती।''

'अहो! दुराचारो दुष्टाया 'इत्यभ्यधादानाऽमेरिकादेशीया। विरतवचनस्तरुणः क्षणमात्रं स्थितवान्। ततश्च –

अहज्जुः – ''अथ यावत्सा गृहात्प्रतिष्ठासते तावत्सुभानो

नगरान्तरान्निवर्तते। परं पत्युः प्रत्यागमेनामीनायाः संकल्पस्य न कोपि प्रतिरोधोऽभूत्। विलम्बमानापि सा प्रत्यैक्षत धीरं यावत्स भार्यायाः कल्पितपलायनमशङ्कमानो निद्रादेव्या गाढं गृहीतोऽभूत्। तदनु सावधानं निःशब्दं शयनादुत्थाय भर्तुरुपधानस्याधस्तात् स्वहस्तलेखं निधाय जोषममीना गृहान्निर्ययौ। तमिस्राया अन्धतमसेऽलक्षिता कस्यचन शाकटिकस्य वचनानुसारेण निर्दिष्टस्थलं प्रति पद्भ्यामेव प्रतस्थे। न चिरात्तत्र समागत्य न पोतो न वा सय्यदस्तयालोक्यत। अनागमस्तस्याशुभशंसीति किंकर्तव्यप्रतिपत्तिमूढा क्षणं स्तम्भितगतिरिवातिष्ठतामीना। तावदकस्माद्

'अमीने! अमीने! पतिं बालौ च विसृज्य परपुरुषानुरागपरवशीभूय कुतोऽद्य व्यभिचारपथे पदं प्रक्षेप्तुं प्रवृत्तासि। त्वं सुभानस्याभिमानिता गेहिनी, तस्य समृद्धेर्यशसः प्रसिद्धेश्च फलं त्वया साकल्येन परिभुक्तमेव। कथं तव हृदयं न विदीर्यते सुशीलं नाथमशरणावर्भकौ च परित्यजन्त्याः। अवितर्कणीया भाविनी दैवघटना। निवर्तस्व गेहं निवर्तस्व शीघ्रं यावत्तव लेखो न निपतति पत्युः करतले।'

''इत्यन्तःकरणेन प्रबोधितापि चिन्तावष्टम्भं परिहाय काममोहप्रणुन्नाऽनल्पयोजनदूरं वल्लभेन निर्दिष्टं संकेतस्थानं पद्भ्यां गन्तुं कृतनिश्चयाऽविवेकान्धा स्मरातुरा धूसरच्छायया पाप्लरवृक्षविशेषपङ्क्त्या सुरचितोभयपार्श्वेन मार्गेणैकाकिनी प्राचलत्। क्वचित्संत्रस्ता प्रगाढनिश्शब्दतया तमिस्रायाः, क्वचिद्वेपमाना सूत्कारशब्देन पाप्लरपादपप्रकम्पनसमीरस्य, स्खलत्पद्भ्यां रजनीकरकरविरोचितमध्वानं विलोकयन्ती कथं कथमप्यात्मानमाकर्षत्। अध्वश्रमेण खिन्नगात्र्या अभिसारिकाया अस्या अवगणितसर्वरोधाया रमणसंगमैकतानायाः स्वकल्पितं साधयितुमुत्साहो द्विगुणीबभूव। क्वचित्स्रोतसमुल्लङ्घमाना, क्वचित्तरुगुरुगुल्मेषु स्खलन्ती, क्वचिल्लताप्रतानसंसक्तं वसनाञ्चलं मोचयन्ती, क्वचिद्गर्तां चोत्तरन्ती, प्रस्यन्दिजलशीकरानना पञ्चषघटिकोत्तरं कृषीवलस्य कुटीरान्नातिदूरं संप्राप। तावदकस्मादतिभीषणा सकडकडाशब्दं रोषाविष्टेव निशाचरीव सौदामिनी गर्जन्ती समदेदीप्यत। अतिभयानाकझञ्झावाते समुत्थिते पूगस्थूलबिन्दुभिर्वर्षितुमारब्ध भगवान्

मघवा। ततश्चाकाण्डं सखडखडामहानादमेको विशालवृक्षः क्षोणीतले समपतत्। दिष्ट्या चाभिसारिकायास्तस्याः पतत्पादपस्याधः सहसा संमर्दनेन मरणं पर्यह्रियत। परं स्खलच्छाखया द्रुमस्य प्रहतकशेरुर्घूर्णमाना जडीभूता सरभसमवाङ्मुखी सा प्राक्षिप्यत धरातले।

''अत्र श्रीनगरोपकण्ठवार्तिनि कृषिकस्य कुटीरे चिरात्सय्यदः प्रेयसीं प्रतीक्षमाणः स्थितवान् यावत् प्राग्दिशो धूसरवर्णो रक्ततां पर्यवर्तत। उदश्चति मरीचिमालिनि गगनतलात्तारामण्डले क्रमेण मन्दीभूते तिरोहिते च परःशतपतङ्गपटलकलकलेन निर्झरमर्मरेणेव भूतलं पर्यपूर्यत। चिरं प्रतीक्षमाणः कृषीवलस्य कुटीरे विदेशीयो भग्नाशः प्रेयस्या प्रतिज्ञाभङ्गः कृत इति रोषात्तामभिशप्य नद्याः कूलं प्रत्यगच्छत् न चिराद्यावत्सुखं सुप्त एष पोते प्रति बारामुल्लाग्रामं स्रोतःसलिलगत्या मन्दं मन्दमुह्यते तावदमीना पतितपादपस्य बृहच्छाखाया अधो मरणोन्मुखी स्थितास्ति। मुहुर्मुहुरात्मानमुत्थापयितुं प्रयतमानायास्तस्या असह्यवेदनाजनिताक्रोश उषःकालीनप्रशान्ततायां स्फुटमश्रावि नेदीयसि क्षेत्रे प्रयस्यमानेन सभार्येण क्षेत्रिणा। क्षणाद्दम्पती विसृज्य क्षेत्रं यतो विरुतशब्दो निस्ससार तत्रोपेत्य झटिति जर्जरितशरीरममीनायाः सायासं शाखाया अधस्ताद्विमोच्य जलबिन्दून् कतिपयांस्तस्या मूर्च्छितायाः पाण्डुरानने निषिच्य मृतप्रायां तां स्वकुटीरं प्रावेशयतामात्मध्वंसिनीमिमां वराकीम्।

अत्र क्षणं विरते कथके 'कथं तातपादानां श्रवणपथे कथेयं निपतिते' ति दारिकयानुयुक्तोऽवशिष्टवृत्तान्तस्तेन न्यवेदि।

अहज्जुः– ''कथम्? सर्वमेव सरलमभूत्। सुभानेन स्वयमेव निवेदिता कथेयं पितृपादेभ्यश्चिराद्वृद्धसख्येभ्यः। परं न कृषीवलो न वा तद्भार्या ययौः कुट्याममीना समाश्रितासीत् स्वप्नेऽप्यतर्कयद्यदियं तक्षकस्य सुभानस्य गेहिनीति। चिरादक्षोडकाष्ठसंचयं तत्कार्यार्थमुपकल्पिवांस्तक्षकाय कृषिकोऽयम्। कतिपयदिनोत्तरं कार्यवशादभिगच्छता क्षेत्रिणा यदृच्छयाऽऽकस्मि– कव्यतिकरमधिकृत्य सुभानस्य पुरः समाख्यातेऽपि क्षताङ्ग्या योषितया स्वभार्यया भवितव्यमिति न संशयलेशोऽपि तस्य मनसि प्राविशत्। अथ व्यतीतेषु कतिपयमासेषु पुनः श्रीनगरं प्रतियास्यते

कृषीवलस्य रत्नखचितकुण्डलद्वयं विक्रयार्थं समापयदमीना। क्षेत्रिणः दर्शितमात्रं सुभानाय कर्णावतंसयुग्मं स्वभार्याया इति तेन झटिति प्रत्यभिज्ञाय तस्यास्तादात्म्यं वृत्तान्तश्च सर्वमवाबोधि कृषीवलतः।

**अस्मा** – अपि सुभानेन पुनः प्रवेशिता सा गृहे?

**अहज्जु** – कुण्डले क्रीत्वा सुभानो गेहिन्यै कामवशीभूतायै प्रथमं कुपितोऽपि देवविलसितादकलङ्कितदेहापि क्षतदेहाऽशरण्येति गृहं निवर्तस्वेति कृषीवलमुखात् संदेशं प्रेषितवान्। तमाकर्ण्य सा निःशब्दा स्तम्भितेव धरणीतललग्नेव मूर्च्छितेव क्षणं स्थित्वा सोरस्ताडनं तारस्वरं विलपितुमारब्ध। सकरुणं सान्त्वयितुं साग्रहं भोजयितुं च तां वृथा प्रयतितेऽपि दम्पतीभ्यां मुहुर्मुहुरात्मानं नितरां निन्दन्ती रुदितान्न सा व्यरमत्। पर्यन्ते निराहारा शोकातिशयाकुला कुक्षिवेदना-भिभूतातिश्रान्ता लोचनसलिलप्रक्षालितकपोलाऽनुतापाग्निना दंदह्यामानाऽऽत्मानं भूतले निक्षिप्यानवरतस्रवद्बाष्पप्रवाहा निश्चला स्थितवती यावन्निशीथागमे क्षेत्रप्रयासश्रान्तौ निद्रादेव्या गृहीतौ जायापती। ततश्चासह्याधि- शारीरिकवेदनाक्रान्तापि कथं कथमपि समुत्थाय कुटीरतो निःशब्दं निरगात्। चण्डानुतापवशीभूतायाः स्वेच्छापरित्यक्तस्वजनस्य दृष्टिपथादात्मानं दूरीकर्तुमिच्छन्त्याः किं समभूदिति न कोऽप्यजानात्। बहुतिथं कालं निजशिशुप्रियचिकीर्षया तामन्वेष्टुं प्रायततरां सुभानः परं प्रयत्नेषु सर्वेषु निष्फलीभूतेषु नैराश्याद् व्यजहात्सर्वाशां पुनर्दर्शनस्य पत्न्याः। प्राहुर्जनाश्च प्रतिदिनं वर्धमानानुतापाशनेरुपशमनायेव सरित्सलिलेषु तयोपलब्धाश्रयया भाव्यमिति।

अवगतं स्यादिदानीं भवत्याः कुतः पितृपादैः प्रतिबन्धोऽकारि दारिकाया अस्माया विहाराय बहिर्गमनस्येति।

इत्यभिधाय विरतवचसि तरुणे गृहाभ्यागता विदेशीया निरुत्तरा तस्थौ। तत्र मन्दिराद्बहिः स्थिताया वनीपकाया उपर्याख्यातां कथां मूकविदीर्णहृदयेनाकर्षयन्त्या विह्वलाननस्य पाण्डुरता समवर्धततराम्। कथकस्यान्तिमपदं तीव्रव्यथितायास्तस्याः स्मृतिपटे जन्मान्तरोपात्त-

संस्कारानुबन्धेनेवापरिमितशोचनीयसंस्मृतिपरम्परां व्यरचयत्। नेत्रजलमिश्रितधूलिलिप्तकपोला प्रौच्चैराक्रोष्टुमिच्छन्त्यप्यात्मसंयमेन निरुद्धकण्ठा मलिनकररुहप्रान्तैर्हरिद्रधूसरवर्णकेशकलापमात्मनः सरभसमाकर्षत्। तदनु परमनैराश्यजन्यशोकातिरेका सामिरुद्धमन्दरुदितध्वनिर्निस्ससार तस्मात्प्रदेशात्।

'कुतः? किमेतत्? को रोदिती' त्युक्त्वा बालिकाऽऽस्मा भ्रात्राऽमेरिकदेशीयया चानुगम्यमाना प्रति वातायनमधावत्। पाषाणकुट्टिमपदव्यां बही रथ्यायां न कोऽप्यदृश्यत। नेदिष्ठा जीलमतरंगिणी विमनस्केव निरानन्देवास्रवत्। काश्चन पोताः कलुषजलेष्वितस्ततो विकीर्णा निश्चलास्तस्थुः। 'क्व गताऽस्मदीयपुराणसहचरी 'ति वातायनदेहलीमवलंबमानया वत्सयानुयुक्तः 'पश्य तत्र प्रयात्यसावि' ति काञ्चन च्छायामिवाकृतिं तुहिनावृतायां रजन्याममन्दं प्रचलन्तीमङ्गुल्या निर्दिशन्नब्रविदहज्जुः त्रिभिस्तैरपसर्पन्त्यां वनीपकाया दीनदीनाऽकृतिर्निपुणं निरूपिता वात्यया सरभसं वाहिताऽपास्तं शरद्दलमिव भिदुरा क्रमेण यावत्तिरोहिताऽभूत्।

अहो वैलक्षण्यं प्रथमागमस्यात्र तस्या दीनायाः। तथा हि। पितृपादानां स्वर्गगमनदिनादारभ्यैव शुनीव विश्वसनीयाऽऽवयोरुभयोर्बद्धप्रीतिर्विनैकदिनस्याप्यनुपस्थितिं प्रत्यहमाप्रातरानिशं गृहाद् बहिः स्थितास्त्येषाऽभिरक्षितुमिवावाम्। इत्यहज्जुर्गृहागतायै व्यज्ञापयत्। 'न सा केनापि संभाषते न कोऽपि वास्ति परिचितस्तस्या' इत्यस्मा सदयमगदत्।

'अतिगभीरस्वभावया किञ्चन स्पर्शागोचरं भुवनमात्मीयमधिष्ठितं स्यादि'ति दार्शनिक इवाभिधाय दारिकाया कुञ्चितवेणीयुग्मं सप्रेम करपल्लवेन परामृश्य शीततीक्ष्णवातपरिहरणाय वातायनं पिहितवानहज्जुः।



# १. प्रेमरसोद्रेक

**कथासारांश:**

अस्मा नाम काचित्त्रयोदशवर्षीया बालिका। कश्मीरेषु कस्मिंश्चित्पान्पुरनामनि ग्रामे पितामहाभ्यां सह वसति स्म। हमिदा नाम काचित् परित्यक्ता योषिताश्रयार्थमागतासीत्। सा तत्र एकां कन्यां प्रासूत्। अचिरादेव सा मृता, परं मरणात्पूर्वं तयोक्तम् यत्, 'यद्यस्या: पिताप्यत्रायातार्हि न समर्पणीयैषा कन्या तस्मै'। क्षमातलादागता सुरसुन्दरीव कमनीयैषेति तस्या: सौन्दर्यस्य वर्णनं कृतम्।

प्रात: कालादारभ्य एक: क्षेत्रबटु: क्षेत्रे मेषयूथं पालयन्स्तिष्ठति अत: तं विश्रान्तिं दातुमस्मा क्षेत्रमगच्छत्। धैर्यशीला धीरेत्येताभिर्विशेषणैस्तस्या: स्वभाव: स्पष्टीकृत:। प्रदोषसमये तस्मिन्विविक्तप्रदेशे तया स्वकोषगतनाणकान्गणयन् कश्चित्पश्चत्रिंशद्वर्षीय: पथिक: दृष्ट:। कश्चिदकालानन्तरं द्वयो: पुरुषयोस्संभाषणं तया श्रुतम् – 'अत्रैव खनित्वा निधेयमेत् यथान्ये न पश्येयुरिति।' तया चिन्तितं कस्यापि हतपुरुषस्यपुर्विषये तौ वदत:। तयोर्गमनादनन्तरं तया कस्यापि पुरुषस्य वेदनापीडितस्वर: श्रुत:। तस्य साहाय्यमाचरणीयमिति निश्चित्य सा पुरातनमन्दिरं प्रति प्रस्थिता। तत्र स्तम्भे रज्वा बद्ध: स एव पुरुष: दृष्टस्तया य: पूर्वं नाणकानि गणयन्दृष्ट आसीत्। स्तम्भावाद्विमोच्यास्मा तं गृहमानीतवती। पितामहो मे आनन्दितोभवेदिति चिन्तितं तया।

अपरेद्यु: स्वस्थेन तेन स्ववृत्तान्त: कथित:। स: श्रीनगरस्थितगुग्लु नाम धनिक: नाविक:। अहं निपुत्रिकोऽस्मि। पत्न्या: वन्धताया: कारणात् त्रयोदशवर्षेभ्य: प्राक् सा मया परित्यक्तोति तेनोक्तम्। तदा एष एव अस्माया: पितेति ज्ञातम्। परं तस्या: परिपालनविषयकानि नाविकस्य वचनानि श्रुत्वाहं किमर्थमस्या: भावीसौख्यमपाहरामीति चिन्तितं वृद्धेन।

अन्ततो गत्वा सा बालिका निर्णेतुं समर्थास्ति सैव निर्णयं कुर्यादिति सर्वानुमतानुसारं निश्चितम्। अस्मा वृद्धपितामहस्य अङ्के उपविष्टा।

निराशितः गुग्लु स्वगृहं प्रत्यागतः।

**समीक्षणम्**

**अस्मा –**

अस्मैका कश्मीरेषु पान्पुरनामग्रामे निवसन्ती त्रयोदशवर्षीया बालिका। मातृपितृविहीना मातामहीपितामहाभ्यां सह वसन्त्यैषा सुमुखी धैर्यशीला बालिका। तस्याः सौन्दर्यस्य वर्णनमुचितैर्विशेषणैः कृतं क्षमादेव्या– 'सेयं सरोजलोचना कुन्दकुडमलदन्तपङ्क्तिः प्रवालाधरा चञ्चलालका शिरीषकोमला शारदकौमुदीव रुचिरा क्षमातलागतसुरसुन्दरीव कमनीया। एषानतिक्रान्तशैशवा बाला न केवलं कमनीयाऽपितु गुणशालिन्यप्यासीत्। धैर्यशीलापि मृदुवचना धीरापि स्थिरमतिरित्यादिभिर्विशेषणैस्तस्याः गुणाः वर्णिताः। एते गुणा एव कथाविकासायोपयुक्तेति विचिन्त्यैव क्षमादेव्या कथारम्भे तस्या अयं गुणविशेषः 'मा स्म भैषी। नाहं शिशुरस्मि। समर्थास्मि रक्षितुमात्मानमिति' वाक्येन स्पष्टीकृतः।

क्षेत्रबटुं विश्रामयितुं क्षेत्रं प्रति गमनसमये मार्गे स्थितं भयावहं प्राक्तनमन्दिरं दृष्ट्वा किञ्चिद्भिता सा 'अलं भिया। प्रतिच्छाया एवैताः इत्यात्मानमाश्वास्य क्षेत्रं प्रति तत्वरे' इत्यनेन वाक्येन तस्याः धैर्यं व्यञ्जितम्। प्रदोषसमयेऽपि तस्य प्रदेशस्य विविक्तता न भाययति ताम्। कञ्चित्पुरुषं तत्रागच्छन्तं दृष्ट्वा सा निबिडगुल्मान्तरं स्थित्वा च तस्य क्रियाकलापं पश्यति। स कश्चित्पञ्चत्रिंशद्वर्षीयः धनिकः कोषस्थितनाणकान्गाणयित्वा गन्तुं प्रवृत्तः।

पुनरेकवारं कयोश्चित्पुरुषयोः संवादस्तया श्रुतः। 'अत्रैवखनित्वा निधेयमिति। तदपि तया वृक्षकोटरे स्थित्वात्मरक्षणे कृतम्। परं यदा कस्याचित् वेदनार्तितस्य करुणस्वरः तया श्रुतः तदा दुःखीजनस्य साहाय्यमाचरणीयमेतेन विचारेण तत्र गत्वा स्तम्भे बद्धं पुरुषं मोचयित्वा तं गृहमानयत्। शुश्रुषितः तया। एतेन प्रसङ्गेण तस्याः धैर्यं परोपकारवृत्तिश्च दृश्यते। एतया विपत्प्रसङ्गाद्रक्षयित्वाहं गृहमानीत इति ज्ञात्वा कृतज्ञतां

प्रकटयितुं स तां स्वगृहं नेतुं तस्यै भूरिधनञ्च दातुमैच्छत।'

प्रात:काले सर्वेषां संवादेन एष एव मे पिता येन मम जन्मात्प्राक् मम मातानपत्यताकारणात्परित्यक्तेति तया ज्ञातम्। एतस्य गृहे मम सुखनिवासो भवेदिति तया न चिन्तितम्। अस्मैव निर्णयं कुर्यादिति यदा पितामहेनोक्तम् तदा सनिश्चियं सावदत् – 'दीयतां पञ्चशती रुप्याणामर्हते जनायान्यस्मै। यत्र मे पितामहस्य पितामह्याश्च निवासस्तत्रैव समुचितो ममापि। विद्यते दिष्ट्या पर्याप्तधनमेतयो: सविधे मत्पोषणार्थमिति सनिश्चयं प्रोच्याग्रे च सपदि संप्लुत्योचै: स्थविरकृषीवलस्याङ्के सुखमुपाविशत्।' इत्येकेन वाक्येन तस्या: मातामह्यां पितामहे च दृढस्नेह: धनेऽनासक्तिश्च स्पष्टीकृता। अतीवसमर्थतया बालिकाया अस्या: चरित्रचित्रणं क्षमा देव्या कृतम्।



# २. तापसस्य पारितोषकम्

**कथासारांशः -**

वर्षाकालस्य सझञ्झावातधारासारवृष्ट्याः प्रदीर्घवर्णनेनारभेते कथैषा। उर्मिला नाम काचिद्रूपयौवनसम्पन्ना योषिता रोगग्रस्तं मरणासन्नं स्वपत्युर्मुखं पश्यन्ती शयनागारे स्थिता। रजन्यामेवाप्स्यते कालनिमन्त्रणं तस्माद्भवत्या सज्जीभाव्यमनिष्ट व्यतिकराय खलु। भद्रे! ईश्वरेच्छा बलीयसी। दैवनियोगमुल्लङ्घयितुं कः पारयेदिति भिषग्वर्यस्य वचनं श्रुत्वा नास्ति मेऽन्यच्छरणमिति चिन्तयित्वा च व्यलपदुर्मिला।

वैद्यस्य गमनादनन्तरं दीनदीनोर्मिला खिन्नमनसा स्तब्धा जाता। आदिनं यावत्तया भोजनमपि न कृतमासीत्। सहसा साऽस्मरद्यत् त्रिविष्टपदेशीयतापसेनैकन पुरातनी कुक्रीनाम्नी कृपाणिका दत्तासीत्। एतया मन्त्रितकृपाणिकया मन्त्रगुणेन युवयोर्शुभं भवेदित्युक्तमप्यासीत्तेन। रत्नखचितरजतकोषे स्थापितां कृपाणिकमन्विष्य सा उन्मत्तप्रायोर्मिला तामनिन्दत। एषा कृपाणिक मम प्रयोजनं सफलीकर्तुमेव दत्तास्यादिति विचिन्त्य तां उरसि निपीड्य ध्यानमग्नेव तत्रैव तिष्ठति।

सहसा तत्र बृहदाकारः तापसवेषः महाप्रभश्च पुरुषः शयनागारे प्रविष्टः। अपि भवत्याहमाहूतः 'प्रश्नेनानेन संभ्रान्तया तया शिरसश्चालनं कृतम्। स तपस्वी ईश्वरदत्तप्राणान्विनाशयितुं नास्त्यस्मदधिकार इति तामसान्त्वयत्। एतयोर्संवादेनोर्मिलायाः पूर्वचरितमुद्घाटितम्। उर्मिला दुर्दैवादाबाल्यादनाथाऽऽसीत्।' अनाथबालिकाश्रमे बयसस्तस्या अष्टादशेवर्षे कस्यचिद्द्विजवरेण कृतपाणिपीडनमात्रैकदोषा सा बान्धवैः परित्यक्ता। एतेन तरुणेन सह तस्याः विवाहः बान्धवैः निरुद्धः। अत एवोर्मिला तस्य व्याधिना अन्याश्रयविधूरत्वाच्चिन्ताग्रस्ता जाता।

'आत्मघातकसाहसादभिरक्षितुमेवाहमत्रागतोऽस्मिति। तस्यौर्ध्वदेहिकं त्वया कार्यमित्युक्त्वा सोऽन्तर्हितः। यदा सझणत्कारं कृपाणिका भूमौ पतिता तदोर्मिला विच्छिन्ननिद्रेव

पत्युर्शयनान्तिकमुपविष्टासीत्। उन्मीलितनयनं स्वपत्युर्मुखं तया दृष्टं तदा सा हर्षातिरेकेण कृपाणिकां पर्यचुम्बत।'

पतिव्रतानां पुण्येन किंवा न भवति क्षितौ। सुभाषितेनानेन कथा समाप्यते।

**समीक्षणम् –**

**उर्मिला –**

उर्मिला महाबलेश्वरनाम्नि पर्वतीयप्रदेशे पत्यासह निवसन्ती रूपयौवनसम्पन्ना काचिद्योषिता। व्याधिग्रस्तः मरणासन्नश्च तस्याः पतिः। सा तल्पास्यन्तिकं तस्य विवर्णं निस्तेजमुखं पश्यन्ती शयनागारे स्थितासीत्। एतस्या रूपवर्णनं वर्णितं क्षमया –'रूपयौवनसम्पन्ना केतकीगर्भगौरवर्णा सरलसरलाङ्गयष्टिर्हरिणलोचना मनोहारिणी च सूक्ष्मकार्पासवस्त्रधारिणी सा मङ्गलसूत्रादन्यदाभरणं नाधारयत्।'

'हन्तं रजन्यामेवाप्स्यते कालनिमन्त्रणमित्युक्तवति भिषज्युर्मिलायाः पदतलभूमिस्खलिता। अपि न किमप्यन्यत् कर्तुं शक्यते? इति तस्याः प्रश्नस्योत्तरे नेत्युक्तं भिषग्वरेण। नेतिनेतीत्यक्षरद्वयवाग्ध्वनिश्च न्यपतत्तस्याः श्रुतौ मृत्युघण्टानाद इवेति वर्णनमुर्मिलायाः मनःस्थितिदर्शकम्। पतिं विना कथं जीवनप्रवासः इति चिन्तनेनोद्विग्नोर्मिला त्रिविष्टपदेशस्य केनचित्तपस्विना दत्तां कृपाणिकामस्मरत्। तया कृपाणिकया जीवनान्तः करणीय इति निश्चितं तया। अत्र कृपाणिकां प्रति परिवर्तमानाः भावाः क्षमादेव्या सम्यग् वर्णिताः। 'सपुलकं तामस्तौषित् क्वचिदखिद्यत क्वचिदकम्पत क्वचित्तामनिन्दत क्वचित्तां व्यडम्बयत्।' एतादृशमानसिकस्थित्यां सा एकं गृहागतं तपस्विनं पश्यति। तं दृष्ट्वा प्रथमं भयभिता सा तमपृच्छत् कस्त्वं कस्मादगतस्त्वमिति। अयं त्रिविष्टदेशीयतपस्वीति प्रत्यभिज्ञातं तया।'

तयोसंभाषणेनोर्मिलायाः पूर्वचरितमुद्घाटितम्। अत्र पुनरकेवारं अनन्यगतिकत्वात्तया प्राणार्पणस्य निश्चयः श्रावितः। परं तपस्विनः मधुरवाण्या कृतोपदेशाद्विरमति सास्मात्साहसात् जागरणोपोषणादिक्लेशैः

दु:खातिरेकेण चार्धनिद्राभिभूतया यदनुभूतं तन्न स्वप्नं न चापि सत्यम्। आन्तर्मनस: विभ्रम एव। अत एवास्मात्प्रसङ्गादनन्तरं लेखिका वर्णयति विच्छिन्ननिद्रेव मन्थरा प्रामार्क्षीदक्षियुगलम्। स्वपतिमुन्मीलितनयनं दृष्ट्वा सन्तरिता रात्रिरिति विचिन्त्य आनन्दिताभवत्।

**समीक्षणम् –**

कथाया: प्रारम्भ: निसर्गवर्णने कृत: क्षमादेव्या। विद्युल्लताया: नर्तनेन ज्ञञ्झावातेन च सह भीषणवर्षावेणाक्रान्त निसर्गस्य वर्णनं कृतम्। अनेन वर्णनेन उर्मिलाया: दु:खं निसर्गवर्णनेनाधिकं प्रभाव्यभत्। यथा – तत्र जीर्णधूसरभित्तिषु–चित्रविचित्रविच्छायच्छायानिचयेन गाढनि:शब्दतयारण्यस्य गृहाद्बहिश्च मण्डूकानामनवरतेनारटनेन समवर्धत भीषणगभीरता शयनागारस्य।

तपस्विन आगमनात्पूर्वं क्षमादेव्या उर्मिलाया: मन:स्थितिर्विशदासीत्। यथा माध्यह्निकभोजनं न कृतमासीत्तया। जागरणोपोषणादिक्लेशै शिथिलगात्री सा अनन्यगतिकत्वात्प्राणार्पणाय सिद्धाऽभवत्। कृपाणिकां स्मरन्त्या तस्या: स्मृतिसरण्यां तपस्व्यपि आगत:। 'पिहितलोचनयुगला कस्मिंश्चिदज्ञातप्रदेशे पर्यटन्तीव विस्मृतसांप्रतिकपरिस्थितिरिव ध्यानमग्नेव निश्चला वितस्थे' एतेन वर्णनेन तस्या अन्तर्मनस: शक्त्या एव तस्या: पत्युर्प्राणा: रक्षिता: इति दर्शितं क्षमादेव्या।

करुणरसपूर्णेयं कथा परं न दु:खान्ता। कथाया: समाप्तिश्च निसर्गवर्णनैव कृता। यो निसर्ग: तस्या: कृते दु:खदायक: स एवेदानीमानन्ददायक: जात:। पञ्चषघटिकाभ्य: प्राग्र वसुन्धरा या मरुस्थलीव शून्यशून्येव भाति स्म सेदानीं प्रफुल्लजपाकुन्दबकुलमालती मल्लिकादिकुसुमैर्समुल्लसिता नन्दनवाटीवातिमनोहारिणी तां समानन्दयदमन्दम्।

तरुणस्यायुर्वर्तिस्तमोमयकोणे निहितस्य दीपकस्य तनुवर्तिरिव कम्पमानासीदत्र रूपकाधारितोपमालङ्कारेण तरुणस्य

मरणासन्नस्थितिर्दर्शिता। वराकीं कोकीमिव कोकाद्विरहितामुत्तरोत्तरं तारस्वरै रुदतीं द्रष्टुं कथं त्वं सहसे? इत्यत्रप्रयुक्तोपमा उर्मिलाया अगतिकतां सूचयति। प्रदीर्घनिसर्गवर्णनमित्यस्याः कथायाः वैशिष्ट्यम्। दीर्घसमासरचना प्रौढगद्यशैल्याः स्वरूपं दर्शयति यथा संभ्रमपारावारकल्लोलविलोडितहृदया (पृ.२६), माध्यानिकानास्वादितभोजनसंभृतम् इ.



# ३. परित्यक्ता

**कथासारांशः –**

कश्मीरप्रदेशं द्रष्टुकामः कश्चित् पुरुषः मार्गदर्शकेण सह प्रस्थितः। परं सहसा प्रारब्धया वर्षया अशक्यमासीदग्रे गन्तुम्। अत्रैव कस्याश्चिद्धर्मशालायां निवस्य प्रातःकाले पर्यटनमाटब्धव्यमिति निश्चित्य तस्मिन् विविक्तस्थाने स्थितां धर्मशालां गतवन्तौ तौ। मार्गदर्शकस्य स्थलज्ञानं सम्यगासीत्। तेनोक्तं एष गृहस्वाम्यत्रागतानकान्मनुष्यविशेषान्विहाय सर्वान्सत्करोति। के च ते इति पृष्टे सति तेनोक्तं – कषायवस्त्रधारिणः परिव्राजका इह निषिद्धप्रवेशाः। तद् गृहं 'कस्याश्चिद् विलक्षणाख्यायिकायाः पृष्ठिभूमिरिव प्रत्यभान्मे' इति तस्य पुरुषस्य विचारः।

आतिथ्यसत्कारादनन्तरं भोजनादिकं समाप्य तौ शयनागारङ्गतौ। पुनरेकवारं करकवृष्ट्यासहितं वृष्टिरारब्धा। घण्टानादेन सञ्जातकुतुहलेन च तेन गृहाद्बहिर्दृष्टम्। प्रवेशद्वारे काचित्पञ्चत्रिंशद्वर्षीया कषायवस्त्रधारिणी युवतिस्स्थिताऽऽसीत्। हस्तशकटे नववर्षदेशीयः पङ्गू बालक शयानासीत्। तां दृष्ट्वा मार्गदर्शकः विस्मितः। कषायवस्त्रं दृष्ट्वा द्वारपालेन तस्याः प्रवेशः निषिद्धः। अतः सा निर्गता तस्मात्स्थानात्। तस्यै दीनायै धनं दातुमुत्सुकः स मार्गदर्शकेण सह गृहाद्बहिर्गतः। तत्रैव स्थिताऽऽसीत् सा। तस्माद्धनग्रहणं तया निराकृतम्। 'विधातुरवनी विपुला खलु' जन्मान्तरपापस्य फलमनुभूयते मयेदानीमित्युक्त्वा साऽगच्छत्।

स्वप्रकोष्ठं पुनरागत्य स पृष्टवान् तस्याः वृत्तान्तम्। मार्गदर्शकेणाखिलवृत्तान्तः श्रावितः। सा कस्यचिद्धनिकस्य पत्न्यासीत्। अनपत्यतादुःखादन्यन्नासीत्तयोर्जीवने दुःखम्। पुत्रप्राप्त्यर्थं यज्ञादिकाः अनुष्ठिताः व्रतान्याचरितानि विविधानि भेषजानि सेवितानि। परं विफलाः सर्वे उपायाः। पश्चाम्बुदेशादागतस्य कस्यचिद्योगिनः प्रभावेणैषा तस्य मायाजालेपतिता। सा रत्नखचितसुवर्णालंकारान् तस्मै ददाति स्म। सोऽपि

तस्यै किंचन पानीयं व्यतरत्। कतिचिन्मासाभ्यन्तरे एव तया स्वशरीरेऽनुकूलं परिवर्तनमनुभूतम्। तेनैषा हृष्टाचित्ता तस्मै भक्तिपराऽभवत्। इष्टप्राप्तिपूर्त्यर्थं तया कतिचिद्दिनान्याश्रमे वस्तव्यं देवतापूजनार्थं सर्वस्वमर्पणीयमिति तस्य मुखाच्छ्रुत्वा सा धनं परिगृह्य गृहं च त्यक्त्वा निश्चितस्थानमगच्छत्। अरण्ये कारागृहसदृशस्थाने तामानयत् योगी। वृद्धसेवकं विना न कोऽप्यासीत्तत्र। योगिनः परिवर्तितव्यवहारं दृष्ट्वा ज्ञातं तया वञ्चितास्मि योगिनानेनाहम्। सप्ताहानन्तरं सा वृद्धसेवकस्य साहाय्येन ततः पलायिता पर्यट्य कथाञ्चिद्गृहमागता। परं तस्याः व्यभिचारकृत्येनाङ्कितः सोऽपि धनिकः निर्गतः। आत्मघातार्थं सिद्धया तयोदरे वर्धमानं वंशाङ्कुरं चिन्तयित्वा त्यक्तः स विचारः। कस्यचित्कृषीवलस्य गृहे एकं पङ्गुपुत्रं प्रासूत्सा।

अद्य तमेव पुत्रं हस्तशकटे निधायात्रागताऽऽसीत्सा। प्रातःकाले गृहस्वामिना सा कषायाम्बरधारिणी गृहमानीता। हस्तशकटे विद्युत्पातेनाङ्गारीभूतः निष्प्राण बालक आसीत्। रात्रौ गृहस्वामी श्रुणोतु वृत्तमिदमिति साभिप्रायं श्रावितमासीन्मार्गदर्शकेण।

**समीक्षणम् –**

कथानायिका पश्चाम्बुदेशस्य श्रीमत्तमस्य पत्न्याऽऽसीत्। मुग्धयाः तस्या अति श्रद्धालुत्वादेव विनाशः समजनि। इत्येकेन वाक्येनैव तस्याः स्वभाववैशिष्ट्यं कथितं लेखिकया। सकलसमृद्धियुक्तजीवनेऽपि निरपत्यतया निरानन्दमासीत्तस्या आयुष्यम्। पुत्रप्राप्त्यर्थं यज्ञानुष्ठानव्रताचरणभेषजादयः बहुविधाः उपायाः कृताः। परं नासीत्केनाप्युपायेन फलसिद्धिः।

पश्चाम्बुदेशादागतस्य कस्यचिद्योगिनः मायाजाले सा पतिता। पूर्वमेव स्पष्टीकृतं लेखिकया तस्य मुग्धत्वम्। संपूर्णविश्वासेन सा तस्मै मुनये रत्नखचितस्वर्णालङ्कारान् धनञ्च ददाति स्म। शरीरे सञ्जातविकाराननुभूय हर्षितया तयैषाऽऽनन्दवार्ता श्राविता तस्मै योगिने न पत्यै। तस्यैव वचनानुसारं गृहादलङ्कारान् धनंञ्च संकलय्य गृहं त्यक्त्वा तेन मुनिना सह

निर्दिष्टस्थानं प्रति प्रस्थिता। एतदेव तस्याः मुग्धत्वं। न तया चिन्तितं मम गमनादनन्तरं किंचिन्तयेन्मम पतिः। पुत्रप्राप्तिर्महत्त्वपूर्णाऽऽसीत्तस्याः कृते। तस्य पृष्ठतः अरण्यगतकारागृहसदृशस्थाने गता सा। तस्य परिवर्तितव्यवहारेण ज्ञातं तया वञ्चितास्म्यहमिति। ततः प्रभृत्यारब्धा तस्याः दुर्दशा।

तस्याः दुरवस्थायाः कारणं सैवेति सा सम्यग् जानाति। अत एव वदति सा–'अवश्यमनुभोक्तव्यं कृतं कर्म शुभाशुभामिति पुराणवचनानुसारेण जन्मान्तरपापस्य फलमननुभूयते मयेदानीम्।' तस्याः दुरवस्था सम्यक् चित्रिता क्षमा देव्या। वर्षाकाले घनान्धकारे गृहस्य प्रवेशद्वारे स्थितायास्तस्याः वर्णन् – शकटस्य पूर्वभागलग्नदीपिकायाः प्रकाशेनालक्ष्यत यत्तस्याः स्विन्नकषायवसन तदङ्गयष्टिलग्नमासीद् येन शरीरकृशता तस्या विशेषतो लोचनपथमगमंत्। हस्तशकटे पिण्डीभूताष्टनववर्षीयस्य किशोरमानुषाकृतिः शयानासीत्। विलोक्य परिव्राजिका तां मदीयः सहचरः सविस्मयमासनात्सपदि समुत्थायाधः स्थितामङ्गनां मृत्युलोकात्पुनरुत्थितामिव निरीक्षितवान्।

'एतादृश्यामवस्थायामपि धैर्यं न त्यक्तं तया। एषा कुत्रचिदाश्रयं प्राप्नोत्विति विचारेण धनं दातुमुत्सुकं तमुक्तवति सा – विधातुरवनी विपुला खलु। अवश्यं क्वापि कोणिका मयोपलप्स्यते।' 'अनया तपस्विन्या कस्मिन्नपि दुःखप्रधानसंसारनाटके दुःखिपात्राभिनेत्र्या भाव्यामिति' अनेन वाक्येन तस्याः दुःखस्य पराकाष्ठा वर्णिता। 'मूर्तिमती धीरतेव' विशेषेणानेन तस्याः धैर्यं सूचितम्।

**कथावैशिष्ट्यम् –**

न खल्वेषा पात्रप्रसङ्गैर्युक्तोत्कृष्टा लघुकथा अपि तु प्रौढगद्यसाहित्यस्योतममुदाहरणम्। प्रथमं लघुकथायाः स्वरूपं पश्यामः। अत्र लेखिकया कथाकथनार्थं कोऽप्येकोऽध्वगः नियोजितः। यस्मिन् गृहे सोऽध्वगः रात्रावाश्रयार्थं स्थितः तस्य गृहस्य स्वामी कषायवस्त्रधारिणं विहायान्यानतिथिन्सत्करोतीति मार्गदर्शकस्य वाक्येनोत्कण्ठा जनिता।

घनान्धकारे घोरवर्षायाञ्च बालं हस्तशकटेऽवस्थाप्यागतां कषायवेषधारिणीं शरणार्थिनीमपसारयितुं वृद्धस्य प्रयत्नः उत्कण्ठावर्धकः। प्रसङ्गेनानेन मार्गदर्शकस्य तस्याः कृशाङ्ग्याः पूर्ववृत्तकथनं गृहस्वामिनः वृत्तस्य निभृतश्रवणं उत्तरोत्तरमुत्कण्ठावर्धकम्। कथान्ते गृहस्वामीः परमादरेण स्वपत्नीं गृहमानयनमिति कथासूत्रम्। घटनाविन्यासवैचित्र्यमेवात्रोत्कण्ठावर्धकम्।

अस्याः कथाया अन्यदेकं वैशिष्ट्यं यत अत्र कस्यापि पात्रस्य नामकरणं न कृतं लेखिकया। निखिलपञ्चाम्बुदेशे श्रीमत्तमस्य श्रेष्ठिनां गेहिनीति नायिकाविषयकोल्लेखः। श्रीलोऽयं पत्नीप्रणयी इति तस्याः पतिविषयकोल्लेखः। न कथाकथकस्य न चापि मार्गदर्शकस्य नाम्नोल्लेखः कुत्रापि कृतः। तथापि घटनाविन्यासेन प्रसङ्गवर्णनेन च कथाप्रभावः साधितः।

कथारम्भेऽऽगतं वर्षावर्णनम्–अथ सहसा समुत्थितो झञ्झावातः। तडितः कडकशब्दैरतिभीषणैर्बधिरीकृतं दिङ्मण्डलम् 'ज्वालामुखसहोदरमीदृग् विद्युद्विद्योतनं न मयाऽवलोकितपूर्वमासीत्।' वर्णनेनानेन वातावरणनिर्मितिर्जाता। नायिकायाः दुःखमत्यन्त प्रभाव्यभवत्।



# ४. मिथ्याग्रहणम्

**कथासारांशः -**

मुम्बापुर्यां माझगांवनामकप्रदेशेऽअीना सरला च सखीद्वयं न्यवसत्। संशयेनैतयोर्सख्यं कथं विघटितमिति दर्शितमत्र। अमीना सरला चाबाल्यात्प्रतिनिवशिन्यावास्ताम्। गृहगतभिन्नवातावरणेऽपि तयोर्सख्यं दृढमासीत्। अमिनायाः विवाह केनचिद्धनाढ्येन सह निश्चितः। विवाहपूर्वदिवसस्य विधिवर्णनेनारभते कथा। अमिना वरमदृष्ट्वैव विवाहार्थं कथं सिद्धा जातेति सरलायाः प्रश्नस्योत्तरेऽवददमिना-तद्दर्शनेन किम्? भारतवर्षे भूयिष्ठानां कन्यानां वरस्य दर्शनात्प्रागेव विवाहो भवतीति। पितृमतावलम्बिन्या तयैषः विवाहः स्वीकृतः। कथाविकासार्थमावश्यकमिदम्।

विवाहादनन्तरमनवरतं पत्युस्समृद्धिं वर्णयन्त्यमिना स्ववैवाहिकजीवनविषये न किमपि लिखतीति सरलया लक्षितम्। कतिचनवर्षेभ्योऽनन्तरं सरलायाः विवाहः केनचिन्मध्यवर्गीयतरुणेन सहाभवत्। साऽपि पत्यासह मुम्बापुर्याममिनायाः प्रासादस्याधस्तात् निवासस्थानमलभत। अमिनाया अन्तःपुरस्य वातायनात्सरलायाः प्रकोष्ठं स्फुटं दृष्टिपथमायाति स्म।

कतिचनदिनानि प्रेमालापे गतानि। एकदामङ्गलस्वप्नदर्शनेन जागरितयामिनया सरलायाः गृहान्निर्गच्छन् हमिदः दृष्टः। तद्दृष्ट्वा सा संशयग्रस्ताभवत्। संशयेनैतेन सरलया सह तस्याः सम्बन्धः विच्छिन्नः। वर्षाभ्यन्तरेऽमिनायाः पतिः केनचिद्दुर्धररोगेणाक्रान्तः सन् आसन्नमरणः जातः। व्याधिग्रस्तः स केषुचिद्दिनेष्वेव परलोकं प्राप्तः। मृत्युसमये सः सततं सरलायाः गृहं प्रत्यङ्गुलीनिर्देशं कृत्वा वक्तुकाम आसीत्। तद्दृष्ट्वा सरलाविषयकः रोषः वर्धितः। पत्युर्मृत्योरनन्तरं सरला तत्रागता। पत्युः शवसमीपमुपविष्टां काञ्चिद्युवतिं दृष्ट्वाऽमिनायाः सरलाविषयं कलुषितं मनः निर्मलं सञ्जातम्। पुनरेकवारं तयोर्सख्यं दृढं जातम्।

**समीक्षणम् –**

**अमिना –**

अमिना मुम्बापुर्यां माझगावनाम्नि स्थाने वसन्ती काचन विंशतिवर्षीया तरुणी। आबाल्यात् प्रतिनिवेशिन्या सरलया सह तस्या: दृढं सख्यमासीत्। सर्वत: भिन्नेषु संस्कारेष्वपि न कदापि तयोमैत्रिबन्धे व्यवधानमागतम्। अमिना न सौन्दर्यवती परं मधुराकृतिरासीत्। विंशतिवर्षीया कृशाङ्गी ह्स्वाकृति: परिमितवागपि मधुरस्वरा गौरवर्णापि नातिरूपवैशिष्ट्यसम्पन्नेति तस्या: वर्णनं कृतं लेखिकया।

पितुराज्ञा शिरसा वन्द्येति मन्यमानामिना वरमदृष्ट्वैव विवाहार्थं सिद्धा जाता। पाश्चात्यदेशीयानामेवानुकूला प्रीतिविवाहादिकल्पनेति तस्या: मतम्। हमिद इति तस्या: पत्युर्नाम। स: मुम्बापुर्यां निवसन्नतीव धनाढ्य: शिल्पयन्त्रस्वाम्यासीत्। विवाहानन्तरं अखिलं स्वर्गीयसौख्यं तस्याश्चरणलग्नमासीत्। सरलां प्रति प्रेषितपत्रेऽवर्णयत्सा निज्ञसौख्यम्। परं स्वपतिमुद्दिश्य न किमपि लिखति सेति लक्षितम् सरलया।

अमिनाया: भर्ता प्रात: शिल्पयन्त्रकार्यालयं प्रति गच्छति स्म। स सायङ्काले कदाचिदर्धरात्रौ प्रत्यागचछति स्म। तेन बृहदावासे एकाकिनी सा कथञ्चिद्दिनं यापयति स्म। तस्या: औदासिन्यपूर्णैकाकीजीवनस्य वर्णनं लेखिकया कतम् – अमीना ह्यादौ व्यवसायाभावाच्छून्यहृदयमात्मानमपश्यत्। सागरोर्मिमालातुषारकणिकाहरणशीतस्य समीरस्य सुखस्पर्शमनुभवन्ती शुकसारिकादि पक्षिणां कलकलं शृण्वन्ती अट्टालिकाया अट्टालिकामङ्गणादङ्गणं पौन:पुन्येन पर्यटन्ती कालमयापयदमीना। केवलं गृहे एव तस्या: वास: गृहाद्बहिर्नान्येन केनापि सह तस्या: सम्बन्ध:। अवगुण्ठनपद्धत्या निभृतावास एव तस्या: जीवनम्।

अमीनाया: सखी सरला यदा तस्या: गृहस्य पार्श्वे निवासार्थमागता तदा किञ्चित्सुखमनुभूतं तया। परं सरलाया: वैवाहिकसौख्यं दृष्ट्वा तस्या औदासिन्यमधिकाधिकमवर्धत। मितवागिति विशेषणं पूर्वमेव तस्या: कृते

प्रयुक्तं लेखिकया। तदनुसृत्य गृहागमने विलम्बमानं पतिं विलम्बकारणं प्रष्टुं तस्याः धैर्यं नासीत्। द्यूतक्रीडाप्रियः सः कदाचित्प्रातःकाले गृहमागच्छति स्म।

सरलायाः गृहान्निर्गतं स्वपतिं दृष्ट्वाऽमीना दुःखिता जाता परमेतस्य व्यभिचारस्य कारणं न तया कदापि पृष्टम्। वारंवारं पत्युर्निभृतगमनं दृष्ट्वा सरलायाः कपटाचारे तस्याः विश्वासः दृढ्यभवत्। 'प्रतिनक्तं व्यतिकरमिमं प्रत्यक्षीकृत्य लोहितवदना कोपस्फुरदधरा जाज्वल्यमानलोचना शयने कृतपदा पार्श्वद्वये मुहुर्मुहुर्लठन्ती नैराश्यादवातिष्ठदिति तस्याः संशयग्रस्तावस्था सम्यगालिखिता। अमीनायाः स्नेहविगलितरुक्षव्यवहारं दृष्ट्वा सरलाऽपि दूरं गता। संशयाकुलितया अमीनया सरला किमर्थं न पृष्टा। तस्य कारणमुक्तं लेखिकया इत्थमुक्तं तर्कवितर्ककष्टकनिकरव्यथिता सा सरलां प्रस्तुतविषयमुद्दिश्य विशकलय्यं प्रष्टुकामापि स्वप्रतिष्ठाया अलीकदर्पाज्जोषं स्थितवति।'

मृत्युसमयेऽमीनायाः पतिः सरलायाः गृहस्यदिशमङ्गुल्या निर्दिश्य वक्तुकाम आसीत्। परं सरलायाः विषये संशयाकुलितहृदययाऽमीनया तस्य सूचनं दुर्लक्षितम्। तस्य मृत्योरनन्तरंमागतां सरलां कटुवाक्यैस्ताडिताऽमीनया। यदा तया तस्य शयनस्य समीपमन्यैव काचिद् मुक्तकण्ठं विलपन्ती युवति दृष्टा तदा तस्या सराविषयकसंशयोऽपगतः।

**समीक्षणम् –**

अमीनायाः विवाहवर्णनेन समारब्धा कथा। संवादेनैव अमिनायाः गुणविशेषाः स्पष्टीकृताः लेखिकया। एते गुणविशेषा एव कथाविकासार्थमुत्कण्ठावर्धनार्थं श्चोपयुक्ताः। अमीनासरलयोर्सख्यं, अमीनायाः धनाढ्येन सह विवाहः अमीनायाः समृद्धमपि एकाकी जीवनं, सरलायाः अमीनाया गृहसमीपे वासः, अमीनायाः पत्युः वारंवारं सरलाया गृहगमनामित्यादिषु घटनासु उत्तरोत्तरं वर्धते वाचकस्योत्कण्ठा। मृत्युसमये हमीदस्य सरलायाः गृहं प्रत्यङ्गुली निर्देशेनोत्कण्ठायाः परमोत्कर्षः साधितः। कथान्तेऽद्भुतस्य योजनमिति नियमेन हमिदस्य शवस्य समीपं

उपविष्टायाः युवत्याः योजना लेखिकया कृता। अत्र सरलया सह तस्याः कः सम्बन्ध इति न स्पष्टीकृतम्। लघुकथादृष्ट्यैषा उत्तमा कथा।

अमीनायाः चरित्रचित्रणमुत्तमरीत्या कृतम् बृहत्प्रासादेष्वटन्ती 'मातृविरहितां नष्टाध्वगां नवशुकीं महारण्ये द्रुमाद्रुममुड्डयमानामिवात्मानमकलयदमीना' अत्र प्रयुक्तेनोपमया अमीनायाः एकाकीत्वं नष्टदिग्जीवनञ्च व्यञ्जितम्। विषण्णमनामीना परिमृदितमृणालिनीव म्लानाङ्गी अत्रोपयुक्तोपमामीनायाः मनःस्थितिदर्शिका। अमङ्गलस्वप्नदर्शनेन सहसा प्रबुद्धाया अमीनायाः कृते चण्डवात्या सहसा प्रहतेवेत्युत्प्रेक्षा सुयोग्या एव।

अमीनायाः विवाहवर्णनं गृहवर्णनं, निसर्गवर्णने समुद्रवर्णनमीनायाः संशयाकुलनैराश्यग्रस्तमनोव्यथावर्णनं साहित्यिकगद्यस्योदाहरणानि। करुणरसपूर्णाऽपीयं कथा अमीनायाः विगलितसंशयागतेन वैमल्येन सख्योः पुनर्मीलनेन सुखान्तिकैव जाता।



# ५. वृत्तशंसिच्छत्रम्

**कथासारांश: -**

राजदुर्गसमीपस्थ-रय्यानामग्रामे पुरोहितस्येन्दिरा नाम नवयौवना विधवा पुत्री अष्टाविंशतिवर्षीयेण जामात्रा सह चतुरङ्गं क्रीडन्त्यासीत्। तस्या: द्वादशवर्षीया पुत्र्यासीत्। प्रयाणानुकूलमुहुर्ते सा पत्या सह प्रेषणीयेति तस्या: निश्चय:। इन्दिराया: सौन्दर्येण मोहित: जामाता तामेव सहचरीमन्यत। तस्य मुखात्साभिलाषं शंसनं श्रुत्वेन्दिरातीव विस्मिताभवत्। अलमीदृग्वचसेति तया सरोषं कठोरशब्दै स: निरुद्ध:। 'विधवाजीवनापेक्षयापि तिरस्कृतपत्न्या जीवितं ननु दु:खतरमिति मत्वा भयकम्पितेन्दिरा रात्रीमगमयत्।'

निशायामिन्दिराया: प्रकोष्ठाद्रुदनं श्रुत्वा क्षणिकविषयोपभोगेच्छयाहमुपहास्यतां गच्छामीति विचारेण लज्जावनतमुखोऽनुपम: रात्रावेव गृहं त्यक्त्वा गत:। परेद्यु: जामातु: प्रकोष्ठं रिक्तं दृष्ट्वा तस्यान्वेषणमारब्धम्। परं न प्राप्त: स कुत्रचित्। मासार्धेन राजदुर्गस्य समीपस्थतडागस्य तटे तन्नामङ्कितं छत्रं शिरस्त्राणञ्च लब्धम् लज्जान्वितपरितापेन तेनात्रैवात्मघात: कृतस्स्यादिति मत्वा मीराऽपि बालविधवाया: जीवनमङ्गीकृतवती।

अष्टादशवर्षेभ्योऽनन्तरं कथाया: उत्तरार्ध: प्रारभ्यते। पुण्यपत्तने खडकीनामप्रदेशे जले निमज्जन्तीं काञ्चीद्युवतिं दृष्ट्वा तटस्थ: कोऽपि तपस्वी तामरक्षत्। सा विधवाश्रमे निवसन्ती रामी नाम काचिद्विधवासीत्। काश्मीरदेशजं स्वप्रावरणं स तस्यै दत्तवान्। तत्प्रत्यर्पणायागता रामी प्रेमबन्धे बद्धा। तस्य तालपत्रपठनं शास्त्रज्ञानं विद्वत्ताञ्च दृष्ट्वा राम्यधिकाधिकमाकृष्टा। एषा रामीन्दिराया: पुत्री त्यागराजश्चानुपम इति रहस्योद्घाटनं लेखिकया मध्यैव कृतम्। परं तौ द्वावप्यनभिज्ञौ रहस्यादेतस्मात्। अत: विवाहार्थं सज्जावपि विधवाविवाहार्थंमनुमतिर्न लप्स्येतेतिचिन्तयाक्रान्तौ ग्रामं गत्वानुमतिं प्राप्यागच्छामीति रामी

उक्तवती। विवाहात्पूर्वं मयापि ज्ञातव्यं यन्मम पत्नी जीवितास्ति वा नवेति द्रष्टुं त्यागराजोऽपि रय्याग्राममागतः। तत्र मन्दिरस्य समीपे सहसा तेनेन्दिरा दृष्टा। वार्तालापेन तया ज्ञातमेष तपस्व्यनुपम एव। सा तं भोजनायामन्त्रयत् परं कस्यचिज्जनस्य गृहे स्थापितां पेटिकामानेतुं गन्तव्यं मयेति उक्त्वागच्छत्सः। इन्दिरा किञ्चिद्विनोदार्थं पुत्रीं विस्मापयितुञ्च तामवदत् – 'अनुपमस्य मित्रमागच्छेद्गृहं, तस्मात्काचिदानन्दवार्ताश्रवणं भवेत्। परं अनुपमः नागच्छत्तस्याः गृहम्।' तत्सविधे पुनर्गमनेन प्रेयसी मे रामी परित्याज्या स्यादिति विचारेण सः प्रत्यवर्तत।

सप्ताहद्वयोत्तरमिन्दिरा पुत्र्या सह खडकीग्रामं गता यत्र त्यागराजः न्यवसत्। तस्य रिक्तं कुटिरं दृष्ट्वा मीरयाऽपि चिन्तितं यदभवत्तत्क्षेमाय एव। नो चेत्स मया प्रतारित इति स्यात्। मया एव मीरायाः सुखद्रुमः समूलमुन्मूलित इति विचारेणेन्दिराऽपि पश्चात्तापदग्धाऽभवत्। कुटीरान्निर्गमनसमये मीरा द्वारं पिधातुं प्रवृत्तासीत्तदा छत्रमेकं भूमौ पतितम्। तन्नामङ्कितमासीत्तच्छत्रम्। तद्गृहीत्वा तस्य स्मारकमिति रक्षामीत्युक्तं तया। अकस्मादेका पुरुषाकृतिर्दृष्टा ताभ्याम्। स अनुपम एवेति ज्ञात्वा ते हर्षचकिते जाते। सोऽपि प्रेयसीं दृष्ट्वा आनन्दातिशयेन भूलग्न इव स्थितः। तयोर्हस्तौ संयोज्येन्दिराऽवदत् – अमूल्यं भवदीयं छत्रमिदं येनाष्टदश वर्षाणि विश्लिष्टया भार्यया पुनः संयोजिता भवन्तः सर्वं च सुखावहं पर्यवसितमिति।

**समीक्षणम् –**

श्वश्रूजामात्रोः संवोदनारभ्यते कथा। बालां पत्नीमनादृत्य विधवां प्राप्तयौवनां श्वश्रूं प्रत्याकृष्टः जामातेति कथासूत्रं तत्कालीनां बालविवाहपद्धतिंमाविष्करोति। क्षणिकव्यामोहेन कृताकार्येण लज्जावनतमुखजामाता गृहं त्यक्त्वाऽगच्छत्।

तडागसमीपोपलब्धतन्नामाङ्कितछत्रेण शिरस्त्राणेन च तस्य मृत्युस्सूचितः।

अष्टादशवर्षेभ्योऽनन्तरं स एव त्यागराजतपस्वी विधवां रामीं

निमज्जनाद्रक्षति। तस्याः सौन्दर्येण मोहितः सः तया सह विवाहार्थं सज्ज अभवदिति घटनावैचित्र्यमुत्कण्ठावर्धकम्। त्यागराज एवानुपम् रामीत्येषा रय्याग्रामे वसन्ती मीरेति रहस्योद्घाटनमत्रैव कृतं लेखिकया। तेनात्रैव घटनात्मकसंघर्षः समाप्तः। केवलं तयोर्मेलनं कथं भवेदित्येवोत्कण्ठा। कथान्तेऽनुपमस्य नामाङ्कितछत्रेण तयोः पुनर्मीलनमिति वृत्तशंसिछत्रमित्येतस्य शीर्षकस्य साफल्यम्। इन्दिरायाः माध्यमेन समाजे तत्कालीनां विधवानां स्थितिः प्रदर्शिता। विधवानां पुनर्विवाहः नानुमतस्तदा। बालविवाहस्य प्रथाऽप्यासीत्तदेति दृश्यते।

भाषा प्रगल्भा प्रौढा च। भावानां परिपोषार्थमलङ्काराणां प्रयोगाः कृताः यथा – कुटिरस्य स्वद्वारकपाटाभ्यन्तरे सूसूकुर्वंस्तदीयशोकावहचिन्तस्य प्रतिध्वनिरिवाश्रावि। ग्रामान्तरं गतवत्याः प्रियायाः चिन्तनेनोद्विग्नमनसः त्यागराजस्य चिन्तां वर्णयन्नयमोत्प्रेक्षालङ्कारः।



# ६. हैमसमाधिः

**कथासारांशः –**

किष्टिवाराख्यग्रामे कस्मिंश्चित्कुटीरे हिमा नाम्नी युवतिः हिमप्रदेशस्य सृष्टिसौन्दर्यदर्शने व्यापृतासीत्। हिमा मात्रा सह पतिमम्बुजमन्वेष्टुमागतासीत्तत्र। श्रीनगरनिवासिना केनचिन्निमित्तज्ञेनोक्तमासीद्यद् – 'यथा यथाधि कं कष्टं पुण्यवृद्धिस्तथा तथा।' तस्य वचने विश्वस्य हिमा तदन्वेषणाय प्रस्थितासीत्। पञ्च वर्षेभ्यः प्राक् सोऽम्बुजः गृहान्निर्गतः तस्य पिताऽपि त्रिंशत्वर्षेभ्य प्राक्भार्यां मासजातापत्यं च विसृज्यामरनाथयात्रार्थं गृहान्निर्गतः न पुनरायातः। बालाम्बुजं कस्मैचित् सुहृदे समर्प्य साऽपि दिवंगता।

प्रवासश्रमेणोद्विग्ना हिमायाः माता हिमामपि इत एव प्रतिनिवर्तनस्योपदेशेन निरोद्धुं प्रायतत। परं दृढनिश्चया हिमा मातुरूपदेशमनादृत्य तां विनैकाकिन्येव गन्तुमुद्युक्तासीत्। 'पितुरन्वेषणैकधिया प्रस्थितो हिमाचलं प्रति तव जामाता न तु विहारसुखोपभोगाय न वा पर्यटनासक्त्येति हिमाब्रवीत्। परेद्यवि जननीं विना प्रातरेव प्रस्थिता हिमा निश्चितदेशम्।'

त्रिविष्टपदेशीयः कश्चिन्मार्गदर्शक आसीत्तया सह। सुलभमार्गेण गन्तव्यमिति मार्गदर्शकस्य सूचनां निराकृत्य कष्टमयमार्ग एव तया चितः। मार्गदर्शकेणापि पुरो गन्तुं यदासमर्थता प्रकटिता तदैकाकिन्येव पर्वतात्पर्वतमरण्यादरण्यं पर्यटन्ती सा यात्रिकैरपि वर्जितप्रायेण विविक्तमार्गेण कथञ्चित्प्राप्तामरनाथप्रदेशम्। अत्रामरनाथयात्रायाः तत्रागतयात्रिकाणाञ्च सुदीर्घं वर्णनं क्षमादेव्या कृतम्। वर्णनेनैतेन तयाऽमरनाथयात्रा प्रत्यक्षीकृतेति भाति।

मार्गे केनचित्तपस्विना साहाय्यमाचरितमासीत्। तस्य कुटय्चन्तरे फलाहारादिकं प्राप्य तया विश्रान्तिसुखमनुभूतमासीत्। 'वत्से याहि पुरः। शश्वत्स्थास्यति तव पुण्यम्। भूयाच्छिवं ते। आशीर्वचो वितरन्तु ते देवाः'

इति तस्य आशीर्वचनेन प्रेरिता हिमाऽमरनाथगुहायाः पुरत उपविश्य हिमलिङ्गदर्शनेनानन्दिता जाता। तत्र तमेव योगीन्द्रं दृष्ट्वा विस्मिताभवद्धीमा। हिमायाः दुःखकारणं तेन पृष्टम्। तदा हिमयाखिलवृत्तं श्रावितम्। तच्छ्रुत्वानुसर मामित्युक्त्वा स योगीन्द्रः हिमां समीपवर्तिष्वेकं कुहरं प्रति नीतवान्। तत्र हिमशिलाया निवेशितं कस्यचिपञ्चविंशतिवर्षीयस्य युवकस्य शवं दृष्ट्वा हिमा जडीभूतेव स्थिता। स तस्य पत्युरम्बुजस्य शवमिति मन्यमाना सा स्वसौभाग्यकुंकुमं प्रमृज्य मङ्गलसूत्रञ्चापनीय मुक्तकण्ठं विलापमकरोत्। योगीन्द्रेण सान्त्वनां दत्वा सा बहिरानीता।

सहसा केनचित् श्मश्रुणधारिणा त्रिंशद्वर्षीय तरुणेन हिमे हिमेति साहूता। क्षणमात्रं किमपि न ज्ञातं तया। अहमम्बुजस्तव भर्तेत्युक्त्वा साऽऽलिङ्गिता तेन। तदा तया तं पथिकं कुहरं नीत्वा हिमशिलामधिशयानः तरुणः दर्शितः। 'अहो इमे ते तातपादाः' इति व्यलपत्सः। पञ्चवर्षाणि तस्यान्वेषणे व्यतितान्यासन्। हिमायाः पुण्येन कठिनयात्रया च सफलं जातमन्वेषणम्।

**समीक्षणम् –**

**हिमा**

हिमा काश्मीरपुरनिवासिनी काचिद्रूपवती युवत्यासीत्। पञ्चवर्षेभ्यः प्राक् तस्याः पत्यम्बुजः गुहं त्यक्त्वामरनाथं प्रति प्रस्थित आसीत्। तस्यान्वेषणार्थं कृतनिश्चया हिमा मात्रा सह प्रस्थिता। विघ्नैः पुनःपुनरपि प्रतिहन्यमानाः निश्चयान्न प्रविचलन्ति धिरा इति न्यायेन दृढनिश्चयया हिमया न परित्यक्तं निश्चितकार्यम्। केनचिन्निमित्तज्ञेनोक्तमासीत् यत् –

यथा यथाधिकायासः पुण्यवृद्धिस्तथा तथा।
पुण्यं हि सात्त्विकं नूनमशक्यमपि साधयेत्।। पृ. ६४

एतस्मिन्वचने विश्वस्य तया समारब्धारसीद्यात्रा। मातृविरोधनमविगणय्य मार्गदर्शकस्यासहाय्यतां दुर्लक्ष्य मार्गगतविघ्नान्यविचार्य दृढनिष्ठया तयामरनाथयात्रा पूर्णतां नीता।

मातुरुपालम्भैर्हतोत्साहा हिमा स्वदृढप्रतिज्ञाविषये तामवदत् मातः प्रोक्तमेव मयाऽसकृद्यन्न कोऽपि जगतितले मत्प्रतिज्ञां मिथ्या कर्तुं प्रभविष्यतीति। तस्मादलं निषेधवचोभिरिति। (पृ. ६४) यात्रायाः कृतेऽपि सरलमार्गं त्यक्त्वा विघ्नाक्रान्तमार्गः तया चितः।

केनचिद्योगीन्द्रेण दत्ताश्रया आशार्वचोभिश्च वर्धितोत्साहा तुङ्गपर्वतमालारण्यान्युलङ्घ्य कथञ्चित्प्राप्ता सामरनाथगुहाप्रदेशम् तत्र स एव योगीन्द्रः तस्य पूर्ववृत्तं श्रुत्वा तामेकं कुहरंप्रति नीतवान्। तत्राम्बुजस्य हिमशिलान्यस्तशवं दृष्ट्वा हिमा स्तम्भिता विस्मिता च जाता। तस्या एषा मनःस्थितिर्वर्णिता क्षमादेव्या, 'अहह हृदयेश्वर! हृदयेश्वर!!' इति परिदेवमाना शोकपारावारकल्लोलनिक्षिप्तेव सा भूमौ न्यपत्तत्। साक्षान्निराशाया मूर्तिरिव विह्वलविवर्णानना हिमवत्पाण्डुवर्णा समभवत्सेति। कुहराद्बहिरागत्य हिमे हिमेति दयितस्य ध्वनिं श्रुत्वा किंकर्तव्यमूढा जाता सा। कुहरे दृष्टः पत्युरम्बुजस्य पितेतिज्ञात्वा सा हर्षनिर्भरा जाता। अस्यां कथायां दृढनिश्चयेन किमपि साधयितुं शक्यते इति संदेशः हिमायाः चरित्रचित्रणेन दत्तः।

अत्र हिमालयस्योपत्यकानामरण्यानां वर्णनानि यथावत्कृतानि। अमरनाथयात्रा लेखिकया प्रत्यक्षीकृतेति दृश्यते। परं कुत्रचिदतिरिक्तनिसर्गवर्णनेन कथासूत्रे बाधामपि पश्यामः। कथान्तेऽद्भुतेन कथाप्रभावः वर्धितः। उत्कण्ठावर्धनार्थं योग्यः घटनाविन्यासः। हिमामातृसंवादेन कथाबीजमुद्धाटितम्। विघ्नाक्रान्तप्रवासेन बर्धितोत्कण्ठा। हिमशिलान्यस्ततरुणस्य शवं दृष्ट्वा शोकान्तेय कथेति वाचकश्चिन्तयति। अन्ते सोऽम्बुजस्य पितेति यदा स्वयंमम्बुजो वदति तदा हिमयासह वाचकोऽपि विस्मयानुभूत्या आनन्दितो भवति।



# ७. मायाजालम्

**कथासारांशः –**

आसीद्गुर्जरप्रदेशेऽबुनामपर्वतीयस्थानम्। तत्र देवालस्यैकस्मिन्पार्श्वे कश्चिन्मुकबधिरः दैवज्ञः प्रतिदिनमुपविशति स्म। नानादिग्भ्यः बहवः स्त्रीपुरुषास्तस्य सविधे दैवं ज्ञातुमागच्छति स्म। एकदा स्वप्रियजनमन्वेष्टुकामाः चतस्रः स्त्रियः तत्रागताः। सुमनैस्स्वप्रियजनस्य नाम लिखन्त्वित्यादिष्टं तेन दैवज्ञेन। तथा कृत्वा ताः परस्परालापे मग्नाः।

तासु दयानाम्नी काचिज्ज्येष्ठाऽवदत् – 'एकैकयास्मासु यथाक्रममात्मीयकथा निवेद्यतामिति। तासु कनिष्ठया मुग्धया स्ववृत्तकथनमारब्धम्। सा गुर्जरप्रदेशे दुमसनामनि ग्रामे पित्रा सह न्यवसत्। विवाहैव स्त्रिजीवनस्येतिकर्तव्येति मन्यमानेन तस्य पित्रानाथाश्रमादानीतेन केनचित् षोडषवर्षीयमुवकेन सह तस्याः वाङ्निश्चयः कृतः। केषुचिदेव दिवसेषु तस्याः माता दिवं गता। तदनन्तरं तयोर्निभृतमेलनं समारब्धम्। समाप्तेऽध्ययेन पित्रा सः युवकः विदेशमुच्चशिक्षणार्थम् प्रेषितः। अध्ययनं समाप्य प्रत्यागच्छामि स्वदेशमित्युक्त्वा सः गतः। प्रारम्भकाले प्रेषितानि प्रणयपत्राणि। अनन्तरं स्थगयितस्तेन पत्रलेखनम्। इदानीं न पत्राचारः न तस्य पुनरागमनम्। गतभर्तृकेवाहमिदानी जीवनं यापयान्त्यास्मि। तस्य पुनर्दर्शनाकाङ्क्षिणी दैवज्ञस्य समीपमागता।

द्वितीया मन्दानामाङ्गना मोहमय्यां पितृभ्यां सह न्यवसत्। प्राथमिकपाठशालापर्यन्तमेव तस्या अध्ययनमभवत्। उच्चशिक्षणं नावश्यकं स्त्रीणां कृते इति मन्यमानेन पित्रा मन्दा गृहे एव निबद्धा। अग्रजैः सह कश्चित्सुन्दरतरुणः गृहमागतः। परदेशयात्राभिस्तेन पाश्चात्यसंस्कारा अधिगताऽऽसन्। वाणिज्यनियोगार्थमागतस्तरुणोऽयं मन्दायाः पित्रा स्वकार्यालये नियुक्तः। नातिसुरूपामिमां वोढुं न कश्चिद्युवा सिद्धः। एतेन तरुणेन विवाहस्येच्छा प्रकटितेति कारणेनानन्दितेन पित्रा सम्पदः महद्भागं तस्यै दत्त्वा तमेव तरुणं विधायकं व्यवास्थापयत्। विवाहादनन्तरं

कतिचिद्वर्षाणि प्रेमपूर्णव्यवहारे व्यतितानि। पाश्चात्यसंस्कारैः संस्कारितोऽयं रैसामाजिकमण्डलेऽपि तामनैषीत्। पुत्रप्राप्त्यनन्तरं तस्य व्यवहारः परिवर्तितः। शनैः शनैः कार्यालयाद्गृहं विलम्बेनागमनं प्रारब्धम्। एकदा 'इतः सत्वरमेव गन्तव्यं मया। मदीया पितृपादा मरणोन्मुखा' इत्युक्त्वा स सत्वरं गतः। पूर्वं न कदापि तेन स्वपितुरुल्लेखः कृतः। पत्रं प्रेषयामीति तस्य वचने विश्वस्य बहुनि दिनानि प्रतीक्षा कृता। न स प्रत्यागतः न तस्य पत्रम्। क्व वर्तते सः किं संवृतं तस्येति प्रष्टुमहमत्रागता।

मोहिनी नाम्नी तृतीयाङ्गना। रूपयौवनेन मोहिनी यथार्थनामा। कस्यचिच्छ्रेष्ठिनः कुले जातेयं धनसम्पन्नाप्यासीत्। बहवः युवकाः तां परिणेतुमैच्छन्। परं केनचिन्मध्यमवयस्केन धनाढ्यमौक्तिकवणिजा सह तस्याः विवाहः जातः वणिक्कार्थार्थं सः पॅरिसनगरं वारंवारं गच्छति स्म। मोहिन्यपि तेन सह गता। स्वर्गीयसुखं तयोरुपभुक्तम्। एकदा भोजनावसरे कश्चित्पत्रवाहकेन पत्रमेकं तस्याः पत्युर्हस्ते दत्तम्। तद्दृष्ट्वा सः शीघ्रं प्रत्यागच्छामीत्युक्त्वा भोजनालयान्निर्गतः। बहोः कालपर्यन्तं नागतः सः। तत्र स्थितेन केनचिद्भारतीयतरुणेन भोजनमूल्यं दत्वा सा गृहं प्रापिता। तस्य रूपं शिष्टाचारश्च दृष्ट्वा साऽऽकृष्टा। शनैःशनैः तस्य प्रेमपाशे बद्धा। मासाभ्यन्तरे एव स्वसमीपस्थं धनं संगृह्य तेन सह इजिप्तदेशं गता। तत्र षण्मासावधीः निवसितः सः। अतीव शङ्कालुः सः। उपहासार्थं क्रीडितुश्च तया सागरतटे स्थानार्थं गते तस्मिन् अहं कैरोनामिकां राजधानीं गच्छामीति पत्रं विलिख्य बहिर्गता सा। क्रोधाविष्टः सः गृहं त्यक्त्वा गतः।

सर्वासु ज्येष्ठा दयानाम्नी स्त्री स्वकथामकथयत्। गणिकाकुलोत्पन्नायाः तस्याः मात्रा बलात् कस्यचिद् धनिना सह तस्याः देहविक्रयव्यवहारः कृतस्तदा सा पलायिता। केनचिद्दयालुना पुरोहितेन स्वगृहे आश्रयः दत्तः। तस्य गृहं कोङ्कणप्रान्ते समुद्रतटेऽऽसीत्। पुत्रीरुपेण पालिता ललिता वर्धिता च सा तेन। प्राप्तयौवनायाः तस्याः विवाहार्थमपि तेन प्रयत्नः कृतः परं गणिकायाः पुत्रैषेतिकारणेन न कोऽपि युवकः विवाहार्थं सिद्धः आसीत्। यदा सा षड्विंशतिवर्षीया जाता तदा सर्वं स्वं तस्यै समपर्य सः पुरोहितः दिवं गतः।

एकदा समुद्रतटे कञ्चनयुवकं मूर्च्छितं दृष्ट्वा दयया सः गृहमानीतः शुश्रूषितश्च। गौरवर्णः सः त्रिंशद्वर्षदेशीय आसीत्। तस्य स्थितिं दृष्ट्वा सः पूर्ववृत्तान्तमिदानीं न स्मरतीति ज्ञातं तया। तस्याः सुश्रूषया सः शीघ्रमेव पूर्वप्रकृतिमापन्नः। तयोर्मध्ये प्रेमाङ्कुरोऽङ्कुरितः वर्धितश्च। एकदा सहसैव गन्तव्यं मयेदानीमिति गन्तुकामः सः प्रार्थनयार्जवेण च तया निरुद्धः। पूर्वचरिते कयाचिदङ्गनया स वञ्चितः स्यादिति चिन्तितं तया। कुसुमवासिते लतामण्डपे रात्रिरगमयत ताभ्यां। परेद्युः रिक्त शय्यागारे एकं पत्रं दृष्टं तया। तत्र लिखितमासीत् अयोग्यस्तु जनोऽयं भवत्या विस्मरणीयः। सन्ति मदपेक्षया परश्शता जनाः भवत्सौजन्यार्हाः। पत्रं पठित्वा तया गवेषणायासः कृतः। रक्षाधिकारिभ्यः तन्त्रीद्वारा सन्देशाः प्रेषिताः। गवेषकाय महत्पारितोषिकमप्युद्घोषितं, परं न स प्राप्तः।

परेद्युः प्रातः यत्र चतसृभिर्नामानि लिखितान्यासन् तत्र दैवज्ञेन सन्देशः लिखितः –

पतङ्गो रसमास्वाद्य चतुस्सुमनसां पृथक्।
मायाजाले गृहीतः सन विमुक्तोऽपि तिरोभवत्।।
चतुसृणामपि वञ्चक एक एवेत्यस्य श्लोकस्य भावार्थः।

**समीक्षणम् –**

विलक्षणघटनाविन्यासोऽत्र। एकस्य दैवज्ञस्य सूत्रे निबद्धा चतसृणां स्त्रीणां कथाः। ताः स्वप्रियजनस्य स्थानं स्थितिश्च ज्ञातुं तत्रागताः। वृत्तान्तकथनानन्तरं दैवज्ञेन लिखित श्लोकस्याधारेण तासां चतसृणामेकैव वञ्चक इति ज्ञायते। प्राथमिकशिक्षणपर्यन्तमेव स्त्रीणामध्यनं भवति स्म। विवाहार्थमेवतासां जन्म इति परम्परया रूढाः कल्पनाः दृश्यन्ते तदानींतन समाजे। आङ्ग्लसंस्कृतिप्रभावेण प्रभावितः लोकानां व्यवहारः विवाहबाह्यसम्बन्धा अपि वर्णिताः क्षमादेव्यात्र। सत्याग्रहगीतायाः प्रकाशनसन्दर्भे क्षमादेवी पॅरिसनगरं गता स्यात्। अत एव तत्रस्थं नगरसौन्दर्यं तया वर्णितम्।

एतासु चतसृषु वञ्चकस्यैका कथा गम्फिता वर्तते न सा लेखिकया

प्रकटीकृता। परं चतसृणां स्त्रीणां वृत्ताधारेण ज्ञातुं शक्यते यद् एतेन वञ्चकेन कथं वञ्चिता एताः। प्रथमकथानायकः षोऽशवर्षदेशीयः अनाथाश्रमादानीतः कुमारः। मुग्धा वदति – अतोऽनाक्रान्तशैशवाया एव मे कुमारं कश्चिदनाथाश्रमाद्वृण्वंस्तातचरणा मत्पाणिग्रहणोद्देशात् षोडशवर्षदेशीयेनानेन सार्धं युवकेन यथाविधि विवाहवाङ्निश्चयं व्यधुश्च। (पृ. ७३) अष्टादशवर्षदेशीयस्तातपादैमे पाश्चात्यदेशमुच्चशिक्षणोपलब्धये प्रेषितः। द्वितीया मन्दायाः नायकः पाश्चात्यसंस्कारान्वितः गौरवर्णीयः तरुणः। कुरूपयाः मन्दायाः पितृपादेन स्वकार्यालये नियुक्तः। अत्रापि 'कुमारमिमं स्वकार्यालये द्रुतं न्ययुञ्जत' इति वर्णितं लेखिकया। अन्यत्रच 'युवानमेकमेव विधायकं व्यवस्थापयत् इत्युक्तम्। वर्णनेनैतेन ज्ञायते यत् विशतिवर्षीयेण युवकेनै तेन सह धनलोभेन कुरूपया मन्दया सह विवाहः कृतः।'

तृतीयाऽपि धनसम्पन्नासीत्। पॅरिसनगरे पत्या परित्यक्तया तस्याः साहाय्यमाचरितुमागतस्तरुणः 'दर्शनीयशरीराकृतिर्दृढाङ्गो गौरवर्णौ युवासौ' इति वर्णितः। सर्वस्वमादाय मोहिनी तेन सह इजिप्तदेशं गता। तत्र सः मोहिनीं त्यक्त्वा पलायितः। चतुर्थी दया पुरोहितेन सह निवसन्त्यैषा षड्विंशतिवर्षीयाऽऽसीदा पुरोहितः दिवंगतः। समुद्रतटे मूर्छितः युवकः त्रिंशद्वर्षदेशीयो दृढकायो म्लानमुखो मन्दं मन्दमश्वसीदिति युवकस्यास्य वर्णनम्।

अष्टादशवर्षीयः कुमारः अध्ययनं समाप्य स्वदेशं प्रत्यागतः। मुग्धायाः पितुर्धनेन तस्याध्ययनं सञ्जातम्। मन्दायाः पित्रा तु स्वकार्यालये नियुक्तः। तत्रापि धनसम्पन्नायाः मन्दायाः धनव्यवस्थापकरूपेण स्थितः। ततः धनं संगृह्य पॅरिसदेशं स गतः। तत्र मोहिन्याऽऽनीतस्य धनस्योपभोगं कृत्वा पुनः स्वदेशं प्रत्यागतः। अन्ततो गत्वा दयायाः सुसम्पन्नगृहे वासं कृत्वा पलायितः। सर्वत्र धनाभिलाषा तस्य सुस्पष्टा धनेनसह स्त्रीसहवासस्यानन्दः इत्येकेन विचारेण वञ्चकेनैत्रेन चतस्रः वनिताः वञ्चिताः।

कथाप्रसङ्गा भिन्नभिन्नस्थानीयाः। एतेषां स्थानानां वर्णनेषु पॅरिसनगस्य वर्णनं सुन्दरम्। कोङ्कणप्रदेशस्य समुद्रवर्णनमपि रम्यम्। अनुप्रासयुक्तं

दीर्घसामासिकं वर्णनमत्र बहुत्र दृश्यते यथा सुधाधवलैर्वकुलमल्लिकादिसुमनस्सु सौरभमातन्वत्सु मन्दंमन्दं वाति गन्धवाहे यामिन्यां सौन्दर्यशालिन्यां वृद्धिं गतः प्रमोदः आवयोः परां कोटिमारुक्षत्। कुत्रचिन्नूतनोपकरणानां कृते संस्कृतपदनिर्माणं दृश्यते यथा तन्त्रीसन्देशः सामाजिकमण्डलमिति शब्दः आङ्ग्लभाषायां रूढस्य 'क्लब' इत्यस्य कृते प्रयुक्तः। घटनाविन्यासे वैचित्र्यमानेतुं दैवज्ञस्य प्रयोगः नूतन एव। देवालयस्य कृते प्रयुक्तः सुरालय इति शब्दः दोषमुत्पादयति।



# ८. स्वाप्निकव्यामोहः

**कथासारांशः –**

राजस्थानस्थित दाशेर नाम वालुकामयप्रदेशे कश्चित्पान्थः भमणार्थं गतः। वालुकाझञ्झावाते उत्थिते तस्य कृतेमार्गक्रमणमशक्यमासीत्। पिपासाकुलस्य तस्य समीपे अल्यल्पमन्नं जलञ्चासीत्। स तस्मिन्विविक्तमार्गे एकाकी क्षीणसत्त्वः चलनेऽक्षमः मृतप्राय इव प्राचलत्। तस्याभिष्टस्थानमासीत् सुवर्णपुरस्थितमेकं गिरिकन्दरम्। अतः दृढसङ्कल्पोऽयमस्मिन् झञ्झावातेऽपि न व्यरमत्। परं प्रचण्डवालुकाघातेन सः नष्टसंज्ञः सञ्जातः। तदा तेन कश्चन मेथूसेलाख्यः तापसः दृष्टः। सुवर्णपुरीं गन्तुकाममेनमवदत्सः अप्यास्ति ते विश्वासोऽद्धुतचमत्कारे सुवर्णनगर्यास्तस्याः पवित्रगिरिकन्दरे च। तापसस्तंमद्भुतगिरिकन्दरं प्रतिनीतवान्। तत्र तेन एका विशाला प्रतिमा दृष्टा कस्यचित्तेजस्वीयोगिन आसीत्सा प्रतिमा। पादयोर्पतितां काञ्चनवनितामुत्थापयितुमवनतासीत्स योगी। तपस्विना सुवर्णपुरस्य कथाकथनमारब्धम् –

आसीत्सुवर्णनगरी द्विशतसंवत्सरेभ्यः प्राक्। दुर्भिक्षेणाक्रान्तासीत्सा नगरी। प्रजायाः दुःखं दृष्ट्वा राजा करणसिंहोऽतीव दुःखितः। तदा कश्चिद्दिव्यपुरुषः तत्रागतः। तस्य धोरतपसा कतिपयमासाभ्यन्तरे एव वृष्टिरभवत्। तेन सन्तुष्टेन करणसिंहेन स योगी स्वभवनमाहूतः। परं निरासक्तेन योगिना निराकृतं तस्यामन्त्रणम्। अतः राजा स्वयं तमभिनन्दितुं तदन्तिकं गतवान्। योगिनः निवासेन तत्र धनधान्यसमृद्धिर्जाता। तस्य तेजस्वितां दृष्ट्वा प्रजाजनाः तस्मिन्बद्धरागाः सञ्जाताः। करणसिंहस्य पुत्री तस्य योगिनः ध्यानमनवरतमकरोत्। तामपृष्ट्वैव पित्रा तस्याः विवाहः केनचिद्राजकुमारेण सह निश्चितः। योगिने बद्धानुरागा भारती विवाहस्य पूर्वदिने गृहात्पलायिता। उत्तुङ्गपर्वतश्रेणींमुल्लङ्घ्य वनान्यातिक्राम्य वृष्टिमविगणय्य सा केनचित् बटुना सह कथञ्चिद् गिरिकन्दरां प्रविश्य तं ध्यानमग्नं योगिनमपश्यत्। 'भगवन्, स्वीक्रियतां क्षुद्रजनोऽयमिति तमवदत्। परं निरासक्तेन तेन तस्याः अभ्यर्थना निराकृता। तदा

अश्वपदाघातध्वनिं श्रुत्वा तया ज्ञातमिदं यत् तामन्वेष्टुं राजसैन्यं तत्रागतमिति। चरणपतितां भारतीं दृष्ट्वा क्रोधान्धः करणसिंहः उच्चैर्जगर्ज तदा स योगी सहसा तिरोभूत तत्र च काचिन्मणिशिलामयप्रतिमाविर्भूता। राजा प्रतिमायाः पुरतः स्वपुत्री दृष्टवा आनन्दितोऽभूत्। अत्र स कथकः प्रतिमायाः पुरतः साष्टाङ्गप्रणिपातार्थं न्यपतत्।'

तदा जागरितः पथिकः। तदा सः गृहस्य शयनागारे पर्यङ्केऽधिशयानमात्मानमपश्यत्। कश्चन भिषग्वरः तस्य नाडीपरीक्षां कुर्वन्नासीत्।

**समीक्षणम्** –

काल्पनिककथेयम्। कस्याचित्पथिकेन वालुकामयप्रदेशे मृतप्रायावस्थायां दृष्टः स्वप्नप्रसङ्गः। कथान्ते स्पष्टं भवति यत्स्वप्नप्रसङ्गोऽयमिति। राजस्थानप्रदेशस्य वालुकामयप्रदेशस्य झञ्झावातस्य वर्णनं, सुवर्णपुर्याः दुर्भिक्षस्य वर्णनं गिरिकन्दरे स्थिततपस्विनः वर्णनं रम्यं यथार्थश्च। पिपासाकुलितक्षीणसत्वयुक्तमूर्छितावस्थायां द्रष्टव्यस्थानस्य स्वप्ने दर्शनमिति स्वाप्निकव्यामोह एव। कथायाः घटनाविन्यासः उत्कण्ठावर्धकः। अद्भूतान्ता कथेयं क्षमादेव्याः कल्पनाविलासस्य परां काष्ठां द्योतयति।



# ९. नजमदिलेल:

**कथासारांश: –**

नजमदिलेल इति सुप्रसिद्धहीरकम्। अस्य शब्दस्यार्थ: क्षमादेव्या दत्त: – 'प्रथितकीर्तेर्नक्तनक्षत्रमित्यन्वयार्थ–नाम्नोऽद्भुतहीरकस्य सौन्दर्यातिशय' इति। हीरकस्वामिनोडकल्पितमृत्यूना रक्षाकै: कृतान्वेषणस्य कथेयं गूढकथास्वरूपं धारयति।

कथाकथक: कश्चित्पुरुष: भ्रमणार्थं श्रीनगरं गत:। स: सोदरेणसह कासिमनाम्न: मित्रस्य नौकागृहं प्रायात्। धनिकस्य तस्य रत्नसञ्चये रुचिरासीत्। आङ्ग्लदेशे कस्यचित्पाठशालायां कथकस्य परिचय: जात:। स कासीम् संमोहनविद्यां जानाति स्म। संमोहनविद्याया: प्रयोगा अपि बहुवारं तेन कृता:। इदानीं मित्रयोर्विश्वासार्थं तेन प्रत्यक्षीकृता कथा कथिता।

नजमदिलेल: नाम आसीदेकं रत्नम्। तत्कीर्तिं तेन पितृव्यस्य मुखाच्छ्रुता। कुतुहलात्तस्मिन्नेव दिने हीरकस्वामिन: शेख महोदयस्य निवासस्थानं स गतवान्। तस्मिन्नागपञ्चमीदिने शेखमहोदयस्यावासस्य पार्श्वेसमुद्रोपकण्ठस्थे जनसमूह: नागाय दुग्धसमर्पणार्थमागत:। शेख अब्दुल रहमान इति हीरकस्य स्वामिना अस्यातिथ्यं कृतम्। शेख महोदयेन स: पुष्पकुञ्जं प्रतिनीत:। तत्र एकं पित्तलपात्रं दृष्ट्वा पृष्टे सति तेनोक्तम् – 'नागपञ्चमी निमित्तमुपहारीकृतं मालाकारेणेति। अनन्तरं नजमदिलेल इति रत्नदर्शनेन सफलीभूतं तस्य अक्षियुगलम्। तस्य हीरकक्रयणेच्छामवगम्य शेखमहोदयेन हीरकस्येतिहास: कथित:। स तस्मै दातुं नैच्छदिति ज्ञात्वा सोऽपि स्वगृहं प्रस्थित:। प्रवेशद्वारपर्यन्तं शेखमहोदयस्तेन सहागत:।'

कासिमेन तस्य हीरकस्य प्रतिकृतिरपि निर्मिता। परेद्यु: शेखमहोदयस्य मृत्युवार्तां हीरकस्य च तिरोधान वृत्तपत्रे पठितम्। मृत्यो: पूर्वं कासिम एव शेखहोदयेन सहासीदिति कृत्वा रक्षाधिकारिभि: स: आहूत:। शेखमहोदयस्य सेवकेनापि सर्वं वृत्तं कथितम्। कासीमस्यगमनादनन्तरं

पुष्पकुञ्जस्य पार्श्वे प्रार्थनार्थं शेखमहोदय: उपविष्ट आसीत्। यदा सेवक तत्रागत: तदा शेखमहोदय: मृत इत्यालोकित:। हीरकमञ्जूषा च रिक्तेति तेन दृष्टम्। कासीमस्य हीरकक्रयणेच्छां ज्ञात्वा स एव अपराधीति सर्वैर्तर्कितम्। मालाकारेण पङ्कलिप्तं वस्तु तेषां पुरत: स्थापितम्। तदासीद् नजमदिलेलारत्नम्। इदानीं शेखमहोदयस्य मृत्युकारणं स्पष्टमभवत्। नागपञ्चमीनिमित्तेन स्थापितेषु दुग्धपात्रेषु दुग्धं पीत्वा केनचित्फणिना शेखमहोदय: दष्ट: कासीमश्च आरोपान्मुक्त: जात:। अर्धमूल्येन तद्रत्नं च तेन क्रीतम्।

**समीक्षणम् –**

गूढकथास्वरूपिणीयं कथा। शेखमहोदयस्य मृत्योर्गूढं प्रसार्य कथान्तपर्यन्तमपि गूढस्य निर्वहणं कृतम्। अन्ततोगत्वा सर्पदंशेन तस्य मृत्यूरिति दर्शयित्वा कथाया: गूढांश: न्यूनीकृत: इति मन्ये।



# १०. विधवोद्वाहसङ्कटम्

**कथासारांश: –**

धुल्लिकापुरे पार्वती नाम काचिद्बालविधवा देवरस्य निकेतने न्यवसत्। तस्या: विवाह: केनचिद्बालवरेण सहाभवत्। विवाहोऽयं बालविवाहनिरोधक शारदाविधानात्प्रागेवाभवत्। विवाहानन्तरमचिरात्तस्या: पितरौ दिवंगतौ। पतिश्चापि दिवंगत:। अत: अनाथा सा देवरस्य गृहे दासीभावेन कथं कथमपि दिनानि यापयति स्म। पार्वत्या: दिनचर्याया: वर्णनं कृतमत्र क्षमादेव्या। आदिनं श्रमपूर्णकार्याणि कृत्वा रात्रौ गोष्ठसमीपे गृहस्य मलीमसे कोणे निद्राति स्म। बन्धुजनानामाक्रोशं स्मृत्वा सुखेन निद्रातुमपि नाशक्नोत्सा।

एकदा कश्चित्प्रवासी कूपसन्निधौ पार्वतीमपश्यत्। तस्या: सौन्दर्येणाकृष्ट: स तया सह वक्तुकामोऽपि धैर्याभावादसमर्थ: वार्तालापं कर्तुम्। सुदैवादवसर: प्राप्तस्तेन। कूपाज्जलमाहरन्त्या: पार्वत्या: पदमस्खलत्। युवकेनानेन साहाय्यमाचरितम्। तत:प्रभृति तस्य मधुरवचनैरानन्दिता पार्वती संलापसुखमन्वभवत्। प्रतिदिनं कूपादनतिदूरे विजने स्थले तौ मीलनसुखमन्वभूताम्। बान्धवै: कुटं रचितं वेति तस्या: मनसि शङ्का जाता। तेन 'तरुणेनापि स्वपत्न्या: आकस्मिकमृत्योर्वृत्तं श्रावितम्।'

स: तरुण: पार्वतीं ग्रामान्तरं नेतुं प्रवृत्त:। तत्र धर्मशास्त्रानुसारं विधिवद्विवाहोऽपि करिष्याव इत्युक्त्वा तां पुण्यपत्तनमानीतवान् स:। तां कुत्रचित् स्थापयित्वा विवाहार्थं पुरोहितमन्वेष्टुं स आदिनमटित्वा प्रत्यागत:। न कोऽपि पुरोहित: एतयोर्विवाहार्थं सिद्ध:। विधवाविवाहेन धर्मलोपो भविष्यतीति तेषां मतम्। एक: कश्चित् सिद्ध: जात: विवाहार्थं परं तदर्थं स्वहिंदुत्वं गोपयित्वा विवाह: लेखपत्रेण साध्य इत्युक्तवान्। स तरुण: तदर्थमपि सिद्ध:। परं विवाहमेतं वार्धुषलेखपत्रमिव मन्यमाना पार्वती विवाहार्थं सज्जा नासीत्। जातिबाह्यत्वभयात् न सा एतादृशविवाहर्थं सिद्धाऽभवत्। स तरुण: तां स्वग्रामं नीत्वा धर्मपत्नीमिव परिपालयितुमपि सिद्ध आसीत्। परं पार्वती तमधोगतिं नेतु नैच्छत्। अन्ततो गत्वा तां पुन: धुल्लिकापुरं प्रापय्य स निर्गत:। साऽपि पुनरेकवारं देवरगृहं गता। तां दृष्ट्वा गृहाद्वहिरागन्तुमुद्यत: देवरस्य पुत्र: मात्रा

बलान्निरुद्धः। 'आर्यकुलकलङ्किनि कुतः पुनरागतासि दूषयितुमस्मद्गृहमिति। मा गच्छ बालैतस्याः सविधे। अस्पृश्यास्त्येषेति वाक्यं श्रुत्वा सा दीना निर्गता तस्मात्स्थानात्। जन्मान्तरदुरवस्थां चिन्तयत्या तयाऽऽत्मघातस्य विचारः कृतः। पुण्यपुरं गत्वा निवसामि कुत्रचिदिति विचारेण सा धूमयानस्थानकं प्रति प्राचलत्। पृष्ठतः आगतं स्ववल्लभं दृष्ट्वा स्ववृत्तमकथयत्तस्मै। परमस्यामवस्थायामपि न सा तेन सह विवाहार्थं सिद्धाऽऽसीत्। पुण्यपत्तने कुत्रचिद्नाथाश्रमेऽवस्थाप्य' भवत्याऽविस्मरणीयोऽयं जनः साहाय्येन प्रयोजनं स्यात्तदा पत्रद्वारा ज्ञापयितव्येत्युक्त्वा निर्गतः सः। कदाचित् पार्वत्याः आलेखपत्रविवाहविषये मतपरिवर्तनं भवेदथवा वैदिकविवाहार्थं पुरोहिता अनुमतिं दद्यादित्याशया निर्गतः सः।

तत्कालीनसमाजे पार्वतीसदृशाः बह्व्यः महिला आसन्। कथमासीत्तासां स्थितिमित्यनया कथया ज्ञायते। आबाल्यात् बन्धुजन सेवामेव कुर्वती पार्वती कष्टमयं जीवनमयापयात् न तया कदापि स्नेहपूर्णवचांसि श्रुतान्यासन्। आदिनं कष्टं कृत्वा रात्रौ निद्रासमये बन्धुशापान् स्मृत्वा निद्रां विनैव रात्रिमगमयत्सा। तेनैव तस्याः स्वभावोऽपि सङ्कुचितः जातः। तरुणस्य स्नेहपूर्णानि वचनानि श्रुत्वा सा तस्मिन्भक्तिपरा जाता। तेन सह ग्रामान्तरं गन्तुमपि सिद्धा जाता। परं विधिवद्विवाहोऽशक्य इति ज्ञात्वा जातिबाह्यत्वभयात् न सा सिद्धा जाता। हिंदुत्वं निगूह्य लेखपत्रेण विवाहः नानुमतः। अत्र लेखिकया पार्वत्याः स्वभावमुद्दिश्य उक्तम् – धुल्लिपल्लिकेतरजगदनभिज्ञत्वादाकुञ्चितमतिः पार्वती। विवाहं विना वल्लभेन सह निवासेन सोऽधोगतिं प्राप्स्यतीति कारणेन एतादृश निवासोऽपि निराकृतः तया। देवरगृहान्निष्कासिता पार्वती जन्मान्तरदुरवस्थां चिन्तयित्वाऽऽत्मघातविचारमपि त्यक्तवती। पार्वत्याः भीरूता सर्वेष्वेव प्रसङ्गेषु दृश्यते। पुण्यपत्तने कुत्रचिदनाथालयं गत्वा समाजसेवायां जीवनं यापयिष्यामीति निश्चितं तया।

**समीक्षणम् –**

इयमेव कथा क्षमादेव्या कथापञ्चकेऽनुष्टुभछन्दसा रचिता। तत्र पार्वत्याः देवरगृहान्निर्गमने समापिता कथा करुणान्ताऽभवत्। अत्र कथान्ते

पार्वती कस्मिंश्चिदनाथालये निवस्य समाजसेवायां जीवनं यापयितुमिच्छति। तस्या: वल्लभोनापि कदाचिदालेखपत्रविवाहविधिविषयकं मतं परिवर्तेत कदाचित्समाज: विधवाविवाहमनुमन्येतेति आशावाद: प्रकटित:। कथाशीर्षकेऽपि भेद: दृश्यते। कथापञ्चके बालिकोद्वाहसङ्कटमिति शीर्षकं दत्तम्। एतस्यापेक्षया विधवोद्वाहसङ्कटमिति शीर्षकं योग्यमितिमन्ये। यतो हि बालिकाया: विवाहे न सङ्कटम् । सा बालिका विधवेति कृत्वा विवाहे सङ्कटम्। विधवाविवाहेन धर्मलोपो भवतीति पुरोहिता अमन्यन्त। तत्कालीनां सामाजिकीं स्थितिमनुसृत्य एतादृशविवाहेन जातिबहिष्कारस्यापि भयमासीत् समाजे इति दृश्यते। पार्वती वदति – 'वल्लभ, जानासि यत्प्रायश्चितेन। पूतो द्विज: स्वजात्या योज्यते। नोचेद्यावज्जीवं बहिष्कृतो भवतीति व्यवहारविचक्षणै: पूर्वजैराबाल्यादनुशिष्टा: स्म:। अतो बहिष्काराद्बिभेमि। त्वत्सहचरी भवितुं वह्निज्वालामपि प्रविशेयं परं ज्ञातिबहिष्कारात्कथमात्मानं रक्षेयमिति। कथारम्भे पार्वत्या बालविवाहस्य स्पष्टीकरणार्थं पदमेकं प्रयुक्तम्' बाल्योद्वाहनिरोधकशारदाविधानात् प्राग्बालामिमां केनचिद्बालवरेण परिणाय्येति। शारदा नाम सुप्रसिद्धं मराठीभाषया रचितं नाटकमस्ति। बालविवाहस्य दुष्परिणामोऽत्र चित्रित:। अत: बालविवाहनिरोधकविधानस्य नामकरणं शारदाविधानमिति कृतम्।

गद्यसाहित्यस्योत्तममुदाहरणमस्त्येषा कथा। पार्वत्या: चिन्ताया: वर्णनमेतेन दीर्घसमासेनोत्प्रेक्षालङ्कारेण च क्षमादेव्या कृतम् – 'चिन्तासन्तानझञ्झावातेनोत्क्षिप्तेव' 'सूर्यांशुर्गिरिकन्दरमिव कश्चिद्युवा पार्वत्या हृदयमगाहत' 'इत्येतेनालङ्कारेण पार्वत्या: हृदयस्य तमोमयत्त्वमेकाकीत्वञ्च व्यञ्जितम्। पार्वत्या: दिनचर्यावर्णनेन विधवानां कष्टमयजीवनमालिखितं क्षमादेव्या। सौन्दर्यवर्णनेऽपि तत्कालीनां रूढिरेव वर्णिता यथा–अथ प्रौढवय: प्राप्तायां तस्यां यौवनं विपदावहं युवत्या: कुन्तलपाशश्च नाशकारीति मन्वानैस्तद्भर्तृबन्धुजनैर्मुण्डितशीर्षाऽपि नैसर्गिकलावण्यान्न व्ययुज्यत सा।' (पृ. १०२)



# ११. क्षणिकविभ्रमः

**कथासारांशः –**

पुण्यपत्तनस्य समीपस्थग्रामे हरिर्नाम पञ्चविंशतिवर्षीयः मुख्याध्यापकः त्रयोदशवर्षीयां सुनीतिं परिणीतवान्। धनाभावात्तस्य पाठशाला पिहिता। परोपकारी हरिः स्वधनं व्ययीकृत्य शालामिमां चालितवान्। परं दारिद्र्येण पीडितः सः स्वकुटुम्बपालनेऽप्यसमर्थ आसीत्। श्वशुरस्तस्य व्यवसायार्थं सभार्यं तं कोंकणप्रदेशमाहूतवान्। स्वाभिमानिना हरिणा निराकृतं तन्निमन्त्रणम्। सुनीत्याः आभरणानि कुसीदिकेषु निक्षिप्य कथञ्चित्कुटुम्बमपालयत् हरिः।

एकदा व्यवसायमन्वेष्टुं नियोगाधिकारिभिराहूतः सः धूमयानेन ग्रामान्तरं प्रस्थितः। न स प्रत्यागतः परं धूमयानधिकारिभ्यः त्रिंशद्रूप्यकैः सह पत्रमेकं प्राप्तं सुनीत्या। धूमयाने मृतस्य भर्तुर्घातकस्य कोशे धनमिदं प्राप्तमिति तैरुक्तम्। दुःखाकुलया तया न ज्ञातमिदं यत् मम निर्धनभर्तुः सकाशं कुत आयातमेतावद्धनमिति। स घातकः विंशतिवर्षाणां कृते येरवडाकारागृहे निक्षिप्त इति वृत्तपत्रद्वारा ज्ञातं तया। कतिपयदिनानन्तरं सा पुत्रमेकं प्रासूत्। सीवनपाकादिव्यवसायैः पुत्रस्य संवर्धनं तया कृतम्।

यदा स अष्टादशवर्षीयः जातः तदा कस्यचिद् वणिकस्य विपण्यां स नियोजितः। तेनैकदा दशरूप्यकाणि चोरितानि। तदर्थं स एक वर्षपर्यन्तं तस्मिन्नेव येरवडाकारागृहे निक्षिप्तः। तत्र एकेन सदाचारिणा बन्दिना सह तस्य परिचयोऽभवत्। कारागृहे मेलितुमागतायै मात्रे कुमारेण तद्विषये प्रशंसापूर्वकं कथितम्। पुत्रस्यापराधेन पूर्वमेव दुःखितया तया पुत्रवचनं दुर्लक्षीकृतम्।

एकवर्षादनन्तरं कुमारस्य कारालयाद्विमोचनं जातम्। कुमारेण सह स सदाचारी बन्दयपि गृहमागतः। माता तस्य गृहप्रवेशं नानुमन्येत इति मत्वा तं गृहाद्बहिरेवावस्थाप्य कुमारः गृहं प्रविष्टः। तस्यागमनेनानन्दिता माता। कुमारेण पुनरेकवारं तद्विषये मातुः मतपरिवर्तनस्य प्रयासः कृतः।

रामदास इति हरेः मित्रम्। तेनापि बन्दिनः पुत्रप्रेमविषये प्रत्यक्षीकृतानुभवः कथितः। परं नाङ्गीकृतं तया। विमनस्कावस्थायामेव सा मन्दिरं गता। रामदसेन सः बन्दी गृहमानीतः। तदा तेन कुमाराय स्ववृत्तातः कथितः।'

यदा सः धूमयानेन ग्रामान्तरं गन्तुं प्रस्थितः तदा तस्य प्रकोष्ठे कोऽपि गाढनिद्रितः सहाध्वग आसीत्। महन्नादेनापि तस्य निद्राभङ्गो न जात इति दृष्ट्वा स तस्य रुद्ध श्वासोच्छासेनावगतं तेन स मृत इति। तस्य कोषे त्रिंशद्रूप्यकाण्यासन्। गाढं सुप्तमध्वगं दृष्ट्वा तस्य निश्चेष्टतां विलोक्य च मृतो वाऽयमिति कल्पनया भीतः सम्भ्रान्तश्च हरिः तस्य श्वासोच्छवासं सूक्ष्मदृष्ट्याऽपश्यत्। तदा तेन ज्ञातं मृतोऽयमध्वग इति। सहसा तस्य कोषादेकं चर्मनिर्मितकोशमधः पतितम्। कोषेऽस्मिन्नेकं पत्रं प्राप्तं तेन। पत्रस्योपरि लिखितमासीत्तस्य नामधेयं वासस्थानञ्च। पत्रेण सह त्रिंशतरूप्यकाण्यप्यासन्। धनमेतद् गृह्णामि चेत् मम भार्या पुत्रश्च सुखं जीवेदिति विचारः तस्य मनस्यागतः। अन्यस्य धनग्रहणमयोग्यमिति चिन्तयित्वा त्यक्तस्तेनाऽयं विचारः। अहं न गृह्णामि चेदन्यः कोऽपि हरेद्धनम्। तदा एका नूतना कल्पना तस्य मनसि प्रस्फुरिता। तेन परस्परवस्त्रपरिवर्तनं कृतम्। धनमपि तस्य कोषे स्थापितम्। अध्वगेन लिखितं पत्रं विपाट्य बहिर्क्षिप्तम्। तत्स्थाने स्वनामाङ्कितपत्रं घटियन्त्रञ्च तस्य कोषे स्थापितं हरिरेव तस्याध्वगस्य घातक इति निश्चित्य रक्षापुरुषैः स कारागृहे क्षिप्तः। अध्वगस्य नाम्ना हरिणा विंशाति वर्षाणि कारालये यापितानि। रामदासः तस्य मित्रम्। हरेर्वृत्तं ज्ञात्वापि तस्य प्रार्थनामङ्गीकृत्य तेन न कदाप्युक्तम् सुनीत्यै।

पितृमुखात्वृत्तमिदं श्रुत्वा कुमारस्तु हर्षितः परं मात्रे कथं निवेदनीयमिति तस्य चिन्ताऽऽसीत्। यतो ह्यपराधिना सह मम पुत्रोऽपि तादृश्येवाचरेदिति भिया तया बन्दिनः स्वगृहे वासः निरुद्ध आसीत्। परं निष्कृत्युत्तरं सर्वमेव साधु भवेदिति चिन्तायित्वा तस्य वासार्थमनुमतिर्दत्ता। रामदासेन सह गृहस्य मुखशालां प्रविष्टं हरिं दृष्ट्वा भयाक्रान्ता सुनीतिः भूमावपतत्। हरिणा पुत्रेण च सुश्रूषिता सा स्वस्था जाता तदा रामदासः सर्व वृत्तमश्रावयत्।

कथानायिका सुनीतिः विंशतिवर्षाणि वैधव्यस्य दुःखं सोढ्वा पुत्रस्य पालनमकोरत्। पुत्रस्य चौरकर्मणा कारावासेन च सा परमोद्विग्ना जाता। तस्याः दुःखमस्मिन् वाक्ये प्रकटितम् – 'कलङ्कोऽयं मरणादप्यतिरिच्यते खलु। वरं यदि पुत्रो मेऽमरिष्यन्न सहे हि कुलदूषणमिदम्। अहो बटोर्जन्मतः प्रागवे तदीयपितृपादा दिवं गता इति महानुग्रहः खलु विधेरिति।' तथापि पुत्रस्नेहेन साऽगच्छत्तं द्रष्टुं कारालयम्। तत्रापि केनचिद्बन्दिनः सह पुत्रस्य स्नेहबन्धं दृष्ट्वा सा चिन्ताकुलाऽभवत्।

कारावासं समाप्य गृहागतः पुत्रः बन्दिनमपि गृहे वासस्थानं दातुमिच्छतीति दृष्ट्वा साऽतीवाखिद्यत। 'किं बन्दिना सह बद्धसख्योऽस्ति मम सूनुः। अहह! केयं विधेर्घटना यत्कारावासिनि जने स्निह्यत्येषः।' इति तस्याः चिन्ताविषयः। यदा यदा पुत्रः बन्दिनमुद्दिश्य वक्तुं प्रारभत्ते तदा साऽन्यविषयसंकीर्तनेन तमपाकरोत्यस्मादशुभविषयात्। 'को विजानाति कोऽपराधोऽनेनाकारीति।' इति विचारेण कष्टार्जितं स्वधनं तस्माद्रक्षितुमैच्छत्सा। बहिर्गमनसमये पुत्रं वदति सा– 'वत्स त्वत्प्रकोष्ठे स्थापिता पेटिका मे सावधानं रक्ष्यताम्। तदभ्यन्तरे निहितं सर्वस्वमेव मद्द्रव्यम्।' तच्छ्रुत्वा पुत्रोऽपि चिन्तयति अहो कठोरता प्रकृत्याः शिरीषपुष्पकोमलहृदयायाः जनन्या मे। 'सत्पथस्यादर्शभूतो मत्सखा नीचात्मेव परकीयधनमाहरेदिति कुत्सितो विचारस्तदन्तः प्रविष्टः इति चेखिद्यते मच्चेतः।'

देवमन्दिरनिर्माणेन दीर्घकालीनव्रतस्य निर्वृत्तिर्भवेदिति पुरोहितेनाभिहितम्। अतः महता कष्टेन धनसञ्चयः कृतस्तया। धनापहरणचिन्तया बन्दिनः प्रवेशः निषिद्ध आसीत्तस्याः गृहे। पुत्रं वदति सा – पुनस्त्वां सनिश्चयं वच्मि यदस्मद्गेहे बन्दिनः प्रवेशेन न भाव्यमिति। परं कथान्ते हरिं दृष्ट्वा प्रथमं भयाग्रस्ता भूत्वा न्यपतत् भूमौ। परं पुत्रस्य भर्तुश्च शुश्रूषया लब्धसंज्ञा सा स्वास्थमवाप।

**समीक्षणम् –**

हरेरान्तर्द्वन्द्वमपि क्षमादेव्या उत्तमरीत्या चित्रितम्। मृताध्वगस्य धनापहरणं तस्य कृते कुत्सितं कार्यम् शिष्याणामभावे पिनद्धा पाठशाला

तेन स्वधनव्ययेन चालिता। आदर्शशिक्षकस्य कार्यमिदम्। हतकरूपेण विंशतिवर्षाणि कारावासे अज्ञातवासः तेन स्वीकृतः। तत्रापि सदाचारिणा तेनान्ये बन्दिनः शिक्षिताः। गीतापाठः भागवद्पठनं प्रतिदिनं स करोति स्म। क्षणिकविभ्रमेण कृतापराधस्य तस्य धैर्यं नासीत् सुशीलायाः पत्न्याः पुरतो आगन्तुम्। पुत्रस्नेहेन बद्धः सः पुनरागतः गृहं प्रति।

निवेदनशैली स्वीकृतात्र। निवेदिका स्वयं लेखिका। घटनावैचित्र्यमित्यस्याः कथायाः वैशिष्ट्यम्। हरेर्मृत्युवार्तयाऽ कथाऽरभते। तस्य गूढमृत्युना वर्धते वाचकस्योत्कष्ठा। अष्टादशवर्षीयः पुत्रोऽपि धनापहारापराधेन तस्मिन्नेव कारालये निक्षिप्तः यत्र तस्य पिता हरिर्वर्तते। पुत्रः तं गृहमानयति। कठोरहृदयया मात्रा बन्दिनः गृहवासः निषिद्धः। अत्रोत्कण्ठायाः परमोत्कर्षः। पुत्रस्य पुरतः रहस्योद्घाटनं करोति हरिः। अत्र कथा पूर्वसूत्रेण सह निबध्य वैचित्र्यमातनोति। संवादात्मकशैली इत्यप्यस्याः कथायाः महत्त्वपूर्णं वैशिष्ट्यम्। सुनीति–कुमारयोर्संवादे लघु लघु वाक्यानि सन्ति। एतैर्संवादैः कथायाः रोचकता वर्धिता। हरि–कुमारयोर्संवादे पूर्ववृत्तकथनं दीर्घस्वगतरूपं धारयति।

कुत्रचित् सुभाषितमपि योजितं प्रभाववर्धनार्थं यथा – कारालयात्प्रत्यागतः पुत्रः स्वसदाचारस्याश्वासनं ददाति तदा सुनीतिः वदति – हन्त भग्नस्फटिकं प्रतिसमाहितमपि न जातु पूर्ववद्भवेत्। (पृ. ११४) दृष्टान्तसदृशमिदं वाक्यम्।



# १२. निशीथबलि:

**कथासारांश: –**

झुलेका नाम काचिदासीत् हबीबखाननाम्न धनिकस्य पुत्री। अतीव रुचिरा मोहिका मातृहीना च सा पितृलालनसुखमपि न लेभे। द्यूतक्रीडारत: पिता वाराङ्गनानां नृत्यसङ्गीतेन कालं यापयति स्म। कस्यचिद्वृद्धपरिजनस्य गेहिन्या सा पोषिताऽऽसीत्। मातृभाषाध्ययनेन सहाङ्ग्लभाषाध्ययनमपि जातम् तस्या:। गृहाद्बहिर्गमनं निरुद्धमासीत्तस्या: पिता। परिणतवयस्कान्धा च धात्री तस्य पति: तयो: पुत्र उस्मान् चैतान्विहाय न कोऽपि तस्या दृष्टिपथमायाति स्म। उस्मान् तस्या: समवयस्क: सहपाठी चासीत्। अतस्तस्यान्त:पुरप्रवेशोऽनुमत:। झुलेका एतस्मिन् बृहदावासे बन्दिनीव बद्धा। आङ्ग्लाध्ययनेन तस्या: मनसि बाह्यजगद्द्रष्टुमिच्छा समुद्भुता। आङ्ग्लध्यापिका कार्यान्तरेण स्वदेशं प्रत्यागता। तेन निरानन्दोदासिना च सा परमसह्यां विविक्ततां कथमप्यसहत।

अथैकदोस्मान् तामब्रवीत् – 'भर्तृदारिके आज्ञप्तोऽस्मि स्वामिना कृतवाङ्निश्चयस्य वरस्य ते पुरं गत्वा सह वरयात्रया निवर्तस्वेति तस्मात्प्रातस्तरां श्व: प्रस्थास्ये' तच्छुत्वा तया चिन्तितं यद्' – 'अपरिवचिततरुणेन सह विवाहद्वरं मरणम्।' परमनन्तरं चिन्तिन्तं तया – यदेतेन स गृहात्पलायनमेव योग्यम्।' तस्या: विचारान् श्रुत्वा भीताय तस्मै लोभयितुमुक्तं तया – अथवा स्वातंत्र्य यदि मे दीयते तर्हि तवापि भार्या भवेयमिति। वस्तुतस्तु तस्य साहचर्यमपि नारोचत्तस्यै। परं स्वातन्त्र्यप्राप्त्यर्थं साधनरूपेण सा तमपश्यत्।

रात्रौ रत्नखचिताभरणानि वस्त्राणि च पेटिकायायामवस्थाप्य तेन सह झुलेका बलिवर्दयाने उपविश्य निभृतं पलायिता। महता वृष्ट्याऽशक्यमासीद् गमनमग्रे। रात्रौ कस्यचित्कृषीवलस्य गृहे निवासार्थं न्यवसताम् तावुभौ।

झुलेका तत्रावस्थाप्योस्मान् विवाहार्थ पुरोहितं द्रष्टुं गत:। गृहं

प्रत्यागतेन तेनान्दवार्ता श्राविता। अद्यैव भवत्यावयोर्विवाहः। तच्छ्रुत्वा उच्चैर्विहस्य च झुलेकाऽवदत् – 'अरे मुग्ध। अपि सत्यतस्त्वया गृहीतं यत्वां मत्पाणिं ग्राहयिष्यामीति।' झुलेकायाः वचनेन क्रुद्धः सः तां बलान्नेतुमैच्छत्। परं तया निराकृतः सः तस्याः सर्वाण्याभरणानि स्वीकृत्य निर्गतः तस्माद्गृहात्।

रात्रौ सहसा स्वप्नाज्जागरितया तया कृषीवलदम्पत्योर्संवादः श्रुतः। स्थविरः तामसिधेनुकानिशितीकरणविषयेऽपृच्छत्। अन्यथा ग्रीवाच्छेदनसमये तदाक्रोशो घोरतमो भवेत्। शाणस्य कर्कशध्वनिरपि तया श्रुतः। कालिकादेवीप्रसादनार्थं बलिप्रक्रिया विधास्यते इति ज्ञातं तया। 'तस्याः देहबलिदानेन प्रसन्ना भविष्यतीति न सन्देहः। कृषिकाऽवदत् परमतिकृषाङ्गी सा। द्वितीयस्याधिकं मांसमुपलप्स्यते' इत्येतानि वाक्यानि श्रुत्वां स्विन्नगात्रा स्तब्धाऽतिष्ठत्। यदा तया ज्ञातं तौ मेषबलिदानविषयेऽवदताम् तदा सा निश्चिंताऽभवत्। तत्रैव तस्याः वासनिश्चितिश्च जाता।

**समीक्षणम् –**

अत्र झुलेका मुस्लिम धनिकगृहस्थपरतन्त्रस्त्रिणां प्रतिनिधित्वं करोति। सौन्दर्यधनविद्यायुता झुलेका गुहे निबद्धा बन्दिनीव परतन्त्राऽऽसीत्। मातृछत्रं बाल्ये एव विधिनापहृतम्। पिताऽपि लालनपालने उदासीन एव। अन्धा धात्री स्यवीरश्च तस्याः पति तयोः पुत्रश्च एतैर्विना न कोऽपि तस्याः दृक्पथमायाति स्म। मातृभाषायाः आङ्ग्लभाषायाश्च पठनेन विंशतिवर्षीयाः तस्याः निर्णयक्षमता उत्तमा। गृहाद्बहिर्विश्वं न तया कदापि दृष्टमासीत्। अपरिचितवरेण सह विवाहार्थं न सा सिद्धा। अतः वरगृहं गच्छन्तं उस्मान्नामसेवकं मुक्तिसाधकं मत्वा तेन सह निभृतं गृहात्पलायिता सा। अलं पञ्जरनिवासेनात्रश्वासनिरोधकेन जीवनेनात्र प्रहतास्मि खलु। इत्येतैर्वाक्यैः तस्याः मनःस्थितिः तीव्रा च स्वातन्त्र्येप्सा क्षमादेव्यातीवोत्तमरीत्या चित्रिता। मदीयभूषाजातेन भूरिधनमधिगमिष्यसीति प्रथमं धनलोभं दर्शयित्वा तथा च स्वातन्त्र्यं यदि मे दीयते तर्हितवापि भार्या भवेयमिति विवाहस्यामिषं दत्वा तया

स्वमुक्तिस्साधिता उस्मानद्वारा। अत्र क्षमादेव्या झुलेकाया: कृते कालतन्त्रज्ञेति विशेषणं प्रयुक्तम्। यदा तस्या: कार्यं सफलमभवत् तदा कार्यसाफल्यादनन्तरं उच्चै: प्रहस्य विवाहच्छुकं तमब्रवीत् – अरे मुग्ध। अपि सत्यतस्त्वया गृहीतं यत्त्वां मत्पाणिं ग्राहयिष्यामिति वचनेनैतेन तस्या: प्रयोजनं स्पष्टमभवत्। 'भृत्यकल्पस्य तरुणस्यास्य साहचर्यं न भृशमभ्यरोचत' इत्येतेन वाक्येन लेखिकया पूर्वमेव स्पष्टीकृतमासीत्तस्या: उस्मानविषयकं मतम् व्यवहारश्च। तस्मै रत्नाभरणानि दत्वा स्वातन्त्र्यमधिगतं तया।

निसर्गस्य दर्शनेन साऽतीवानन्दिताभूत्। 'अथ मार्गे शुष्कतृणराशीन् जलयन्त्राणि शालिक्षेत्राणि पीतसर्षपमण्डितप्राचीराणि च प्रथममेव दर्शं दर्शं झुलेकायश्चित: प्रमोदतुन्दिलमभूत्। झञ्झावातेन सहारब्धवृष्टिकारणेन कस्यचित्कृषीवलस्य गृहे स्थिता झुलेका तत्रस्थं नैसर्गिक सौन्दर्यं दृष्ट्वा तत्रैव वास: कर्तुमैच्छत्। तत्र दधिमंथनादि कर्मणि विधातुमपि सा सज्जा आसीत्। कृषीवलदम्पत्यो: कालिदेवताया: कृते बलिविषयकं संवाद श्रुत्वा भयभीता सा गृहान्निष्क्र मणार्थं सिद्धा। यदा तया ज्ञातं संवादोऽयं मेषबलिविषयकमासीत्तदा पुनरेकवारं तत्रैव वासस्य निश्चय: तया कृत:।

सामाजिकदृष्ट्या मुस्लिमस्त्रिजनानामवस्थात्र वर्णिता। अत्रापि कथासूत्रे संवादा: प्रयुक्ता:। संवादे वाक्यरचना सरला। लघु लघु वाक्यानि प्रयुक्तानि संवादे। मस्जिदसदृशासंस्कृतशब्दा: प्रयुक्ता: सन्त्यत्र। संस्कृतस्य विभक्तिप्रत्यया: योजिता:। यथा मस्जिदस्यालिन्दतो इति। कौशल्यमिति प्रयोग: दुष्ट:। कौशलमिति भवत्यत्र तद्धितरूपम्।'



# १३. मत्सजीवी केवलम्

**कथासारांश: –**

अस्या कथायामाख्यायकस्य वृत्तं वर्णितं लेखिकया। द्वितीयमहायुद्धान्मासद्वयानन्तरंमाख्यायकेना प्रियवार्ता श्रुता। उच्चशिक्षणार्थं विदेशं गत: तस्य पुत्र: सागरे नौकाभङ्गेन कुत्रचित्व्यालुप्त इति वार्ता तस्य कर्णपथमायाता। एक सप्ताहं यावत् तद्विषये किमपि वृत्तं नायातमिति चिन्ताकवलित: स: कथं कथमपि दिनान्यगमयत्। परमात्मना रक्षितेषु तस्य पुत्रस्य नामासीदिति ज्ञात्वा तस्य पुनर्जन्मनानन्दित: स:।

पुत्रस्य सुवृत्तश्रवणेन चिन्तामुक्त: स स्थितिपरिवर्तनार्थं कोंकणप्रदेशे निवसितस्य मित्रस्य गृहं गतवान्। विंशतिवर्षेभ्य: प्राक् मित्रेण सह न्यवसत्। तदा तेन तत्रं स्वपुत्रजन्मवृतं श्रुतम्। अत: तत्स्थानं तस्य कृते पुण्यक्षेत्रमिवासीत्।

तत्रागत्य पूर्वप्रसङ्ग: तस्य स्मृतिसरणीमागत: अम्बा नामासीदेका मत्त्स्यजीविन: सुमुखी पत्नी। गणुर्नाम तस्यैक: पुत्र: ज्वराक्रान्त आसीत्। तदा वैद्येनानेन तस्य चिकित्सा कृता। चित्ताकर्षक: बुद्धिमाञ्चासीत्स:। मत्स्याहरणार्थं गतस्य पितु: प्रतीक्षायामेकैकं क्षणं गणयनतिष्ठत् स:। 'बालोऽयं गणु: पूर्वजानां पुण्योदयादुपायनीकृतो विभुना युवाभ्यामिति प्रागेवोक्तं भगवतो विष्णोरायतनस्य नेदीयस: पुरोहितेन। एतेन वाक्येन तस्यालौकिकत्वमुक्तम्।'

परेद्यु: समुद्रे उत्थितेन झञ्झावातेन बहव: मत्स्यजीविन: जले निमग्ना:। तेषु गणो: पिताप्यासीत्। तमन्वेष्टुं सागरतटं रात्रौ गत: गणु: न पुनरायात इत्यनयाचिन्तया तस्य माता चिन्ताक्रान्ताऽऽसीत्। दिनानि मासा: वर्षाणि चातितानि परं न प्रत्यागत: गणु:। तस्य प्रतीक्षायामम्बा विक्षिप्तमना जाता।

विंशतिवर्षेभ्योऽनन्तरं श्रीगणेशनाम कश्चिन्मुनीन्द्रः तत्रागतः। सहस्रशः मत्स्यजीविनः परिव्राजकाः अन्यान्यदेशेभ्यो आगताः यात्रिकाः तं तेजस्विनं मुनीन्द्रं द्रष्टुं सम्मीलिताऽऽसन् तत्र। तेष्वेका मध्यमवयस्काऽम्बाप्यासीत्। परं जनैर्बहिष्कृता सा। पुत्रमन्वेष्टुं वारंवारं सागरं प्रति धावन्तीयं ग्रामीणैर्मायाविनीति तिरस्कृता। 'प्रविशतु सा', 'इति मुनिन्द्रेणादिष्टम्।' 'कोऽस्ति भवत्याः क्लेशाः' इति पुष्टे सति सा सागरतीरे तिरोहितपुत्रस्य वृत्तमश्रावयत्तम्। तस्याः करुणार्द्रविलपनं श्रुत्वा मुनीन्द्रस्य स्मृतिपथे भूतवृत्तं सहसाऽयातम्। क्षणमात्रं तुष्णीं स्थितः सः। 'मातस्तिष्ठति तवाऽग्रे तव सुतो गणुः। तन्मुञ्च्यतां शोकानुबन्धः' इत्त्युवाच सः मुनीन्द्रः। एतेन प्रसङ्गेन क्रुद्धाः अज्ञानान्धाः जनाः तां मारयेयुरिति स उच्चैरवदत् – 'अयि भोः सज्जनाः। नेयं मायाविनी परं मे प्रसूः।' विंशतिवर्षेभ्यः पूर्वं पितुरन्वेषणे पर्यटनेन परिश्रान्तः सः मूच्छितः निश्चेष्टश्च शयितः वालुकामयप्रदेशे। तापसजनैः शुश्रूषितः सः प्रकृतिमापन्नः परं तस्य स्मृतिर्नष्टा तापसेष्वेकेन सः लालितः परितोषितश्च द्विजपुत्रोचितसंस्कारैर्संस्कारितोऽयं धर्मशास्त्रवेदान्तादिषु शास्त्रेषु पारंगतः।

तस्य गतवृत्तं श्रुत्वा 'नायं ब्राह्मणकुमारो मत्स्यजीविनः सुतस्तु केवलम्। स्वजातीयोऽप्युपासितः पूजितः आराधितो देववदस्माभिः।' इति कुपिताः ग्रामीणाः निर्गताः तत्स्थानात्। अत्रैव समाप्ता कथेयम्।

अम्बा कोंकणप्रदेशस्य मत्स्यजीविनः पत्नी। पति–निधनादनन्तरं गणुरित्येकेव तस्या आलम्बनम्। परं पितरमन्वेष्टुं गतः सोऽपि सागरेण कवलित इति तस्याः महद्दुःखम्। 'हा रत्नाकर! वञ्चितास्मि त्वया। किमर्थं निघृण इव गोपयसि पुत्रैकजीविताया मे गणुम्। अपि नास्ति पर्याप्तो रत्नराशिस्तव जलाभ्यन्तरे यदपहृतं त्वया मे पुत्ररत्नम्' इत्युपालभत सा मुहर्मुहः सरित्पतिम्। 'अन्तरान्तरा पुत्रस्य जीर्णवस्त्रखण्डं कण्ठे गृहीत्वा व्याक्रोशत्सा।' वर्णनेनानेन तस्याः दुःखं तीव्रं जातम्। करुणरसपरिपोषाय योग्यमेवे। तस्यामियं शोचदयां दशां दृष्ट्वा असंबद्धवचांसि श्रुत्वा ग्रामीणैर्बहिष्कृता सा। कथान्तेनी मुनीन्द्ररूपं सद्रत्नं प्रत्त्यर्पितं तस्यै सागरेणेति सुखान्त एव। अज्ञानान्धैः मत्स्यजीविभिः तिरस्कृतः योगीन्द्रः

गणेश इति शोकान्तिकेयम् कथा।

**समीक्षणम् –**

कथाकथनार्थमाख्यायकस्य योजना लेखिकया कृता।। आख्यायकस्य पुत्रविरहदु:खं कथारम्भे वर्णितम्। प्रथमपठनेऽसंबद्धमिदं वृत्तमिति भासते। परमस्यां पार्श्वभूमावम्बाया: पुत्रविरहदु:खस्य प्रभाव: वर्धित:। आख्यायक: अम्बाया: वृत्तेनसह साक्षात्सम्बद्ध:। अत: तन्मुखेन कथाकथनमिति लेखिकाया: कौशलम्। गणोर्गुणकथनेना–लौकिकत्वेन विष्णुभक्त्या च तस्य परिवर्तितमुनीन्द्ररूपं स्पष्टमभवत्। एते ग्रामीणा: अज्ञानान्धा:। तेषां हास्यास्पदीभूतां श्रद्धां कुमारेऽस्मिन् स्वयमेव साक्षीकरिष्यसीति। 'पुरातनमुनीन्द्रेषु बद्धादरा इमे स्वजात्यपेक्षयोच्चतरकुलोद्भवस्य कषायाम्बरधारिण: सामान्यपरिव्राजकस्यापि पादयो: स्वशिरांसि विदध्यु: परं स्वजातीयं सिद्धपुरुषमपि तृणमिवावधीरयेयु:।' आख्यायकस्य मित्रवचनं सूचकं भविष्यत्कालीनघटनानाम्।

कुत्रचित्कथाप्रवाह: रुद्ध: निसर्गवर्णनेन। यथा मुनीन्द्रागमनादनन्तरंमाख्यायकेन कृतं रात्रिवर्णनम्। तथैवा ख्यायकेन कृतमम्बाया: दीर्घं सौन्दर्यवर्णनम्।

• • •

# १४. आत्मनिर्वासनम्

**कथासारांश: –**

महाराष्ट्रस्थितलोणावळानाम्निग्रामे स्थितस्या: मीराया: कथैषा। षट्त्रिंशद्वर्षीया मीरा यमलपुत्राभ्यां सह न्यवसत्। पुत्रयोरुपनयननिर्वर्तनकाले मनोरञ्जनार्थमानीतां नर्तकीं धूमयानस्थानकं प्रापय्याचिरादागच्छामीत्युक्त्वा गृहाद्बहिर्गत: तस्या: भर्ता न पुनरागत:। दशवर्षाणि जातानि। तस्या: यमलावप्यदानीं पञ्चदशवर्षीयौ सञ्जातौ। गुणेनाम मीराया: भर्तुर्मित्रं तस्य कुटुम्बस्य हितचिन्तकश्च। एकस्मिन्दिने स तामुक्तवान् – 'मया सह भवत्यर्धरात्रे प्रस्थातुमर्हतीति प्रार्थये। निशीये धूमशकटेन प्रस्थितौ समुचिते काले प्राप्स्याव: सङ्केतस्थानम्।' सम्भ्रान्तचित्तां मीरां गुणे कस्यचन मित्रस्य सन्निधौ नेतुमैच्छत्। भर्तुर्विषये वृत्तमपि श्रोतुमुत्साह: नासीत्तस्या:। 'यदि वत्सयोर्जनकमधिकृत्य वृत्तमिदं स्यात्तदा न किमपि श्रोतुमुत्सहे। व्यतीतो बहुतिथ: काल: कुटुम्बं परित्यक्तवतस्तस्य' इति निष्ठुरमुक्तं तया।

गुणे महाभागेन तां सान्त्वयितुं तस्या: क्रोधाग्निं शमयितुञ्च प्रयत्ना: कृता:। गृहत्यागस्य केनापि गूढकारणेन भाव्यम्। कुटुम्बस्य चिन्तां वहता तेन सर्वेषां योगक्षेमव्यवस्था पूर्वमेव कल्पिताऽऽसीदित्युक्तवता तेन मित्रकार्यं कृतं परं क्रोधवशान्न सा सन्तुष्टा तस्य वचनै:। 'मङ्गलप्रसङ्गेऽस्मिन् निमन्त्रातिथीनां विनोदव्याजेन समानीता नर्तकी तेनैव सह नगरान्तरात् तया सह च पलायितवानित्यत्र नास्ति संशयलेशोऽपि' वाक्येनैतेन तस्या: दृढसंशय: प्रतीयते। अत एव पतिविषयकतिरस्कारेण क्रोधेन च तस्या: वचसि कठोरता व्यवहारेच नैष्ठुर्यमागतम्। तथापि सा गुणे–महोदयेन सह गन्तुं प्रवृत्ता।

विवाहादारभ्यानुपस्य गृहत्यागपर्यन्तं प्रसङ्गा: चित्रपटमिव तस्या: मन:पटलेऽसंसरत्। रात्रावेव प्रस्थिता सा भिषग्वरेण गुणेमहोदयेन सह। स तां मुम्बापुरोपकण्ठस्थ माटुंगाख्यं ग्रामं नीतवान्। कस्यचिद् भयानकालयस्यान्त: प्रविष्टौ तौ। तत्र विकृताङ्गा: पुरुषास्तया दृष्टा:। 'क्षणमात्रस्यापि विलम्बेन निष्फलमभविष्यदागमनमत्रभवत्या' इति

गुणेमहोदस्य वाक्यं श्रुत्वा सम्भ्रान्तमनसाऽन्वगच्छत्सा। कुटीरस्य द्वारमुद्घाट्य तत्रस्थाधिकारी मीरामवदत् – 'द्वित्रदिनान्यवरतं भवतीमाह्वयदित्यस्माभिरिहागन्तुं प्रार्थिता भवति।' तत्र मध्यभागे विकृताङ्गमधिशयानमनुपं दृष्ट्वा वज्राघातेनोन्मूलितेव सा तत्रैवातिष्ठत्। मीराभवलोक्य प्रमाणाञ्जलिं बध्वा क्षम्यतामित्युक्त्वा नयने पिहीते तेनानुपेन। समाप्तासीत्तस्य जीवनयात्रा। तस्य मन्त्राग्निसंस्कारं समाप्य पश्चात्तापाग्निना दंदहयमाना मीरा प्रत्यागता स्वगृहम्।

**समीक्षणम् –**

निवेदनशैल्या आरब्धेयं कथा संवादात्मकं रूपं धारयति। कथानायिका मीरा भिषग्वरः गुणेमहोदयश्च एतयोर्संवादे निबद्धं पूर्ववृत्तम्। घटनाविन्यासवैचित्र्यं तीक्ष्णाः मार्मिकाश्च संवादा इत्यस्याः कथायाः वैशिष्ट्यम्। संवादैः कथायाः नाट्यमयता रोचकता च वर्धिता यथा गुणेमहोदयः मीरायाः पतिविषयिकीं निष्ठूरतां दृष्ट्वा वदति गुणे – अलमतिनैष्ठुर्येण। अतिकठोरताऽनुतापमेव जनयेत्। मीरा – आर्याः, अनुतापस्य का कथाऽत्र? वर्षदशकात् प्राङ्मामबलां सबालां तैरकारणं परित्यक्तां विजानद्भिरपि किमित्थमुच्यते भवद्भिः।

गुणे – सर्वमेतत्प्रतिपद्यते मया। तथापि मन्दभागस्यानुपस्य गृहत्यागस्य केनापि गूढकारणेन भाव्यम्।

मीरा – कोऽपराधो नाम कृतो मया यद्विना हेतुं संकेतस्थानकथनपि परिहृत्य तिरोहितास्ते।

गुणे – परं स्वकुटुम्बस्य योगक्षेमाय सर्वमपि यथोचितं विरच्य निष्क्रान्तोऽनुपः। न किमप्यक्षेतते भवत्या कुमाराभ्यां वा।

मीरा – सुस्थितं कुटुम्बं विहाय गृहात्पलायनं स्वामिनः किमुचितम्। वरं दैन्यं न तु परित्यागः पत्या। (पृ. १५५–१५६)

संवादे लघुवाक्यैर्युक्ता सरला भाषा। अन्यत्र बाणभट्टादिवद्दीर्घसमासप्रचुरा शैली वर्तते यथा – प्रथमसंस्त–वादारभ्यानुपस्याकारसौजन्यलावण्यगाम्भीर्यादरसदाचाराद्यवलोकनमोहिताया रोमाञ्चिताया हृदि – प्रेमाङ्कुराद्भवविकास–परम्परा समुत्कीर्णेव तन्मनसि

सुव्यक्तमाविरभूत्। (पृ. १५९) भावोत्कटतां वर्णयितुं लघुवाक्यानां प्रयोग: क्षमादेव्या कृत: यथा पश्चात्तापदग्धाया: मीराया: भावा: क्षमादेव्या तस्या मुखेनैव प्रकटिता:। 'धिग् धिङ्माम्। कथं पातकिन्या निन्दितो मया दुष्ट व्याधिव्यथितात्मा पतिवरेण्य:। अहो! कथ मे जिह्वा तमनिन्द्यं निन्दन्ती न जडीभूता। अहह दश वर्षाणि तस्मिन्निर्दोषे दोषमारोपयन्ती कथं पक्षघातग्रस्ता नामभवम्। धिग् धिङ् मे जीवनं धिङ् मे वज्रकठोरता। परमात्मन् दन्डार्हां मां प्रचण्डदण्डेन किं न दण्डयसि।' (पृ.१६३)

कुत्रचित्वाक्प्रचारै: सूक्तिभिश्च भाषासौन्दर्यं वर्धितम्, यथा 'भग्नकाच: सर्वथा भग्न एव स्थास्यति।' (पृ. १५८) श्रेय: खुल दारिद्रय न पुन: परित्यागजन्योऽपमान:। भवत्सुहृदोऽपयश: कलङ्क: शशाङ्कस्याङ्क इवाशुद्धिमेव भजते। अत्र अनुप्रासोऽपि साधित: कवीन्द्रस्य कालिदासस्य सूक्तेरूपयोग: कृत: यथा – अस्मिन्नेव सन्दर्भे 'एको हि दोषो गुणसन्निपाते निमज्जतीन्दो: किरणेष्विवाङ्क:' (पृ. १५८)

कथान्तेऽद्भुतयोजना इत्येतद्वैशिष्ट्यमत्रापि दृश्यते। दशवर्षाणि पत्यु: गृहत्यागेन सततं तं कठोरवाचा निन्दन्ती मीरा कथान्ते कुष्ठरोगेण पीडितं मरणासन्नं तं दृष्ट्वा दु:खातिरेकेण आत्मानं निन्दति। शोकान्ते पर्यवसितमिदमद्भूतम्। अनुपस्य मृत्युना वज्राघातेन निहताया: मीराया: करुणार्तविलापेन करुणरसस्य परिपोष: जात:।

मीराया: चरित्रचित्रणे प्रथमं पत्युर्गृहत्यागादागता निष्ठुरता तस्या कठोरवचनेषु प्रतिबिंबिता। यथा आत्मनिर्वसनात्मत्यागयो: कारणं गोपयितुं प्रयोजनं गूढतरं स्यात्किलानुपस्य। इति गुणेमहोदस्योक्त्या: मीराया: प्रत्युक्ति: नात्मत्याग: परं भोगासक्ति:। विवाहपुत्रजन्मादिप्रसङ्गेषु मीराया: मार्दवस्नेहादिभावा: वर्णिता:। कथान्ते च पत्युर्मृत्युरूपाघातेनात्मघातं कर्तुमुद्युक्ताया मीराया आत्मग्लानि: क्षमादेव्या सम्यग् वर्णिता।

कथादृष्टया एकत्रैव किञ्चिद्विपरितं वर्णितमिति भाति। 'पञ्चवर्षदेशीययोर्यमलयोरनतिक्रान्त–शैशवयोरुपनयननिर्वर्तनकाले' इत्यत्र पञ्चवर्षदेशीयबालकयोरुपनयनं धर्मशास्त्रविरुद्धमिति मन्ये।



# १५. शरद्दलम्

**कथासारांश: –**

कश्मीरप्रदेशेषु श्रीनगरस्य सफ्राकदलाख्यसेतौ सलिमजुनाम्न: सूचिशिल्पिन: पण्यशालाऽऽसीत्। अहज्जुर्नाम तस्य पुत्र:। अस्मा नाम तस्य भगिन्यप्यासीत्। अर्विन आना नाम काचिदमेरिकादेशीया क्रैस्तधर्मप्रसारिका महिला ताभ्यामाङ्ग्लभाषाध्यापनार्थं तत्रागच्छति स्म। सा तां कन्यापाठशालां स्यापयितुमौच्छत्। तत्र च अस्मया आङ्ग्लाध्यनार्थमागन्तव्यमिति तस्या: विचार:। परम् अहज्जूर्न सिद्ध: तस्या आङ्ग्लाध्ययनार्थम्। आनामहोदया यदा बालाया: अध्ययननिरोधस्य कारण पृष्टम् तदा तेन पितृकथिता कथा तस्यै श्राविता।

शिवमन्दिरान्नतिदूरं सुभाननामाभिध: काष्ठकलाप्रवीण: कश्चित्तक्षा न्यवसत्। क्रिस्तधर्मप्रचारकै: स्थापिताङ्ग्लपाठाशालायामधीत: विश्वविद्यालये च उच्चशिक्षणं प्राप्तवन्त: स: मुस्लिमधर्मस्य रूढीनां द्वेष्टाऽऽसीत्। अत: गृहजनानां विरोधमविगणय्य तेन स्वपत्न्यै स्वातन्त्रं दत्तमासीत्। तस्य अमीनानामाभिधा पत्नी सौन्दर्यस्य खनिरासीत्। अमीनाया: सौन्दर्यं गुणाश्च वर्णयति लेखिका – 'सप्तदशवर्षीयेयं सुहासिनी कान्त्या शरच्चन्द्रकलामपि न्यक्कारिणी प्रज्ञया मोगलसम्राडौरंगझीबस्यात्मजां झिब्रनिसमिवानुकुर्वतीति। गच्छात्सु कालेषु सुभानस्य वाणिज्यं वृद्धिंगतम्। कार्यवशाद्वारंवारं देशान्तरगमनं कुर्वन्स: पत्न्यै विहारार्थं समयं दातुमसमर्थ: जात:।

एकदा सय्यदनामाभिध: परदेशादागत: त्रिंशद्वर्षीय: युवक: सुभानस्यापणमागत:। सुभानस्य पत्न्या: सौन्दयेणाकृष्ट: स: वारंवारमापणमागत:। पत्यु: कार्यवशाद्देशान्तरगमनेनावसरं प्राप्य तयोर्मध्ये स्नेहसम्बन्ध: दृढ: जात:। प्रेमसम्बधेनैकान्ते वारंवारं मेलनपि जातं तयो:।'

स्वदेशं गमनेच्छुकेन तेन 'नेष्यामि त्वां सह मया। यदीच्छसि चेदद्यरात्रौ वृद्धकृषीवलस्य काष्ठकस्य कुटीरसमीपं मां प्रतीक्षस्व निशीथमित्युक्तम्।

परं बालकौ विसृज्य कथं गन्तव्यमिति विचारेण दोलायमानस्थित्या सा निश्चयं कर्तुमसमर्था जाता। परं प्रगाढप्रेम्णा सा सिद्धा साहसं कर्तुम्। रात्रौ सालङ्कृता सा बालौ शाययित्वा पतिं पत्रं च विलिख्य गृहान्निर्गता। दुर्दैवान्महत्या वृष्ट्या झञ्झावातेन च विशालवृक्षः भूमौ पतितः। पादपस्याधः निष्पिडीता सा प्रियकरं प्रति गन्तुं नापारयत्। प्रातः तस्याः वेदनायुक्तविरुतशब्देन केनचित् सभार्यक्षेत्रिणा सा वृक्षस्याधस्ताद्विमोच्य स्वकुटीरं नीता। कतिचिद्दिनेभ्योऽनन्तरं अमीनया विक्रयाय कृषकाय दत्तं रत्नखचितकुण्डलद्वयमभिज्ञाय सुभानेन कृषकाच्छ्रुतं तस्याः वृत्तम्। सुभानः प्रथमं कुपितः परमकलङ्कितां तां गृहमानेतुं सिद्धः जातः। तेन अमीनां प्रति सन्देशोऽपि प्रेषितः। लज्जया स्वजनेभ्यो दूरं गन्तुकामा सा रात्रौ गृहान्निरगात्। तामन्वेष्टुं सुभानेन प्रयत्नः कृतः। परं न सा कुत्रचिदपि दृष्टा प्रायः तया नदीजले आत्मघातः कृतः स्यादिति चिन्तितं सुभानेन।

कथायाः प्रारम्भे आनया विपण्याः बहिर्द्वारस्योपविष्टायै यस्यै वनीपकायै कतिचितनाणकानि दत्तानि सा कथाश्रवणादनन्तरं रुदती तस्मात्स्थानान्निर्गता। अतः सा अमीनेति ज्ञायतेऽस्माभिः।'

**समीक्षणम् –**

लेखिकायाः निवेदनेनारभते कथा। मुख्यकथा कथनार्थं अहज्ञुर्नामाख्यायकस्य योजना लेखिकया कृता। लेखिकायाः घटनाविन्यासकौशलं पश्यामः कथायामस्याम्। काचित् क्रिस्तधर्मप्रचारिकाङ्ग्लभाषाध्यपनार्थं कन्याशालां स्थापयितुमुद्यता। तत्र भगिनीं प्रेषयेति कथयितुमागताऽऽसीत्सा। परमस्मद्रूढिव्यवहारदृष्ट्या बालिकानां पाठशालाध्ययनं निषिद्धमिति वदति स भ्राता। पितृचरणैर्निधनात्पूर्वं अस्मायाः गृहाद्बहिर्गमनं न कदाप्यनुमोदनीयमिति कथितमासीत्। निर्णयस्यास्य स्पष्टीकरणार्थमेका कथापि श्राविता। सा मुख्या कथा। सुशिक्षितस्त्रिणां स्वातंत्र्येणानर्थपरम्परा सोढव्या भवतीति कथायाः तात्पर्यम्। अस्मायाः आङ्ग्लाध्ययननिषेधस्य पार्श्वभूमौ कथायाः प्रभावः वर्धितः।

कथाया: प्रारम्भे आपणस्य बहिस्तिष्ठति दरिद्रा वनीपका अमीनैव इति कथान्ते ज्ञायते। वस्तुतस्तु सा एव कथानायिका। प्राकृतिकयसौन्दर्येण सह गुणगणीमेतां वर्णयति लेखिका, 'रतिविषये जितरति: कलाकौशलस्यादर्श: कादम्बरीकलापरसग्राहिणी गणितशास्त्रे प्रकृत्यैव निपुणा बभूव। सुभानेन स्वेनाध्यापिताङ्ग्लोर्दुभाषा प्रापितसंख्याज्ञानकौशलसंपादितव्यवहारचातुर्या भर्तुर्वाणिज्यव्यवसाये बहूपयोगिनीमात्मानमकरोत्सा।' अग्रिमकथाया: कृतेऽऽवश्यकगुणा: वर्णिता: लेखिकया गणिशास्त्रनैपुण्येन पत्युर्देशान्तरगमनादपि सा व्यवसायं निर्वोढुं समर्थाऽऽसीत्। आङ्ग्लभाषाध्ययनं व्यवहारचातुर्यमपि व्यवसायार्थं इष्टमेव। कादम्बर्यादिपठनेन रतिविषयकं प्रागल्भ्यमागतम्। अत एव सा कामविह्वला भूत्वा सय्यदेन सह गृहात्पलायनार्थ सिद्धा जाता। स्वान्त:करणेन प्रबोधिताऽपि सा प्रियप्रियार्थं निर्गता गृहात्। दुर्दैवात्सा प्रियेण सह गन्तुं न समर्था। निसर्गेणैव व्यभिचारार्थं दण्डिता सा कस्यचित्कृषीवलस्य गृहे निवसिता। पत्या सुभानेन तस्या: निष्कलङ्कत्वात् स्वीकृता सा। स्वापराधाल्लजिता सा न पुन: गृहं ययौ। वनीपकावृत्तान्तेन सैवामीनेति ज्ञायते। अमीनाया: गृहत्यागसमयस्यान्तर्द्वन्द्वं पश्चात्तापदग्धया आत्मग्लानींमुत्तमरीत्या वर्णिता।

घटनाविन्यासे कुत्रचित् सूत्रविच्छेदोऽभवदिति मन्ये। यथा कथाश्रवणप्रसङ्गे अस्मा वदति – 'अमीना? नामैतन्मातुरावयो: किल? कथान्तेऽपि अहज्जुर्वदति अहो वैलक्ष्यणं प्रथमागमस्यात्र तस्या: दीनाया:। तथा हि पितृपादानां स्वर्गगमनदिनादारभ्यैव शुनीव विश्वसनीयाऽऽवयोरुभयोर्बद्धप्रीतिर्विनैकदिनस्याप्यनुपस्थितिं प्रत्यहंमाप्रातरानिशं गृहाद्बहि: स्थितास्त्येषाऽभिरक्षितुमिवावाम्।' एतैर्वाक्यैरमीनैव एतयोर्मातेति भाति। परं कथाश्रवणप्रसङ्गे पितुर्मित्रस्यैषा कथेति वर्णितम्। कथं तातपादानां श्रवणपथे कथेयं निपतेति अस्माया: प्रश्नस्योत्तरंमहज्जुर्दत्तवान – 'सुभानेन स्वयमेव निवेदिता कथेयं पितृपादेभ्यश्चिराद्बद्धसख्येभ्य: इति। यद्येषा मित्रस्य कथा तर्हि किमर्थं सा रक्षिकेव प्रतिदिनं तत्रोपविशतीति शङ्कास्थानम्।

सूज्ञवाचकैर्ज्ञातव्यमिदम्।'

अस्या: कथाया: भाषिकवैशिष्ट्यमेतद् यद् मुस्लिमधर्मीय नामानि स्वीकृत्य संस्कृतविभक्तिप्रत्यया: योजिता: यथा सय्यद अहज्जु: अस्मा इत्यादीनि नामानि संस्कृतविभक्तिप्रत्ययान्तानि सन्ति। अहज्जुरिति उकारान्तपुल्लिंगी शब्द:, शब्द: 'ॲना' इति 'आना' आकारान्त शब्द:। जिलमनद्यास्तीरे इति उक्त मे कस्मिन् सन्दर्भे । वस्तुतस्तु तस्या: कृते वितस्तानदीति नामाभिधानं वर्तते। 'खस्खसकुसुमै: कश्मीरेषु दलतडागा: प्रसिद्धा:। दलशब्दस्य व्युत्पत्तिरत्रदत्ता लेखिकया – प्रफुल्लितोत्पलदलपटलविस्तारेण सार्थनामसु दलाख्यादितडागेष्वति। मुस्लिमपरम्पराविशेषं वर्णयति लेखिका – 'मुस्लिमानां पुराणलौकिकाचारक्रमं विशेषतश्च सर्वप्रापाञ्चिकसुखप्रतिबन्धकं स्त्रीणां पडदाख्यप्राक्तनरूढिविशेष' इति। बाणभट्टादिवत् दीर्घवाक्य रचनेत्यद्वैशिष्ट्यमस्या: कथाया: यथा कश्मीरप्रदेशस्य वसन्तर्तुवर्णनम्। (पृ. १६८–१६९) अत्राष्टाविंशतिपदयुक्तवाक्यं प्रयुक्तम्।

दीर्घवर्णनयुक्तं कथाकथनं नीरसं भवत्यत: मध्ये मध्ये संवादा: योजिता:। तेन नाट्यमयतेयं रसपरिपोषिका भवति।



# कथामुक्तावलीगतकथानां वैशिष्ट्यानि

क्षमादेवी विंशतिशतकस्य सर्वोत्कृष्टा संस्कृतलघुकथालेखिकेति वदामश्चेन्नास्त्यत्रातिशयोक्तिः। आधुनिकलघुकथातन्त्रेण संस्कृतलघुकथालेखनं कुर्वत्येषा प्रथमा लेखिका। आधुनिककथातन्त्रं प्राचीना च साहित्यिकगद्यशैली एतयोरुत्तमं संयोजनमस्माभिरनुभूयते कथापठनसमये। आधुनिकलघुकथाः पद्येन न विरच्यते। परं प्राचीनसंस्कृतसाहित्यशास्त्रज्ञैः कथा गद्यमयी पद्यमयी वापि भवितुमर्हतीत्युक्तम्। क्षमादेव्या ग्रामज्योतिः कथापञ्चकम् इत्येतौ पद्येन रचितौ कथासङ्ग्रहौ। कथापञ्चकमिति कथासङ्ग्रहस्य प्रास्ताविके क्षमादेव्या स्पष्टीकृतं यदेताः कथा आधुनिककथातन्त्रेण रचिता इति। कथामुक्तावल्यपि तेनैव तन्त्रेण रचिता। अल्पपात्रप्रसर्यक्ता एकात्मसंस्कारात्मिकाद्भुतान्ता च लघुकथेति नियमानुसारं रचिताः एताः कथाः। एतद् कथासङ्ग्रहस्य प्रथमं वैशिष्ट्यम्। यथा मायाजालं नाम कथायां केनचित् पुरुषेण वञ्चिताः चतस्राः महिलाः स्ववञ्चनावृत्तं वदन्ति। कथान्ते चतसृणां वञ्चक एक एवेति योगिनः उक्तिरद्भुतं जनयति। हैमसमाधिरित्यस्यां कथायां पञ्चवर्षेभ्यः प्राक् गृहान्निर्गतं भर्तारमन्वेष्टुकामा हिमा अमरनाथप्रदेशसन्निहितगुहायां पत्युर्मृतदेहं दृष्ट्वा शोकविह्वला भवति। तस्मात्स्थानाद्बहिरागत्य सहसा जीवितं पतिं दृष्ट्वा सम्भ्रान्तां तां सः समालिङ्ग्य गुहां प्रत्यानयति। तदा ज्ञायते तया दृष्टः शवः भर्तुः जनकस्येति अद्भुतान्ता कथा। द्वितीयं महत्त्वपूर्णं वैशिष्ट्यमस्य कथासङ्ग्रहस्य यदेताः प्रायशः सर्वाः कथाः स्त्रिकेन्द्रिण्यः। लेखिकया तत्कालीनाः स्त्रिसमस्याः कथारूपेण उपस्थापिता अस्माकं पुरतः। परित्यक्तेति कथायां परित्यक्तानां निपुत्रिकाणांश्च दुःखं साक्षात्कारितम् अस्मत्पुरतः। एकाकिजीवनं स्त्रीणां कृते दुष्करमिति आत्मनिर्वसनं, क्षणिकविभ्रमःपरित्यक्तादिषु कथास्वेतादृशं चित्रणं प्रामुख्येन दृश्यते। 'श्रेयः खलु दारिद्रयं न पुनः परित्यागजन्योऽपमानः[१]' इति वदति आत्मनिर्वसनं कथायाः नायिका मीरा। विधवोद्वाहसङ्कमित्यस्याः कथायाः नायिका देवरगृहे किंकरीव

निवसति। विधवानां कुन्तलपाशश्च नाशकारीति मन्वानैस्तद्भर्तृबन्धुजनैर्मुण्डित-शीर्षाऽपि नैसर्गिकलावण्यान्नव्ययुज्यत सा।[२] पार्वत्याः दिनचर्यावर्णनं विधवानां स्थितिदर्शकम्। विधवाविवाहः नानुमन्यते जनैः। धर्मशास्त्रमपि विरुद्धमासीत् विधवाविवाहस्य। 'अहो वंशपरम्परया ज्ञापितास्मि यद् भ्रष्टजातिर्हिन्दुर्नित्यमेव बहिष्कृतोऽवतिष्ठेत यावत् प्रायश्चित्या पुनः शुचिर्न भवेत्।'[३] इति पार्वत्याः वचनं पुनर्विवाहेन जातिबहिष्कारस्य भयं द्योतयति।

स्त्रिशिक्षणविषयेऽप्यौदासिन्यमेव दृश्यते बहुत्र। मायाजालकथायां मुग्धा वदति – 'ते (पितृपादाः) च यथासम्प्रदायं वंशपरम्परया प्रतीता अभूवन् यद्रूद्वाह एव प्रयोजनं प्रमदाया जीवनस्येति। पठनलेखनाभ्यामन्तरोच्चशिक्षणं स्त्रीणां नावश्यकमिति तैर्दृढं प्रत्यपद्यत।[४] (पृ. ७२) अस्यामेव कथायां मन्दाऽपि तदेव ब्रूते बाल्ये प्राथमिकपाठशालां केवलं कृताध्ययनाऽऽसम्। उच्चशिक्षणविरोधी जनको मेऽब्रवीदनिष्टमेव स्त्रीणामत्यभ्यासाज्जायत इति।[५] मुस्लिमस्त्रीजनानामप्येतादृश्येव स्थितिर्वर्णिता क्षमादेव्या। निशीथबलिरित्येतस्याः कथायाः नायिकायाः झुलेकायाः गृहे एव मातृभाषाध्ययनं कलानैपुण्यमाङ्ग्लभाषाध्ययनञ्च जातम्। सकलमिदं शिक्षणं सम्प्राप्यापि विशालसौधे पितुः प्रतिपन्नपुरातनरूढैः कन्यान्तः पुरे बन्दीव निरुद्धसर्वबहिःसंस्कारा कथमपि कालमगमयद्बालिकेयम्।[६] शरद्दलमिति कथायां अहर्ज्जुः स्वसारमध्ययनार्थं गृहाद्बहिः प्रेषयितु नेच्छाति।' स्त्रीजातेः किं शिक्षणेन? इति तस्य वाक्यम्[७] वनिताभ्यः स्वातन्त्र्यप्रदानमनिष्टमित्येतस्मिन् मम प्रत्यायनमेव कथाख्यानस्या हेतुरभूत्प्रायस्तेषामिति पितृचरणानां स्त्रीस्वातन्त्र्यविषयकं मतं प्रतिपादयति सः। अत्र सर्वत्र स्त्रीसमस्याः वर्णिताः। परमेतेषां समस्यानामुपायाः न प्रदर्शिताः। कदाचित् वैदिकविधवाविवाहं संपादयितुं पुरोहिताः उद्यता भवेयुरिति विधवाविवाहविषयेऽऽशावाद एव प्रकटितः।

**प्रदीर्घनिसर्गवर्णनम्** –

प्रकृतिरिति क्षमादेव्याः कथास्वेकं पात्रमेव। कथापात्राणां

मानसिकस्थित्यनुसारं निसर्गवर्णनं क्षमादेव्या कृतम्। यथा तापसस्य पारितोषिकमिति कथायामासन्नमरणपत्युरुपधानसन्निहितोपविष्टायारुर्मिलायाः मनोव्याथा निसर्गेण सह एकाकारा भवति। पत्युर्मन्दस्वरं श्रुत्वा 'यदि सन्तरिष्यति रात्रिमिति वैद्यस्य-वचनं स्मृत्वाऽऽनन्दिताथारुर्मिलायाः गृहं सहस्रश्मिराश्मिभिर्देदीप्यमानमासीत्।[८]' पञ्चषट्घटिकाभ्यः प्राग् वसुन्धरा या मरुस्थलीव शून्यशून्येव भाति स्म सेदानीम् प्रफुल्ल जपाकुन्दबकुलमालतीमल्लिकादिकुसुमैः समुल्लसिता नन्दनवाटी वाति मनोहारिणी तां समानन्दयदमन्दम्[९]। झञ्झावातेन सह भीषणवृष्ट्याः वर्णनमनेकासु कथास्वागतम्।[१०] परित्यक्ता निशीथबलिः।[११]

एतेषु वर्णनेषु सागरवर्णनं[१२], राजस्थानप्रदेशस्य वालुकामयप्रदेशस्याकालवर्णनम्[१३], गहनारण्यस्य वर्णनम्[१४] वृष्टिवर्णनम् शरद्दलम्[१५], निसर्गातिरिक्तवर्णनेषु विशालसौधस्य वर्णनम्[१६] पॅरिसदेशस्य सौन्दर्यवर्णनम्[१७], दरिद्रवनीपकायाः वर्णनम्[१८], अमरनाथयात्रायाः वर्णनम्[१९] निसर्गवर्णने प्रसङ्गवर्णने च कुत्रचिदतिरिक्तासक्तिरपि दृश्यते। कथासूत्रविच्छेदमपि भवति दीर्घवर्णनेन। यथा हैमसमाधिरितिकथायां कृतं हिमाद्रेर्वर्णनम्।[२०]

**कथनशैली –**

सर्वास्वेव कथासु प्रायः निवेदनशैली प्रयुक्ता। कुत्रचित् कथालेखिका स्वयमाख्यायिका कुत्रचिच्चान्यऽऽख्यायकस्य मुखेन कथाकथनम् वर्तते। उत्कण्ठावर्धनार्थं प्रभावार्थश्चैत्तादृशशैल्यतीवोपयुक्ता। यथा परित्यक्ताकथायामाख्यायकेण सह मार्गदर्शकः कोऽपि कस्मिंश्चिदावासे सत्क्रियन्ते सदनेऽस्मिन्। इति मार्गदर्शकस्य वाक्येन वर्धितोत्कण्ठितेन आख्यायकेण के च ते इति पृष्टे सति स वदति परिव्राजकाः कषायवस्त्रधारिणः प्रतिषिद्धप्रवेशा इहेति। आख्यायकस्योत्कष्ठोपशमनार्थं स गृहस्वामिनः पूर्ववृत्तं कथयति। यथा च शरद्दलमितिकथायां भगिन्याः आङ्ग्लभाषाध्ययनं निराकर्तुमहज्जुर्वदति – 'निधनात्पूर्वं तातपादा अस्माया न क्वापि गृहाद्बहिर्गमनममनुमोदस्वेति मामश्रावधन्' तदाज्ञां

पालयितुमनिच्छते मे निवेदिता तैः शोचनीया कथा मूढमत्याः कस्याश्चिद्युवत्याः। इत्यस्यां पार्श्वभूमौकथां कथयति सः। मत्स्यजीवी केवलमित्यस्यां कथायामाख्यायकः पूर्वपरिचितयुवत्याः वृत्तं ज्ञातुं तस्मिन् ग्रामे पुनरायात इति दर्शयित्वा आख्यायकस्य माध्यमेन मत्स्यजीविनः पत्न्याः पूर्ववृत्तं वर्तमानकालिकघटनाभिः सह संयोजितम्। कथालेखिकायाः घटनाविन्यासकौशलमेतासु कथास्वनुभूयते।

प्रदीर्घनिसर्गवर्णनेन प्रसङ्गवर्णनेन वा वाचकाः निरसिताः मा भवेयुरिति कृत्वा संवादानां योजना बहुत्र दृश्यते। भावाभिव्यक्तिर्नाट्यमयता चैतौ संवादानां वैशिष्ट्यौ।

यथा क्षणिकविभ्रमः इति कथायां पुत्रस्य बन्दिना सह वासेच्छया सुनीत्याः संत्रासः संवादेन तीव्रतरः जातः।

सुनीतिः – (सविषादम्) बन्दिना सार्धं क्वयास्यसि बत।

कुमारः – अलं चिन्तया मद्विषये। अत्रापि धनार्जनं दुःसाध्यमेव मे भवेदेव।

सुनीतिः – (दीर्घं निश्वस्य) तव पितुर्हंससितयशोऽवलम्ब्य तव भावि क्षेमं बलवदाशास्यते मया। परं बन्दिनां संसर्गेण सर्वथा तव विनाश एव भविता।

रामदासः वत्स! अलं संत्रास्य मातरम्।

कुमारः – (साभिनिवेशम्) परं निमन्त्रितोऽस्ति मयासौ। अम्ब! अनाश्रितपरिपालनं धर्मो साधूनामिति त्वयैव बहुधा मे कथितम्।

सुनीतिः – (सरभसम्) भयावहः किल घातकस्य प्रवेशोऽत्र। कुमार्गे त्वां नयेत्। स विलुण्ठेदप्यस्मान्।

रामदासः – भातृजाये मा स्म वृथा भैषीः। वत्सस्योत्साहो न प्रतिहन्तव्यः।

सुनीतिः – हा, हा कारासहवासिनमनवरतं ध्यायतोऽस्य चेतो द्वादशमासान् नित्यबाष्पादंधीभूतकल्पाया मातुर्विचारविधुरं स्यादिति

खलु। (इति संरुद्धकण्ठमुदीर्य ललाटमताडयत् सा।)[२१]

अत्र सुनीत्याः पुत्रस्य भाविजीवनस्य चिन्ता, तस्य दृढनिश्चयं दृष्ट्वा संत्रासः अगतिकत्वादागतं दैन्यञ्च संवादशैल्या सुष्ठु चित्रितम्। हैमसमाधिः इत्येतस्यां कथायां शारीरिकपरिश्रमानविगणय्य पतिमन्वेष्टुं सिद्धा हिमा श्रमेण निरसिता तस्य वृद्धा च माता एतयोर्संवादेन वृद्धायाः विरोधेन च हिमायाः दृढनिश्चयः प्रकर्षेण परिणामकारी जातः।[२२] 'आत्मनिर्वसनम्' कथायां विनाकारणं गृहत्यागं कृतवन्तं पतिं दूषयन्त्याः मीरायाः संत्रासोद्वेगः संवादेनैव प्रभाव्यभवत्। उक्तिप्रत्युक्तियुक्तसंवादः रोचक एव।

एतादृशी संवादात्मकशैली रसपरिपोषार्थमतीवोपयुक्ता। रसपरिपोषः – एतासु कथासु प्रामुख्येन करुणरसार्द्राः बह्व्यः कथाः। परं न ताः सर्वाः शोकान्ताः। विधवोद्वाहसङ्कम् आत्मनिर्वसनम्, शरद्दलमित्येताः तिस्रः कथाः शोकान्ताः। परं करुणाद्रवर्णनेन वाचकानां चित्तद्रुतिस्त्वनेकासु कथासु साधिता यथा तापसस्य पारितोषिकमिति कथायामासन्नमरणपत्युर्मुखं पश्यन्त्यारुर्मिलायाः वर्णनम्, मत्स्यजीवि केवलमिति कथायां पुत्रवियोगेन विदारितहृदयायाः मातुराक्रन्दनम्, परित्यक्तेति कथायां हस्तशकटिकायां पङ्गुपुत्रमवस्थाप्य झञ्झावतेन सह वर्षति वर्षायामाश्रयार्थमागतायाः परित्यक्तायाः वर्णनं करुणरसपूर्णम्। आख्यायकः वदत्यत्र दुःखप्रधानसंसारनाटकं दुःखिपात्राभिनेत्र्या भाव्यमिति। शृङ्गारे विप्रलम्भशृङ्गारस्यैव वर्णनं दृश्यते। प्रेमरसोद्रेककथायां पुरातनमार्तण्डमन्दिरस्य वर्णनेन भयानकरसस्यानुभूतिर्भवति। स्वाप्निकव्यामोहकथायां नजमदिलेलाकथायामद्भुतरसाश्रितं वर्णनं कृतं लेखिकया। अद्भुतार्थं कुत्रचिन्मोहिनीविद्यायाः वर्णनं कुत्रचित् सिद्धसाधूनां वर्णनं कुत्रचित्तु तपस्विनः वर्णनं कृतं लेखिकया।

**भाषाशैली –**

दण्डीबाणभट्टादिनां शैल्याऽधुनिकसमाजवर्णनमिति क्षमादेव्या भाषायाः महत्त्वपूर्णं वैशिष्ट्यम्। प्रदीर्घ सामासिकरचनासु प्रागल्भ्यं विशेषतः वर्णनप्रसङ्गे दृश्यते। यथा –

'यामिनीकामिनीवदनतिलकबिन्दुरिन्दुश्चन्द्रिका-व्याजेनाम्बरतलात् सुधाधाराभिरातलमधावत्[२३] हेमन्तक्षणिकसन्ध्यासामयिक-नीललोहितच्छायाव्याप्ते प्रदोषे[२४] विविधरम्यतपोवन-जितनन्दनवनरामणीयकशोभिता, कुजन्नानाविधसुन्दराण्डज-विलसन्नीलोत्पलजलाशयसुषमानिधेर्देवता' इति पॅरिसदेशरस्य वर्णनम्।[२५]

यत्र भावावाभिक्तिस्तत्र लघुलघुनि वाक्यानि सन्ति। यथा – 'मा स्म भैषी: पितामह: मा स्म भैषी:। नाहं शिशुरस्मि। त्रयोदशवर्षीयाद्यास्मि खलु। समर्थास्मि रक्षितुमात्मानमिति जगादास्मानाम्नि बालिका काचिद्।'[२६] भावातिरेकस्य प्रभावं साधयितुं पदानां पुनरावृत्तिरित्येकमपरं वैशिष्ट्यं क्षमादेव्या: भाषाया:। यथा 'ध्यायं ध्यायं रोमाञ्चिताऽभूत्पार्वती।'[२७] विच्छिन्नस्तम्भान् दर्शं दर्शं दारिका किञ्चित्कम्पमाना।[२८] पितुर्गेहं बालसखीं चानवरतं स्मारं स्मारमित्यतेषु[२९] वाक्येषु पदानां पुनरावृत्या भावातिरेकं प्रदर्शितं लेखिकया। व्यधायि, व्यतर्कि, अश्रावि, अवास्थिषि एतानि भूतकालरूपाणि वैशिष्ट्यपूर्णानि।

आधुनिकवस्तूनां कृते संस्कृतशब्दनिर्माणकौशलं यत्र तत्र द्रष्टुं शक्यते। यथा 'टेलिग्राम' इत्यस्याङ्ग्लशब्दस्य कृते प्रयुक्त: तन्त्रीसन्देशशब्द:।[३०] मायाजालम्, युतकहस्तस्य कृते प्रयुक्त: कञ्चुकनालिका शब्द:[३१], 'गालिचा' इतिहिंदीभाषायां रूढशब्दस्य कृते पारसिकदेशीयकौशेयास्तरणशब्द: निर्मित:, शॉल इत्यस्य कृते काश्मीरदेशविनिर्मितप्रावरणशब्द:[३२] कुत्रचित्तु यथावत्प्रयुक्तानि विशेषनामानि यथा शिकाराख्यपोतविशेष:[३३] (शरद्दलम्, पृ. १६५), चिनारतरुविशेषम्, पडदारव्यप्राक्तनरूढिविशेषम् इ.।[३४] मुस्लिमधर्मादागता शब्दा: यथावत्स्वीकृत्य संस्कृतविभक्तिप्रत्ययास्तत्र योजिता:। यथा मस्जिदस्यालिन्दत:, सय्यद: अहज्जुरित्यादय: शब्दा:।[३५]

सूक्त्याधारेण कथाकथनमिति क्षमादेव्या: महत्त्वपूर्णं भाषावैशिष्ट्यम्। ग्रामज्योतिरिति कथासङ्ग्रहे सूक्त्यारम्भा: कथा:।

कथापञ्चकमिति कथासङ्ग्रहे कथासारं वर्णयन्ति सुभाषितानि सन्ति। तादृशसूक्तिप्रयोग: क्वचिदत्रापि दृश्यते। यथा तापसस्य पारितोषिकम् इत्यत्र उर्मिलाया: पातिव्रत्येन पत्यु: प्राणा: रक्षिता:। अत: कथान्ते वदति लेखिका – 'पतिव्रतानां पूण्येन किंवा न भवति क्षितौ।'[३६]

सुप्रसिद्धसूक्तिनामपि प्रयोगा: दृश्यन्ते यथा – अतिपरिचयादवज्ञा सन्ततगमनादनादरो भवति[३७] एको हि दोषो गुणसन्निपाते निमज्जतीन्दो: किरणेष्विवाङ्क:। कालिदासस्य सूक्ति:[३८], भग्नकाच: यर्वथा भग्न एव स्थास्यतीति लोकोक्ति:[३९], पशुवत्ताडनमित्यस्य कृते पशुमारं शब्दस्य प्रयोग: वैशिष्ट्यपूर्ण:[४०]

देवमन्दिरस्य कृते सुरालयशब्दस्य प्रयोगोऽपि संदिग्धदोषस्य उदाहरणरूपेण मम्मटेन दत्तं। परं तत्राप्यर्थचमत्कृतिरित्येव कवे: प्रयोजनं वर्तते चेन्न तत्र संदिग्धदोष:। अत्र त्रिपाठी महोदयै: संदिग्धदोषोऽस्त्युक्तम्। परं तदपि न योग्यम्। क्षमादेव्या: यत्र सुरालयशब्दस्य प्रयोग: कृत: तत्र न संदिग्धता। एतेन शब्देन मदिरालयस्य स्मरणं भवातीति कृत्वाऽनुचितपददोष: इति वक्तुं शक्यते।

**अलङ्कारयोजनम्** –

अर्थालङ्काराणामपेक्षया शब्दालङ्काराणां प्रयोगेऽधिका रुचिर्दृश्यते क्षमादेव्या:। यथा 'सुधाधवलैर्बकुलमल्लिकादिसुमनस्सु[४१] अत्र ध, ल वर्णयोरनुप्रास: उत्तम:। तुङ्गतुङ्गतुहिनसञ्चितशृङ्गं तुहिनगिरे: इत्यत्र प्रयुक्तेन 'ङ्' इत्यनुनासिकस्यानुप्रासेन समुद्भुता नादमयता चित्ताकर्षका।'[४२]

अर्थालङ्कारेषु उपमोत्प्रेक्षारूपकाणां प्रयोगा: रसपरिपोषार्थं कृता:। यथा पत्युर्मरणासन्नावस्थां दृष्ट्वा विधिं निन्दन्त्युर्मिला वदति – भाविदुस्सहापदमुत्प्रेक्षमाणां मां वराकीं कोकीमिव कोकाद्विरहितामुत्तरोत्तरं तारस्वरै रूदतीं द्रष्टुं कथं त्व सहसे। अत्र प्रयुक्तोपमयोर्मिलाया: दु:खस्य तीव्रता वर्धिता।[४३]

मिथ्याग्रहणकथायां पत्युर्गृहे नवोढाया: अमीनाया: स्थितिर्वर्णिता–मातृविरहितां नष्टाध्वगां नवशुकीं महारण्ये द्रुमाद्द्रुममुड्डयमानमिवात्मानमकलयदमीना।[४४], मत्स्यजीवीकेवलम्

इत्यस्यां कथायां सागरे नौका भग्नेति शृत्वा पुत्रस्य वृत्तं प्रतीक्षमाणस्य पितुः कृते प्रयुक्तं विशेषणं चिन्तायुक्तं पितृहृदयं 'सन्देहवह्निज्वालाजालैः प्लुष्टहृदयः' इत्येकेनैव विशेषणेनाविष्कृतम्। सूर्याशुर्गिरिकन्दरमिव कश्चिधुवा पार्वत्या हृदयमगाहत। अत्र गिरिकन्दरपदेन पार्वत्याः हृदयस्य तमोमयत्वं व्यञ्जितम्। स्थालिपुलाकन्यायेनाङ्काराणां विवेचनमत्र कृतम्। लेखिकायाः भाषासौन्दर्यस्यास्वादार्थं कथासङ्ग्रहः सहृदयरसिकैः पठनीयः। कथानां विश्लेषणप्रसङ्गे कथागतवैशिष्ट्यानां सविस्तरचर्चा कृता। अत्र केवलं कथानां सामान्यवैशिष्ट्यानि चर्चितानि।

बह्वयः कथाः निसर्गरमणीयेषु स्यानेषु घटिता इति दृश्यते। यथा कश्मीरप्रदेशः महाराष्टस्थितमहाबलेश्वरस्थानं अबु, कोंकणप्रदेशः मुम्बापुरी, पॅरिसदेशः इ.प्रकृत्यासह कथागतपात्राणां भावस्थितिं वर्णयितुं सुकरं जातम्। बहुत्र स्थलनाम्नाऽऽरभते कथा। यथा-तापसस्य पारितोषिककथायाः प्रारम्भे उक्तं लेखिकया - कोंकणावनिमण्डलमण्डायमाने सुरमणीयपर्वतीयप्रदेशे महाबलेश्वरनामानि द्वित्रदिनानि सहसासीत्समुत्थितो झञ्जावातः प्रचण्डः। लेखिकया स्वयं दृष्टानि स्थानान्येतानीति स्थानानां सविस्तरवर्णनेन ज्ञायते। 'उत्तरसत्याग्रहगीता' इत्यस्य ग्रन्थस्य प्रकाशनार्थं सा पॅरिसप्रदेशगता स्यात्। अमरनाथयात्राऽपि लेखिकया कृतेति भाति।

(१) आत्मनिर्वसनम् – पृ. १७१
(२) विधवोद्वासङ्कटम् – पृ. ११०
(३) तत्रैव – पृ. ११३
(४) मायाजालम् – पृ. ७७
(५) तत्रैव – पृ. ७९
(६) निशीथबलिः – पृ. १३९
(७) शरद्दलम् – पृ. १८३
(८) तापसस्य पारितोषिकम् – पृ. २९
(९) तत्रैव – पृ.२९
(१०) परित्यक्ता – पृ. ३०

(११) निशीथबलिः – पृ. १४४
(१२) मत्सजीवी केवलम् – पृ. १६२
(१३) स्वाप्निकव्यामोहः, पृ. ८८
(१४) परित्यक्ता – पृ. ३९
(१५) शरद्दलम् – पृ. १९०
(१६) मिथ्याग्रहणम् – पृ. ४५
(१७) मायाजालम् – पृ. ८१
(१८) शरद्दलम् – पृ. १८१
(१९) हैमसमाधिः – पृ. ७३
(२०) तत्रैव – पृ. ७२
(२१) क्षणिकविभ्रमः – पृ. १२७
(२२) हैमसमाधिः – पृ. ६७–६८
(२३) मिथ्याग्रहणम् – पृ. ४८
(२४) स्वाप्निकव्यामोहः – पृ. ९३
(२५) मायाजालम् – पृ. ८१
(२६) प्रेमरसोद्रेकः – पृ. ११
(२७) विधवोद्वाहसङ्कटम् – पृ. १११
(२८) प्रेमरसोद्रेकः – पृ. १२
(२९) मिथ्याग्रहणम् – पृ. ४५
(३०) मायाजालम् – पृ. ७८
(३१) क्षणिकविभ्रमः – पृ. १२२
(३२) वृत्तशंसिच्छत्रम् – पृ.५८
(३३) शरद्दलम् – पृ. १८१
(३४) तत्रैव – पृ. १८४
(३५) तत्रैव – पृ. १८२
(३६) तापसस्य पारितोषिकम् – पृ. २९
(३७) मिथ्याग्रहणम् पृ. ४९
(३८) आत्मनिर्वसनम् पृ. १७३
(३९) तत्रैव पृ. १७३

(४०) मत्स्यजीवी केवलम्–पृ. १६७
(४१) मायाजालम् – पृ. ७८
(४२) हैमसमाधिः पृ. ७२
(४३) तापसस्य पारितोषिकम् पृ. २१
(४४) मिथ्याग्रहणम् पृ. ४५

# सन्दर्भग्रन्थसूचिः

(१) कथामुक्तावली – पं.क्षमा राव, संपा. डॉ. नंदा ज. पुरी, चारुल पब्लिकेशन, नागपुरम्, प्रथमावृत्तिः २०१२

(२) कथापञ्चकम् – पं. क्षमा राव, लीला दयाल, द्वितीय संस्करण, मुंबई १९६३

(३) काव्यप्रकाशः – मम्मट, विश्वेश्वरशास्त्री, ज्ञानमण्डल लिमिटेड, वाराणसी, षष्ठ संस्करण १९९८

(४) क्षमा देवी राव, राधावल्लभ त्रिपाठी, भारतीय साहित्य के निर्माता.

(५) ग्रामज्योति – पं. क्षमा राव, व्ही.एन. चटर्जी, कलकत्ता, प्रथमावृत्तिः १९५४

(६) सत्याग्रहगीता – पं. क्षमा राव, न.मा. त्रिपाठी पा.लि., प्रिन्सेस स्ट्रीट – मुम्बापुरी २, द्वितीयवृत्तिः १९५६

समाप्तेयं कथामुक्तावली।